तथापि । तवोपमा तव सादृश्यम् । जगति न प्रपेदे न प्राप्तम् । सर्वत्र भ्रमणानन्तरं अपि त्वत्सदृशो भ्रमरेण न कचिदपि प्राप्त इति आम्रवृक्षं प्रति कस्यचिदुक्तिरिति–मुख्योक्तिः । अन्योक्तिस्तु–हे राजन् सर्वत्रान्विष्यन्नपि याचकवर्गोऽयं त्वद्गुणसदृशमन्यं न प्राप्तवानिति राजानं प्रति कस्यचिदुक्तिः । पद्यमिदं रसगङ्गाधरे अनन्वयध्वन्युदाहरणे ( पृ. २०९ ) पठ्यते–तत्रोत्तरार्धं तु–' भेदेन भुवि न पेदे साधर्म्यं ते रसाल मधुपेन ' इति । अस्यार्थः–भेदेन साधर्म्यं सादृश्यं न पेदे न गृहीतम्–अर्थात् त्वद्भिन्नः त्वत्सदृशश्च न कोऽपि दृष्टः, अपि तु त्वत्सदृशः त्वत्तोऽभिन्नः, त्वमेवेत्यर्थः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन माकन्देन प्रस्तुतः कश्चिद् राजादिः गम्यते । आर्यावृत्तम् ॥ २७ ॥

तोयैरल्पैरपि[1] करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां
धारासारानपि विकिरता[2] विश्वतो वारिदेन ॥२८॥

१ बा.०– रति २.प०–A' F. वितरता.

तोयैरिति ॥ हे मालाकार मालाः पुष्पस्रजः करोतीति मालाकारः । भवता । भीमभानौ भीमः भीषणः भानुः सूर्यः यस्मिन् । एतादृशे । निदाघे ग्रीष्मकाले । करुणया दयया । अल्पैः कूपाद्युध्दृतैः । अपि । तोयैः जलैः । अस्य तरोः वृक्षस्य । या पुष्टिः पालनम् । व्यरचि विरचितम् कृतमित्यर्थः । सा पुष्टिः इह लोके । प्रावृषेण्येन प्रावृषि वर्षाकाले भवेन । वारां जलानाम् । धारासारान् धारासंपातान् विश्वतः सर्वतः । अपि । विकिरता प्रक्षिपता । वारिदेन मेघेन । जनयितुं उत्पादयितुं । शक्या किम्? अपि तु न शक्येत्यर्थः। ग्रीष्मर्तौ स्वल्पेनापि जलेन, हे मालाकार, यास्य वृक्षस्य त्वया पुष्टिः क्रियते सा वर्षाकाले प्रभूतैरपि जलैः मेघेन कर्तुं न शक्येति मुख्योक्तिः । अन्योक्तिस्तु—हे दयालो, उचिते समये स्वल्पमपि साहाय्यं त्वया कृतं, असमये कृतात् महतोऽपि साहाय्यात् श्रेयः, इति धनिकं प्रति कस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन मालाकारेण प्रस्तुतः कश्चित्समयोपकारी गम्यते । मन्दाक्रान्ता वृत्तम् । तल्लक्षणं च—' मन्दाक्रान्ता

जलधिषडगैम्भौ नतौ ताद्गुरू चेत्' इति ॥ २८ ॥

आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा
वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः।
एवं धन्वनि[1] चम्पकस्य सकले संहारहेतावपि
त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥२९॥

१. बा०—धुन्वति.

आरामेति ॥ आरामाधिपतिः आरामस्य उद्यानस्य अधिपतिः पालकः। विवेकविकलः विचारशून्यः। नूनं निश्चितं अस्तीति शेषः। रसा पृथ्वी। नीरसा निर्गताः रसाः जलानि यस्याः सा शुष्का इत्यर्थः। वात्याभिः वातसमूहैः। दश दिशः। परुषीकृताः रूक्षीकृताः। चण्डातपः चण्डः तीव्रः आतपः, अथवा चण्डः आतपो यस्य स सूर्यः। दुःसहः असह्यः त्वम्। धन्वनि मरुप्रदेशे। चम्पकस्य तन्नामकवृक्षस्य। सकले समग्रे। संहारहेतौ नाशकारणे उपस्थिते इति शेषः। अपि। हे तोयद मेघ। अमृतेन अमृतरूपेण जलेन। सिंचन्, चम्पकमिति शेषः। वेधसा ब्रह्मणा त्वम्। कुतोऽपि। आविष्कृतः प्रकटीकृतः। मरुभूमौ चम्पकस्य सर्वाणि नाशकारणान्युपस्थितानि—उद्यानपालकः विचारहीनः, पृथ्वी निर्जला, प्रचण्डवातैः सर्वासु दिक्षु रूक्षत्वमापादितं, सूर्यस्यातपश्च असह्यः—एतादृशे समये ब्रह्मणा जलवर्षणेन चम्पकं प्रत्युज्जीवयन् दयालुर्मेघः समुत्पादितः—इति मुख्योक्तिः। अन्योक्तिस्तु—सकलेऽपि नाशहेतौ अतीव विपन्नं प्रति दयां दर्शयसीति कंचिदुपकारिणं प्रति कस्यचिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन मरुदेशस्थितेन चंपकेन प्रस्तुतः कश्चित् विपद्ग्रस्तः गम्यते, तोयदेन च कश्चिद् दयालुः। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना[1]
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः।
लुठन्मुक्ताभारे[2] भवति परलोकं गतवतो[3]
हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ ३० ॥

[1] बा० °हृदयाः. [2] बा०—स्खलन्मुक्ताभारे. [3] बा०—गतवति.

नेति ॥ यत्र हरेः सिंहस्यद्वारे। अतिभयभ्रान्तनयनाः अतिभयेन

अतुलभीत्या भ्रान्तानि घूर्णितानि नयनानि येषां ते । **गलद्दानोद्रेकभ्रमदलिकदम्बाः** गलत् स्रवत् यद्दानं गजमदः तस्य उद्रेकः बाहुल्यं तेन भ्रमन्तः अलीनां भ्रमराणां कदम्बाः समूहाः येषु ते । **करटिनः** गजाः । स्थेमानं स्थिरत्वं न दधुः धारयामासुः । तत्र । **परलोकं गतवतः** मृतस्य । हरेः सिंहस्य । लुठन्मुक्ताभारे लुठन्तः मुक्तानां भाराः यस्मिन् तस्मिन् । द्वारे । शिव शिवेति खेदे । शिवानां शृगालानां **कलकलः** कोलाहलः । भवति । यस्मिन् सिंहद्वारे पुरा मत्ता अपि गजा भयेन स्थातुं नाशक्नुवन् तत्रैवाद्य सिंहमरणानन्तरं शृगालानां हाहारवः श्रूयत इति–मुख्योक्तिः । अन्योक्तिस्तु–कस्यचित्पौरुषयुक्तस्य नरस्य मृत्योरनन्तरं तस्य गृहे क्षुद्रा अपि जना आधिपत्यं लभन्ते । **अप्रस्तुतप्रशंसालङ्कारः** । अत्राप्रस्तुतेन सिंहेन प्रस्तुतः कश्चिन्महासत्त्वो गम्यते, शृगालैश्च क्षुद्रा नराः । शिखरिणी वृत्तम् । लक्षणं तु प्रागुक्तमेव ॥ ३० ॥

दधानः प्रेमाणं तरुषु समभावेन विपुलं[1]
न मालाकारोऽसावकृत करुणां बालबकुले ।
अयं तु द्रागुद्यत्कुसुमनिकराणां परिमलै–
र्दिगन्तानातेने[2] मधुपकुल[3]झङ्कारभरितान् ॥३१॥

[1] बा०–विपुलं. [2] प०–Cनालेभे. [3] प०–H°कल°.

दधान इति ॥ असौ **मालाकारः** उद्यानपालकः । **तरुषु** वृक्षेषु । **समभावेन** समदृष्ट्या । **प्रेमाणं** स्नेहं । **दधानः** धारयन् । **बालबकुले** नवीने बकुलद्रुमे । **विपुलां** महतीं । **करुणां** दयां । **न अकृत** नाकरोत् । **अयं** बकुलः । **तु** । **द्राक्** शीघ्रं । **उद्यत्कुसुमनिकराणां** उद्यन्ति आविर्भवन्ति यानि कुसुमानि तेषां निकराणां समूहानां । **परिमलैः** मनोहरगन्धैः । **मधुपकुलझङ्कारभरितान्** मधुपानां भ्रमराणां कुलं समूहः तस्य झङ्कारेण गुञ्जितेन भरितान् पूर्णान् । **दिगन्तान्** दिग्विभागान् । **आतेने** चकार । मालाकारः सर्वेषु तरुषु समदृष्टिः, सचाधिकं प्रयत्नमपेक्षमाणे बालकेसरवृक्षे न विशेषं यत्नमदर्शयत्, किन्तु वृक्षोऽयं तथापि स्वसौरभैः सर्वाः दिशः पूरयतीति–मुख्योक्तिः । अन्योक्तिस्तु—समदृष्टित्वात् राज्ञोपेक्षितः, किन्तु मृदुत्वात्प्रयत्नाधिक्यमपेक्षमाणः गुणवान् सेवकः स्वगुणैर्दिशः पूरयत्येव ।

अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन मालाकारेण प्रस्तुतः कश्चिद्राजा गम्यते, बकुलेन च कश्चिद्गुणवान् सेवकः । शिखरिणी वृत्तम् ॥ ३१ ॥

मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला
वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।
एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥३२॥

मूलमिति॥ हे तरुपते वृक्षराज । तव मूलं । अतीव अत्यन्तम् । स्थूलं महत् । तथा बन्धनदृढं बन्धनेन वेष्टनेन दृढं अचलम् । शाखाः शतं शतशः बह्वय इत्यर्थः तथा मांसलाः पुष्टाः । दुर्गमहीधरे दुर्गः दुःखेन गन्तुं शक्यः महीधरः पर्वतः,तस्मिन् । वासः स्थितिः। इत्थम् । तव कुत्र कस्मात् । भीतिः भयम् । किंतु । ज्वालालीवलयीभवन् ज्वालानां शिखानां आलीभिः पङ्क्तिभिः वलयीभवन् मण्डलीभवन् । अयं एकः । अकरुणः निर्दयः । घस्मरः भक्षकः । दावानलः वनवह्निः । मम स्वान्ते मानसे । आधिज्वरं आधेः चिन्तायाः ज्वरं संतापम् । मनाक् ईषत् । जनयति उत्पादयति । दृढमूलस्य शाखापरिवृतस्य पर्वतोपरिस्थितस्य वृक्षस्य न किंचिद् भयकारणं पश्यामः केवलं सर्वभक्षकोऽयं ज्वालामंडलैः सर्वतः परिवृण्वन् वनवह्निरस्माकं चेतसि चिन्तामुत्पादयतीति—मुख्योक्तिः । अन्योक्तिस्तु—सर्वथा सुरक्षितस्य सर्वसुखोपेतस्यापि नरस्य कुतोऽप्यकस्माद् भयमुत्पद्यते । अप्रस्तुतप्रशंसालङ्कारः अत्राप्रस्तुतेन तरुपतिना प्रस्तुतः कश्चित्सर्वथा सुरक्षितो गम्यते, दावानलेन चाकस्मिकी विपत्तिः । शार्दूलविक्रीडितं वृत्तम् ॥३२॥

ग्रीष्मे भीष्मतरैः[1] करैर्दिनकृता दग्धोऽपि यश्चातक-
स्त्वां ध्यायन् घन वासरान् कथमपि द्राघीयसो नीतवान् ।
दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि[2]
स्वीचक्रे करकानिपातन[3] कृपा तत्कं प्रति ब्रूमहे ॥३३॥

१. बा०–ग्रीष्मतरैः २. पु०–A. F.अपि. ३. पु०–A. F.°भिघातनकृपा°

ग्रीष्म इति ॥ हे घन मेघ । यः चातकः । ग्रीष्मे निदाघे । भीष्मतरैः शरदाद्यपेक्षया तीक्ष्णतरैः । करैः किरणैः कृत्वा । दिनकृता सूर्येण । दग्धोऽपि तप्तोपि । त्वां ध्यायन् चिन्तयन् । द्राघीयसः दीर्घतरान् ।

वात्सरान् दिवसान्। कथमपि अतिकाठिन्येन। नीतवान् गमितवान्। तृष्णाव्याकुलोऽपि अन्यतो जलं न जग्राह, किंतु त्वय्येव बद्धाशस्तस्थौ—इत्यर्थः। तस्मिन् चातके। इदानीं दैवात् भाग्यात्। लोचनगोचरेण नयनपथमागतेन। भवता। यदि। करकानिपातनकृपा करकाणां वर्षोपलानां निपातनस्य प्रक्षेपणस्य कृपेति सोल्लुण्ठम्। स्वीचक्रे स्वीकृता। तत् तर्हि। कं प्रति ब्रूमहे वदामः। सूर्यस्य तीव्रकिरणैर्ग्रीष्मे संतापितोऽपि चातकोऽन्यस्माज्जलमगृह्णन् त्वय्येव बद्धाशोऽतिष्ठत्—एतादृशेऽपि त्वद्भक्ते, हे मेघ, यदि करकावर्षणं कुरुषे, तर्हि कोऽन्यश्चातकहितकारी अस्माभिरन्वेष्टव्य इति मुख्योक्तिः। अन्योक्तिस्तु—अनन्यपरायणे सर्वथानुरक्ते भक्ते यदि कश्चित्समर्थः प्रभुः उपकारस्थानेऽनुपकारं करोति तर्ह्येतदनुचितम्। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन मेघेन प्रस्तुतः कश्चित्समर्थः प्रभुर्गम्यते, चातकेन चानन्यभक्तःसेवकः। शार्दूलविक्रीडितं वृत्तम् ॥३३॥

दवदहनजटालज्वालजालाहतानां
परिगलितलतानां म्लायतां भूरुहाणाम्।
अयि जलधर शैलश्रेणिशृङ्गेषु तोयं
वितरसि बहु कोऽयं श्रीमदस्तावकीनः ॥३४॥

दवदहनेति ॥ अयि जलधर मेघ। दवदहनजटालज्वालजालाहतानाम् दवदहनस्य दावानलस्य जटालानां दीर्घाणां ज्वालानां शिखानां जालैः समूहैः आहतानाम् ताडितानाम्। परिगलितलतानां परिगलिताः लताः येभ्यः तेषाम्। भूरुहाणां वृक्षाणाम्। म्लायतां ग्लानिं प्राप्नुवतां सताम्। अनादरे षष्ठी। एतादृशान् वृक्षान् अनादृत्येत्यर्थः। शैलश्रेणिशृंगेषु शैलानां पर्वतानां श्रेणिः पंक्तिः तस्याः शृंगेषु शिखरेषु बहु प्रभूतं तोयं जलम्। वितरसि वर्षसि अयं कः। तावकीनः त्वदीयः। श्रीमदःसंपदुन्मादः। अतीव निंदनीयोऽयं तव विकारः। दावानलदग्धाः म्लायन्तो वृक्षाः जलमपेक्षन्ते, किन्तु ताननादृत्य यत् त्वं पर्वतशिखरेषु वर्षसि तन्महदनौचित्यं तवेति मेघं प्रति कस्यचिदुक्तिरिति—मुख्योक्तिः। अन्योक्तिस्तु—पात्रे दानमुचितम्, किन्तु सत्यपि विपद्ग्रस्ते अत एव सुतरां साहाय्ययोग्ये पात्रे यद्धनगर्वगर्विता अपात्रे धनं विसृजन्ति तदतीवानुचितमिति। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन

वृक्षेण प्रस्तुतः कश्चिदापन्नो गम्यते, मेघेन च धनगर्वगर्वितः । मालिनी वृत्तम् ॥ ३४ ॥

शृण्वन् पुरः परुषगर्जितमस्य हन्त
रे पान्थ विह्वलमना न मनागपि स्याः ।
विश्वार्तिवारणसमर्पितजीवनोऽयं
नाकर्णितः किमु सखे भवताम्बुवाहः ॥३५॥

शृण्वन्निति ॥ रे पान्थ पथिक । हन्तेति खेदे । अस्य मेघस्य । पुरः अग्रे वर्तमानं । परुषगर्जितं दुःसहां गर्जनाम् । शृण्वन् । मनाक् ईषत् । अपि। विह्वलमनाः व्याकुलचित्तः। न स्याः मा भूः । हे सखे । भवता । अयम् । विश्वार्तिवारणसमर्पितजीवनः विश्वस्य सर्वस्य जगतः आर्तेः पीडायाः वारणाय अपहरणाय समर्पितं दत्तं जीवनं जलं पक्षे प्राणाः येन सः अम्बुवाहः मेघः । न आकर्णितः न श्रुतः । किमु । अपि तु श्रुत एवेत्यर्थः । हे पथिक अस्य मेघस्य कठोरगर्जनां श्रुत्वा व्याकुलचित्तो मा भुः, किं त्वया न श्रुतं यदेष संसारसंतापहरणाय स्वजलं वर्षति—इति मुख्योक्तिः । अन्योक्तिस्तु—हे याचक, आपाततः कटुरप्ययं दयालुरेव दाता, असौ स्वप्राणदानेनापि परसंतापहरणे सर्वदा प्रस्तुत इति । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन मेघेन प्रस्तुतः कश्चित् प्रत्यक्षकटुः किन्तु दयार्द्रहृदयो दाता गम्यते । वसंततिलका वृत्तम् ॥ ३५ ॥

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं तु[१] लोकोत्तरं
कीर्तिः किं च दिगङ्गनाङ्गणगता किं त्वेतदेकं शृणु ।
सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरान्
उज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥३६॥

[१] बा०—नु.

सौरभ्यमिति ॥ हे श्रीखण्ड चन्दन । ते सौरभ्यं परिमलः । भुवनत्रये लोकत्रये । अपि । विदितं ज्ञातं प्रसिद्धमित्यर्थः । शैत्यं संतापहारकं शीतलत्वं तु । लोकोत्तरं अलौकिकम् । किं च । ते कीर्तिः यशः । दिगङ्गनाङ्गणगता दिशः पूर्वाद्याः एव अङ्गनाः स्त्रियः तासां अङ्गणं चत्वरं तत्र गता सर्वदिग्व्यापिनीत्यर्थः। किंतु । एतत् एकं दोषसूचकं वचः। शृणु ।

इयं ते कोटरेषु। गरलज्वालां विषज्वालां। उज्झन्ती त्यजन्ती। द्विजिह्वावली द्विजिह्वानां सर्पाणां अवली पंक्तिः। सर्वान् एव सुन्दरान् गुणान्। खलु निश्चयेन। निगिरति ग्रसति। हे चन्दन, त्वयि सौरभ्यशैत्यादयो गुणा विद्यन्ते, सर्वत्र च प्रसिद्धोऽसि, किन्तु येयं विषमुद्वमन्ती सर्पावली त्वया स्वकोटरे स्थापिता सा सर्वानपि ते गुणान् लोपयतीति--मुख्योक्तिः। अन्योक्तिस्तु—रम्यत्वादिगुणैः सर्वत्र ख्यातकीर्तिरपि दुष्टजनाश्रयदानेन महदनौचित्यं करोषीति गुणवन्तं प्रति कस्यचिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन चन्दनेन प्रस्तुतः कश्चिद्गुणवानपि खलजनाश्रयदाता गम्यते। शार्दूलविक्रीडितं वृत्तम्॥ ३६॥

नापेक्षा[1] न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः।
तथापि हरते तापं लोकानामुन्नतो घनः॥३७॥

[1] बा०—नापेक्ष्य.

नापेक्षेति॥ अपेक्षा प्रत्युपकारादिवांछा। न विद्यत इति शेषः। न च दाक्षिण्यं परचित्तानुवर्तनम्-अच्युतरायस्तु 'दाक्षिण्यं समुद्रोदकमादाय दातृत्वात्स्वतः सामर्थ्यमपि नास्तीत्यर्थः' न प्रीतिः स्नेहः। न च संगतिः सहवासश्चापि नास्ति। तथापि उन्नतः उच्चः, पक्षे उदारधीः। घनः मेघः। लोकानां तापम्। हरते अपाकरोति। योऽयं उच्चदेशस्थो मेघो जनानां संतापमपहरति,न तस्य लोकैः सह कापि मैत्री न च तेभ्यः किमपि वांछति-इति मुख्योक्तिः। अन्योक्तिस्तु—उदाराः पुरुषाः विनापि प्रत्युपकारादिवांछां निस्वार्थमेव च परहितमाचरन्तीति। अत्र विभावनालङ्कारः, अप्रस्तुतप्रशंसा च। विनापि कारणं यत्र कार्योत्पत्तिः सा विभावना—अत्रापि विनापि अपेक्षां मेघः तापं हरति। विभावनालक्षणं च 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति। अत्राप्रस्तुतेन मेघेन प्रस्तुतः कश्चिन्निरपेक्षः परोपकारी गम्यते। उभयोश्चालङ्कारयोः संसृष्टिः। अनुष्टुभ्वृत्तम्॥ ३७॥

[1]समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं[2]
निवासः[3] पद्मायाः सुरहृदयहारी परिमलः।
गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव
द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम्॥३८॥

१. पा०—F. reads the first line thus—समुत्पत्तिः पद्मारमणपदपङ्कजनखात्। २. पा०—F. G. निवसतिः। ३. पा०—C. E. H. विलासः.

समुत्पत्तिरिति ॥ हे अम्बुज कमल तव स्वच्छे निर्मले । सरसि तडागे । समुत्पत्तिः उद्भवः । एतेन निर्मलकुलोत्पत्तिः सूच्यते । हरिहस्ते हरेः विष्णोः हस्ते । निवसनं निवासः । विष्णोः शङ्खचक्रगदापद्मधारित्वात् । यद्वा—हरेः सूर्यस्य हस्ते किरणे निवसनं विकासरूपा स्थितिः । सूर्योदये कमलानां विकसनात् । पद्मायाः लक्ष्म्याः निवासः वासस्थानम् । परिमलः मनोहरगन्धः । सुरहृदयहारी देवानां मनोहरणशीलः । एतैः पूर्वोक्तैः अन्यैरपि कामिनीमुखसादृश्यादिभिः गुणैः ललितस्य सुन्दरस्य । तव । यदि द्विजोत्तंसे पक्षिश्रेष्ठे हंसे—ब्राह्मणे च गम्यते । रतिः प्रीतिः । तर्हि इयं तव अतीव उन्नतिः उत्कृष्टता भवतीति शेषः । हे कमल, स्वच्छे तडागे समुत्पन्नः,विष्णुहस्तनिवासी, लक्ष्मीनिवासस्थानं तथा देवानामपि मनो हरसि स्वगन्धेन—सत्स्वप्येतादृशेषु गुणेषु यदि हंसेष्वादरं दर्शयसि तर्हि सुतरां प्रशंसनीयस्त्वमिति—मुख्योक्तिः । अन्योक्तिस्तु—श्रेष्ठकुलोत्पन्नत्वादिगुण-विशेषैर्युक्तो नरो यदि ब्राह्मणभक्तोऽपि तर्हि सुगन्धयुक्तसुवर्णवत् सुतरां प्रशंसनीयः । अप्रस्तुप्रतशंसालङ्कारः । अत्राप्रस्तुतेन कमलेन प्रस्तुतः कश्चित् सद्गुणोपेतो नरो गम्यते । केचित्तु—‘ समुत्पत्तिः पद्मारमणपदपद्मा-मलनखात् ’ इति प्रथमं पादं पठन्ति । गंगालहरीस्थस्य (२१) ‘ समुत्पत्तिः पद्मा ’ इत्यादिपद्यस्य प्रथमपादविनिमयजन्या भ्रान्तिरियम् । अस्य पाठस्या-त्रासंगतत्वात् । । शिखरिणी वृत्तम् ॥३८॥

साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमा[1]
नीरे नीरचरैः समं स भगवान्निद्राति नारायणः ।
एवं वीक्ष्य तवाविवेकमपि[2] च प्रौढिं परामुन्नतेः
किं निंदाम्यथवा स्तवानि[3] कथय क्षीरार्णव त्वामहम् ॥३९॥

१. बा०–बालार्कबिम्बोपमा. २. पा०–A. F. अथ. ३. पा०–H. निन्दामि. ४. पा०–A. स्तवीमि and H. स्तवामि

साकमिति ॥ हे क्षीरार्णव हे पयोधे । तव तीरे । ग्रावगणैः पाषाण-खण्डसमूहैः । साकं अर्कबिम्बोपमाः अर्कस्य सूर्यस्य बिंबः मंडलः उपमा येषां ते सूर्यमंडलवद्दीप्ताः । मणयः लुठन्ति—इतस्ततो विकीर्णा इत्यर्थः । नीरे जले च । नीरचरैः मत्स्यादिभिर्नीचैः जलचरैः । समं सह । भगवान्

नारायणः विष्णुः। निद्राति शेते। एवं तव अविवेकं मणिपाषाणयोरेकत्र विकीर्णत्वात् विचाररहित्यम्। अपि च उन्नतेः महत्त्वस्य। परां उत्कृष्टां प्रौढिं गुरुतां–नारायणाश्रयभूतत्वात् च वीक्ष्य दृष्ट्वा। अहं त्वां किं निन्दानि अथवा स्तवानि प्रशंसानि इति कथय ब्रूहि। हे समुद्र, तव तीरे मणयः पाषाणखण्डाश्च एकत्रैव विकीर्णाः, त्वदन्तश्च सकललोकपूज्यो भगवान् शेते, एवं विवेकराहित्यं उन्नतत्वं चेत्युभयमपि त्वयि दृष्ट्वा–निन्दां करोमि स्तुतिं वेति न जानेऽहमिति–मुख्योक्तिः। अन्योक्तिस्तु–नीचे महति च समदृष्टित्वात् त्वं वर्णनातीत इति सत्पुरुषं प्रति कस्यचिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन समुद्रेण प्रस्तुतः कश्चित्समदर्शी गम्यते। शार्दूलविक्रीडितं वृत्तम्॥ ३९॥

किं खलु रत्नैरेतैः किं पुनरभ्रायितेन[१] वपुषा ते।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम्॥४०॥

[१]. पा०–A. F. किं खलु रत्नायितेन.

किमिति॥ हे अर्णव समुद्र। एतैः परिदृश्यमानैः रत्नैः किं फलम्। ते अभ्रायितेन अभ्रवन्मेघवदाचरितेन तद्वत् स्निग्धेनेत्यर्थः वपुषा शरीरेण। च किं फलम्। उभयमपि निष्प्रयोजनमेवेत्यर्थः। यत् यस्मात् तावकं तव। सलिलं जलं अपि। तृषितानां पिपासाकुलानाम्। वदनं मुखम्। न प्रयाति न गच्छति। हे समुद्र तव रत्नानि सुन्दरं शरीरं चेत्युभयमपि निष्फलम्, यतस्तव जलं अपि लोकानां पिपासापहरणे असमर्थमिति-मुख्योक्तिः। अन्योक्तिस्तु–यदि ते धनं अल्पमपि परोपकारं कर्तुमसमर्थं तर्हि महता ते धनेन सुन्दरेण च शरीरेण किं फलमिति कंचित् धनिकं प्रति कस्यचिदुक्तिः। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन समुद्रेण प्रस्तुतः कश्चिदनुपयुक्तधनो गम्यते। गीतिवृत्तम्॥ ४०॥

इयत्यां संपत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि[१] कासार सहसा।
निदाघे चण्डांशौ[२] किरति परितोऽङ्गारनिकरा[३]–
न्कृशीभूतः केषामहह परिहर्तासि खलु ताम्॥४१॥

१ पा०–A. यदि हरसि and F परिहरसि. २ पा०–F. चण्डांशोः, ३ बा.-- पा०–°निकरं.

इयत्यामिति ॥ हे कासार तडाग । अधुना त्वं सलिलानां जलानां । इयत्यां संपत्तो समृद्धौ । अपि । आर्तानां पीडितानां तृष्णयेति शेषः । तृष्णां पिपासां । यदि सहसा न हरासि न निवारयसि । तदा । निदाघे ग्रीष्मे । चण्डांशौ सूर्ये । अङ्गारनिकरान् अङ्गारवत् दाहकान् किरण-समूहान् । परितः सर्वतः । किरति क्षिपति सति । कृशीभूतः जलस्य शोषणेन कृशतामापन्नः । केषां खलु तां तृष्णां । परिहर्तासि अपनेष्यसि । केषांचिदपि पिपासां परिहर्तुं न शक्ष्यसीति भावः । अहह इतिखेदे । प्रभूत-जलसंपूर्णोऽपि यदि पिपासाकुलानां पीडां न नाशयसि तर्हि ग्रीष्मे जलाभावात् शुष्कस्त्वं केषां तृषामपनेष्यसीति सरोवरं प्रति कस्यचिदुक्तिः—इति मुख्योक्तिः। अन्योक्तिस्तु—प्रभूतधनधान्यसमृद्धोऽपि यदि त्वमधुना पीडितानां साहाय्यं नाचरसि, तर्हि दैवकोपात् क्षीणवित्तः कस्य सहायतां करिष्यसीति धनिकं प्रतिकस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन कासारेण प्रस्तुतः कश्चिद् व्ययमकुर्वाणो धनवान् गम्यते । शिखरिणी वृत्तम् ॥ ४१ ॥

अयि रोषमुरीकरोषि नो चे-
त्किमपि त्वां प्रति वारिधे वदामः ।
जलदेन तवार्थिना विमुक्ता[1]-
न्यपि तोयानि महान्न हा जहासि ॥ ४२ ॥

१ ब–अपिमुक्तानि.

अयीति ॥ हे वारिधे समुद्र । रोषं क्रोधम् । नो उरीकरोषि न स्वीकरोषि कुपितो न भवसि । चेत् यदि । त्वां प्रति किमपि हितं किन्तु कटु । वदामः उपदिशामः । तव अर्थिना याचकेन । जलदेन मेघेन । विमुक्तानि वृष्टानि तोयानि जलानि । महान् अपि सन् । न जहासि न त्यजसि । हा इति खेदे । त्वत्तो जलं गृहीत्वा मेघोऽन्येभ्यो ददाति, त्वं तु, हे समुद्र, तेभ्यः पुनर्गृह्णासि, अतीवानुचितमेतदिति समुद्रं प्रति कस्यचिदुक्तिरिति—मुख्योक्तिः । अन्योक्तिस्तु—याचकाय दत्तं धनं, तेन याचकेन अन्येभ्यः प्रतिपादितं त्वं पुनर्गृह्णासि—इति कृपणं प्रति कस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन समुद्रेण प्रस्तुतः कश्चित् कृपणो गम्यते । मालभारिणी-वृत्तम् । तल्लक्षणं च–‘ ससजाः प्रथमे पदे गुरू चेत् । सभरा येन च मालभारिणी स्यात् ’ इति ॥ ४२ ॥

न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः।
न युक्तमेतत्तु पुरो यदस्यास्तरङ्गभङ्गान्[1] प्रकटीकरोषि ॥४३॥

१. प–E तरंगलीलाम्.

नेति ॥ हे वर्षानदि—एतेन क्षणिकैश्वर्यत्वं सूचितं–ग्रीष्मे जलाभावात्। भवतीं त्वां। जह्नुजायाः जाह्नव्याः गङ्गायाः। स्रोतसि प्रवाहे। विशन्तीं प्रविशन्तीम्। वयं न वारयामः निषेधामः। एतत् वक्ष्यमाणम्। तु न युक्तं नोचितम्। यत् अस्या आश्रयदायिन्या भागीरथ्याः। पुरः अग्रे। तरङ्गभङ्गान् तरङ्गाणां भङ्गान् कौटिल्यानि—एतेन अहंकारजन्या भ्रूभेदा ध्वन्यन्ते प्रकटीकरोषि आविष्करोषि। हे वर्षाप्रवृद्धजले नदि गङ्गाया आश्रयं यदि गृह्णासि तर्हि नात्र कश्चिद्दोषः, किन्तु तत्र कुटिलतरंगाणामाविष्करणमयुक्तमिति नदीं प्रति कस्यचिदुक्तिरिति—मुख्योक्तिः। अन्योक्तिस्तु—महतामाश्रयग्रहणे न कश्चिद्दोषः, किन्तु तेषामग्रेऽहंकारप्रदर्शनमतीवानुचितमिति। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतया नद्या प्रस्तुतः कश्चिदाश्रयदातुः पुरतोऽहंकार दर्शयन् गम्यते। उपजातिवृत्तम् ॥ ४३॥

पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां
येनाघ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः।
तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति
त्वं चेदञ्चसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे ॥४४॥

पौलोमीति ॥ हे अम्बुज पौलोमीपतिकानने पौलोमी शची तस्याः पतिः इन्द्रः तस्य कानने वने नन्दन इत्यर्थः। विलसतां शोभमानानाम्। गीर्वाणभूमीरुहां भूम्यां रोहन्तीति भूमीरुहाः वृक्षाः गीर्वाणानां देवानां भूमीरुहाः देववृक्षाः;कल्पवृक्षा इति यावत्। येन मधुव्रतेन भ्रमरेण। आघ्रातसमुज्झितानि पूर्वं आघ्रातानि पश्चात् समुज्झितानि त्यक्तानि उच्छिष्टानीत्यर्थः। कुसुमानि पुष्पाणि। निर्जरैः देवैः। आजघ्रिरे घ्रातानि आस्वादितानीत्यर्थः। अद्य विधिवशात् दैवकोपवशात्। तव माध्वीकं मधु। आकाङ्क्षति वांछति सति। त्वं लोभं कृपणताम्। अञ्चसि गच्छसि। तदा त्वां प्रति किं ब्रूमहे किं कथयामः। हे कमल, यद्भुक्तोज्झितानि कल्पतरुपुष्पाणि देवैरप्यास्वाद्यन्ते स भ्रमरस्त्वां मधु याचते चेत्त्वया लोभो न कार्य इति भ्रमरं प्रति

कस्यचिदुक्तिरिति–मुख्योक्तिः । अन्योक्तिस्तु–दानयोग्ये सत्पात्रे धनलोभं कुर्वन्तं कृपणं प्रति कस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन भ्रमरेण प्रस्तुतः कश्चित् दानयोग्यो गम्यते, अम्बुजेन च कृपणः । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥४५॥

भुक्तेति ॥ रे राजहंस । यत्र सरोवरे । भवता मृणालपटली मृणालस्य बिसस्य पटली संघः । भुक्ता आस्वादिता । अम्बूनि जलानि निपीतानि । तथा च नलिनानि पद्मानि । निषेवितानि उपभुक्तानि । तस्य सरोवरस्य केन कृत्येन कर्मणा । कृतोपकारः कृतः उपकारः येन सः । भवितासि भविष्यसि । इति वद ब्रूहि । हे राजहंस यस्मात्सरोवरादुपकारशतं प्राप्तवानसि तस्य कथं प्रत्युपकारं करिष्यसीति राजहंसं प्रति कस्यचिदुक्तिरिति –मुख्योक्तिः । अन्योक्तिस्तु–कृतसहस्रोपकारस्य प्रत्युपकारं कर्तुमसमर्थं प्रति कस्यचिदुक्तिरियम् । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन राजहंसेन प्रस्तुतः कश्चिदुपकृतो गम्यते । वसंततिलका वृत्तम् ॥ ४५ ॥

प्रारंभे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ।
तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति
त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥४६॥

प्रारंभ इति ॥ हे चञ्चरीक भ्रमर । कुसुमाकरस्य वसन्तस्य प्रारंभे । यस्य रसालशाखिनः आम्रवृक्षस्य । उल्लसन्मंजरीपुंजे उल्लसन्त्यः विकसन्त्यः या मञ्जर्यः कुसुमस्तबकाः तेषां पुंजे राशौ । परितः सर्वतः । मञ्जुलगुञ्जितानि मञ्जुलानि मनोहराणि गुञ्जितानि । रचयन् कुर्वन् । तान् अवर्णनीयान् । उत्सवान् महान् । आतनोः व्यरचयः । अद्य । दैवात् प्रतिकूलभाग्यात् । तस्मिन् रसालशाखिनि आम्रवृक्षे । कृशां हीनाम् । दशां अवस्थां । अञ्चति गच्छति सति । त्वं विनयं दाक्षिण्यं । मुञ्चसि चेत् तर्हि त्वदन्यः

कः नीचः अस्ति । न कोऽपीत्यर्थः । हे भ्रमर, समृद्धावस्थायां आम्रवृक्षस्य तत्र महान्तमुपभोगमकरोः, अद्य दैवाद्दुर्दशामापन्ने तस्मिन्नाम्रे यदि त्वमनादरं दर्शयसि तर्हि नीचतमोऽसीति भ्रमरं प्रति कस्यचिदुक्तिरिति–मुख्योक्तिः । अन्योक्तिस्तु–यस्य संपन्नावस्थायां आनन्दोपभोगः कृतस्तस्मिन् विपन्ने अनादरं दर्शयन्तं कंचित् कृतघ्नं प्रति कस्यचिदुक्तिः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन भ्रमरेण प्रस्तुतः कश्चित्कृतघ्नो गम्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

एणीगणेषु गुरुगर्वनिमीलिताक्षः[1]
किं कृष्णसार खलु खेलसि काननेऽस्मिन् ।
सीमामिमां[2] कलय भिन्नकरीन्द्रकुम्भ-
मुक्तामयीं हरिविहारवसुंधरायाः ॥४७॥

१.बा०- निमीलिताक्ष । प०–H. निमिलिताक्षम् । २.प० H. शोभामिमाम् ।

एणीगणेष्विति ॥ हे कृष्णसार मृगविशेष । गुरुगर्वनिमीलिताक्षः गुरुणा महता गर्वेण कस्तूर्याद्यभिमानेन निमीलिते अक्षिणी यस्य सः । अस्मिन् कानने वने । एणीगणेषु एणीनां मृगीणां गणेषु समूहेषु । किं खलु खेलसि । इमां स्वक्रीडाभूमिम् । हरिविहारवसुंधरायाः हरेः सिंहस्य विहारस्य क्रीडायाः वसुंधरायाः भूमेः । भिन्नकरीन्द्रकुम्भमुक्तामयीं भिन्नाः पाटिताः विदारिताः वा करीन्द्राणां गजेन्द्राणां कुम्भाः कपोलाः तेषां याः मुक्ताः मौक्तिकानि तैः पूर्णाम् । सीमां मर्यादाम् । कलय अवधारय । हे हरिण यत्र त्वमभिमानभरितो रूसे, सेयं हस्तिकपोलविदारणक्षमस्य सिंहस्य क्रीडाभूमिरिति हरिणं प्रति कस्यचिदुक्तिरिति–मुख्योक्तिः । अन्योक्तिस्तु–तेजस्विविहारयोग्ये स्थले न क्षुद्रैर्मदः कार्य इति । अप्रस्तुतप्रशंसालङ्कारः अत्राप्रस्तुतेन मृगेण प्रस्तुतः कश्चित् क्षुद्रो गम्यते, सिंहेन च तेजस्वी. वसंततिलका वृत्तम् ॥ ४७ ॥

जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः ।
करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥४८॥

जठरेति ॥ करिणां गजानां । अरिणा शत्रुणा नाशकेनेति यावत् । साभिप्रायमिदं विशेषणम् । जठरज्वलनज्वलता जठरस्य उदरस्य ज्वलनः

अग्निः तेन ज्वलता दह्यमानेन । अपि—अत्यन्तबुभुक्षितेनापीत्यर्थः । अपगत-शङ्कं अपगता शङ्का भीतिः यस्मिन् कर्मणि यथा स्यात्तथा । पुरः अग्रतः । समागता समायाता । अपि । हरिणाली मृगपंक्तिः। कथं हन्यताम् । नु इति वितर्के । अतिबुभुक्षितोऽपि सिंहः पुर आगतान् मृगानतुल्यबलतया नैव हन्तीति—मुख्योक्तिः । अन्योक्तिस्तु—व्यसनपतिता अपि तेजस्विनो हीन-बलान्नाक्रमन्त इति । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन सिंहेन प्रस्तुतः कश्चिदतुलपराक्रमः पुरुषो गम्यते, मृगैश्च हीनबला नराः । आर्या वृत्तम् ॥ ४८ ॥

येन भिन्नकरिकुम्भ[1]विस्खलन्मौक्तिकावलिभिरञ्चिता मही ।
अद्य तेन हरिणान्तिके कथं कथ्यतां नु हरिणा पराक्रमः ॥४९॥

[1]. बा०—°कुम्भविपज्जत्°

येनेति ॥ येन । हरिणा सिंहेन । भिन्नकरिकुम्भविस्खलन्मौक्तिकाव-लिभिः भिन्नाः विदारिताः ये करिकुम्भाः गजकपोलाः तेभ्यो विस्खलन्ति पतन्ति मौक्तिकानि तेषां अवलिभिः पंक्तिभिः । मही पृथ्वी । अञ्चिता पूजिता अलंकृतेति यावत् । तेन हरिणा अद्य । हरिणान्तिके हरिणानां समीपे । स्वकीयः पराक्रमः शौर्यं । कथं केन प्रकारेण । कथ्यतां नु केनापि प्रकारेण वक्तुं न शक्यत इत्यर्थः । यः सिंहः पूर्वं गजकपोलान्विदार्य स्वपराक्रमं दर्शितवान्, अधुना दुर्दैवात् स क्षुद्रमध्यपतितः स्वकीयं पूर्वपरा-क्रमं असमेषु वर्णयितुमप्यसमर्थ इति—मुख्योक्तिः । अन्योक्तिस्तु—महापराक्रम-शाली क्षुद्रबलेषु स्वविक्रमं प्रकाशयितुमसमर्थ इति। अप्रस्तुतप्रशंसालङ्कारः अत्राप्रस्तुतेन सिंहेन प्रस्तुतः कश्चिन्महापराक्रमो गम्यते। रथोद्धता वृत्तम् । तल्लक्षणं च—' रो नराविह रथोद्धता लगौ ' इति ।

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि ।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥५०॥

स्थितिमिति ॥ रे मदान्धेक्षण मदेन गर्वेण अन्धे ईक्षणे नयने यस्य तत्संबुद्धौ । गजश्रेणीनाथ गजयूथपते । सखे मित्र । त्वं इह जटिलायां

लतादिबाहुल्येन निबिडायां । वनभुवि काननप्रदेशे । क्षणमपि । स्थितिं अवस्थानम् । नो दध्याः मा कुरु । असौ कुम्भिभ्रान्त्या कुम्भिनाल करिणां भ्रान्त्या-गजोऽयमिति शङ्कया । खरनखरविद्रावितमहागुरुग्रावग्रामः खराः तीक्ष्णाः ये नखराः नखाः तैः विद्राविताः विदारिताः महान्तः गुरवः अत्यन्तस्थूलाः ग्रावाणः पाषाणखण्डाः तेषां ग्रामः समूहो येन तादृशः–तीक्ष्णनखविपाटितशिलाखण्डः । हरिपतिः सिंहराजः । गिरिगर्भे पर्वतकंदरे स्वपिति । निद्राभंगे सिंहोऽयं हनिष्यति त्वां, हस्तिशंक्या पर्वतानपि विदारयत्येषः, अतो गर्वं त्यक्त्वा क्षिप्रं दूरमितोव्रजेति करिणं प्रति कस्यचिदुक्तिरिति मुख्योक्तिः । अन्योक्तिस्तु–यावत् पराक्रमशाली शत्रुर्न पश्यति तावत् दुर्बलेन नरेण तत्स्थानं गर्वं च परित्यज्य दूरे पलायनं कर्तव्यम् । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन गजेन प्रस्तुतः कश्चिद् दुर्बलो नरो गम्यते, सिंहेन च तेजस्वी रिपुः । शिखरिणी वृत्तम् ॥ ५० ॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनंधयो
भविता करेणुपरिशेषिता मही ॥५१॥

गिरीति ॥ हे गजराजपोत करीन्द्रशिशो । गुरुगर्वगुम्फितः गुरुणा गर्वेण अभिमानेन गुम्फितः वेष्टितः, पूरित यति यावत् । गिरिगह्वरेषु पर्वतकन्दरेषु । कदापि न संचरेः भ्रमणं मा कुरु । यदि स्तनंधयः स्तनं धयते पिबति इति स्तनंधयः स्तनपायी अपि । हरिशिशुः सिंहशावः । बुध्यते जागर्ति । तर्हि । मही पृथ्वी । करेणु परिशेषिता करेणवः हस्तिन्यः एव परिशेषिता हननादवशेषिताः यस्यां सा । शूरैः स्त्रीणामवध्यत्वात्–गजांस्तु सर्वानेव हनिष्यत्यसौ सिंहशिशुः । भविता भविष्यति । हे हस्तिकलभ, पर्वतकंदरासु निर्भीकेण न भ्रमितव्यम्, अन्यथा अत्यल्पवया अपि सिंहशिशुः अखिलान् गजानुन्मूलयिष्यति–इति मुख्योक्तिः । अन्योक्तिस्तु— तेजस्वी शत्रुः बालोऽपि सबलान् शत्रून् उन्मूलयितुं समर्थः । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन सिंहशिशुना प्रस्तुतस्तेजस्वी बालो गम्यते । मञ्जुभाषिणी वृत्तम् । तल्लक्षणं च–' सजसा जगौ भवति मञ्जुभाषिणी ' इति ॥ ५१ ॥

निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्रापि निदधे ।
इदं को जानीते यदयमिह कोणान्तरगतो
जगज्जालं कर्ता कुसुमभर[1]सौरभ्यभरितम् ॥५२॥

[1] पु०-H. कुसुमतति.°

निसर्गादिति ॥ निसर्गात् स्वभावात् । आरामे उपवने । तरुकुलसमारोपसुकृती तरूणां वृक्षाणां कुलस्य समूहस्य समारोपः संरोपणं तेन सुकृतं पुण्यं अस्यास्तीति । कृती कुशलः । अपि । मालाकारः उद्यानपालकः । कुत्रापि उपवनस्य यस्मिन् कस्मिन्नपि प्रदेशे । बकुलं तन्नामकं वृक्षं । निदधे स्थापितवान् । कुशलोऽपि बकुलवृक्षमितरवृक्षवद्यत्र कुत्रापि चिक्षेपेत्यर्थः। एतेनास्य विवेकराहित्यं सूचितम् । इदं पुनः को जानीते यत् कोणान्तरगतः उद्यानैकदेशे स्थितः । अपि । अयं बकुलः । इह । जगज्जालं विश्वमंडलं । कुसुमभरसौरभ्यभरितं कुसुमानां यो भरः अतिशयः तस्य सौरभ्येण सुगन्धेन भरितं पूर्णम् । कर्ता करिष्यति । यद्यपि विवेकशून्यो मालाकार उद्यानस्य कोणे बकुलं विहितवान्, तथाप्यसौ बकुलः स्वपुष्पपरिमलैः जगत्पूरयति-इति । मुख्योक्तिः । अन्योक्तिस्तु—विवेकहीनैरविशिष्टस्थाने स्थापितोऽपि गुणवान्नरः स्वगुणैरात्मसौभाग्यं प्रकटयति । अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन बकुलेन प्रस्तुतः कश्चिद् गुणवान् गम्यते । शिखरिणी वृत्तम् ॥ ५२ ॥

यस्मिन् खेलति[1] सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे ।
सोऽयं तुङ्गतिमिङ्गिलाङ्कवलीकारक्रियाकोविदः
क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥५३॥

[1]. पु०, बं०, बा०–बेल्लति which means चलति.

यस्मिन्निति ॥ यस्मिन् राघवे । खेलति क्रीडति सति । हरिद्दन्तावलाः हरितां दिशां दन्तावलाः गजाः दिग्गजा इति यावत् । सर्वतः समन्तात् । परिचलत्कल्लोलकोलाहलैः परिचलन्तः प्रसरन्तः कल्लोलाः तरङ्गाः तेषां कोलाहलैः । हृदि मनसि । मन्थाद्रिभ्रमणभ्रमं मन्थाद्रेः मंदरपर्वतस्य भ्रमणं

विलोडनं तस्य श्रमं शङ्काम् । पेदिरे प्रापुः । सः अयं । तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः तुङ्गानां महतां तिमिंगिलानां मत्स्यविशेषाणां अङ्गानां गात्राणां कवलीकारे ग्रासीकरणे या क्रिया तस्यां कोविदः चतुरः । 'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः' इति वचनात् । राघवः मत्स्यभेदः । केलिकलहत्यक्तार्णवः केलौ क्रीडायां कलहः विरोधः तेन त्यक्तः अर्णवः समुद्रः येन । कस्य क्रोडे भुजमध्ये । क्रीडतु । न कस्याप्यन्यस्य क्रोडो राघवाश्रयदाने समर्थः । यस्य महामत्स्यस्य क्रीडनमात्रेण पुनः समुद्रमथनश्रमो जायते, स यदि कौतुकेन समुद्रंत्यजेत्तर्हि कोऽन्यस्तदाश्रयदाता भवितुं योग्य इति–मुख्योक्तिः । अन्योक्तिस्तु–महानेव महते आश्रयं दातुं समर्थो भवति, नान्यः । अप्रस्तुतप्रशंसालंकारः । अत्राप्रस्तुतेन राघवेण प्रस्तुतः कश्चिन्महापुरुषो गम्यते । पद्यमिदं रसगङ्गाधरे ( पृ० ४०३ ) अप्रस्तुतप्रशंसायामुदाहृतम् । तत्र 'हरिदन्तावलाः ।' इत्यस्य स्थाने 'हरियूथाधिपाः' इति पठ्यते । 'तुङ्गतिमिंगिल' इत्यादिस्थाने च 'तुङ्गतिमिङ्गिलाङ्गगिलनव्यापारकौतूहलः' इति पाठभेदः । अस्यार्थश्च–गिलनं ग्रासः तस्य व्यापारे कर्मणि कौतूहलं परिश्रमाभावो यस्य । 'केलिकलह' इत्यादिस्थाने च 'केलिरभस' इत्यादि पठ्यते । रभसेन वेगेनेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

लूनं मत्तगजैः[1] कियत्कियदपि च्छिन्नं तुषारार्दितैः
शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।
एषा कोणगता मुहुः परिमलैरामोदयन्ती[2] दिशो
हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥५४॥

[1] प०–मत्तमतङ्गजैः कियदपि. [2] प०–H. आनन्दयन्ती.

लूनमिति ॥ काननं वनं । मत्तगजैः कियत् किंचिदित्यर्थः । लूनं छिन्नं । तथा तुषारार्दितैः तुषारेण हिमेन अर्दितैः पीडितैः लोकैरिति शेषः । कियत् अपि इन्धनार्थं छिन्नं खण्डितम् । शिष्टं अवशिष्टं च । ग्रीष्मजभीष्मभानुकिरणैः ग्रीष्मजः निदाघोद्भवः अतएव भीष्मः भयानकः भानुः सूर्यः तस्य किरणैः । भस्मीकृतं नीरसतामापादितं हा कष्टं । एषा कोणगता यथाकथंचिदवशिष्टा । परिमलैः गन्धैः । दिशः मुहुः वारंवारम् ।

अमोदयन्ती सुरभयन्ती। ललिता शोभना। लवङ्गलतिका। दावाग्निना वनवह्निना। दह्यते। अनेकाभिर्विपत्तिभिर्ग्रस्यमाने वने यथाकथंचिदवशिष्टा लवङ्गलता आत्मनो गन्धैः सर्वा दिशः सुरभयति—परन्तु दुर्दैववशात् दावाग्निस्तामपि भस्मसात्कुरुत इति—मुख्योक्तिः। अन्योक्तिस्तु—आत्मरक्षा-समर्थो गुणवानपि दुर्दैववशाद्विपद्यत एव। अप्रस्तुतप्रशंसालंकारः। अत्राप्रस्तुतया लवङ्गलतिकया प्रस्तुतः कश्चिदापन्नो गुणवान् गम्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं
पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि।
सत्यं नन्दन किं त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते
त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥ ५५ ॥

स्वर्लोकस्येति॥ हे नन्दन देवोद्यान। त्वं स्वर्लोकस्य स्वर्गस्य। शिखा-मणिः चूडामणिः तद्वत् शिरोधार्यः अत्युत्कृष्ट इति यावत्। तथा। सुरतरु-ग्रामस्य कल्पवृक्षसमूहस्य। अद्भुतं विचित्रं। धाम स्थानं। असि तथा। पौलोमीपुरुहूतयोः पौलोमी इन्द्राणी शची पुरुहूतः इन्द्रः तयोः। पुण्या-वलीनां बहूनां पुण्यानां। परिणतिः परिपाकः फलं इति यावत्। असि। इति सर्वं सत्यम्। किंतु तथापि। सहृदयैः सदाशयैः। विधिः ब्रह्मा। नित्यं। इदं प्रार्थ्यते याच्यते। यत् खाण्डवरङ्गताण्डवनटः खाण्डवः वनविशेषः स एव रङ्गः नर्तनस्थानं तत्र ताण्डवे उद्धतनृत्ये नटः नर्तकः— खाण्डववन भस्मकारी। वैश्वानरः अग्निः। त्वत्तः दूरे अस्तु। सर्वप्रकारा-द्भुतगुणसामग्रीविभूषितमपि नन्दनं वनं दावानलाद्बिभेत्येवेति—मुख्योक्तिः। अन्योक्तिस्तु—सर्वसुखोपेतस्यापि भयस्थानानि विद्यन्त एवेति। अप्रस्तुत-प्रशंसालंकारः। अत्राप्रस्तुतेन नन्दनेन प्रस्तुतः कश्चिद् गुणवान् गम्यते। शार्दूलविक्रीडितं वृत्तम् ॥५५॥

स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने
चञ्चूकोटिविपाटितारपुटो[1] यास्याम्यहं पञ्जरात्।
एवं[2] कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥५६॥

[1].र० चञ्चूकोटिनिराकृतार्गलः । बा०-°कोटिविपाटितायसपुटः । नि०-°विपाटितारलकुटः । प०-A. ° विघाटिताचिरपुटः, C. ° विपाटितारकपुटः । [2].प० A. इत्थं.

स्वस्वेति ॥ स्वस्वव्यापृतिमग्नमानसतया स्वस्य स्वस्य निजस्य व्यापृतिः व्यापारः तस्मिन् मग्नं समासक्तं मानसं मनः तस्य भावः तया-निजकर्मासक्तचित्ततया । जने सन्निकटस्थे लोके । मत्तः मत्सकाशात् । निवृत्ते परावृत्ते अपक्रान्ते इत्यर्थः सति । चञ्चूकोटिविपाटितारपुटः चञ्च्वाः कोट्या अग्रभागेन विपाटितं विदारितं अररपुटं कपाटयुगलं, पञ्जरद्वारमित्यर्थः, येन सः । अहं पञ्जरात् बहिः । यास्यामि गमिष्यामि-उड्डीयेति शेषः । एवं अनेन प्रकारेण । कीरवरे शुकश्रेष्ठे । मनोरथमयं साकल्पिकं न तु वास्तवं । पीयूषं अमृतं । आस्वादयति सति । वारणकराकारः वारणस्य गजस्य करः शुण्डादण्डः तस्य आकारः इव आकारो यस्य सः । फणिग्रामणीः फणिनां सर्पाणां ग्रामणीः नायकः श्रेष्ठ इति यावत् । अन्तः पञ्जरस्येति शेषः । संप्रविवेश मत्संनिकृष्टा जना यदा असावधाना भविष्यन्ति तदैव पञ्जरं त्रोटयित्वा बहिर्भविष्यामि-इति यावच्छुको विचिन्तयति तावद् भीमकायः सर्पः पञ्जराभ्यन्तरं प्रविष्टवानिति-मुख्योक्तिः । अन्योक्तिस्तु-इह जगति लोका भावनामयानि भवनानि निर्माय सुखनिमग्ना भवन्ति किन्तु बहुशः आकस्मिका वज्रोपमा दुर्दैवविपाकास्तान् मध्य एव नाशयन्ति । अप्रस्तुतप्रशंसालंकारः । अत्राप्रस्तुतेन कीरवृत्तान्तेन प्रस्तुतः कश्चित्संसारी गम्यते । अलंकारश्चायं विषादनाख्येन अलंकारेण अनुप्राणितः । तल्लक्षणं च 'अभीष्टार्थविरुद्धलाभो विषादनम्' रसगंगाधरे ( पृ. ५०६) । शार्दूलविक्रीडितं वृत्तम् ॥५६॥

रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुला-
मेतामम्बुधिकामिनीं व्यवसिताः संगाहितुं वा कथम् ।
अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो
यद्ग्रावेव[1] रसातलं पुनरसौ[2] यातो गजग्रामणीः ॥५७॥

[1] बा०-ग्राहेच. । प०-AF. ग्राहेण. । C. ग्रावेण. [2] प०-E. सरभसं.

रे इति ॥ रे चाञ्चल्यजुषः चाञ्चल्यं चपलत्वं जुषन्ते सेवन्ते इति ।

श्रितनगाः श्रितः आश्रितः नगः पर्वतः यैः ते–पर्वतवासिन इत्यर्थः। मृगाः। कल्लोलमालाकुलां कल्लोलानां महोर्मीणां मालाभिः पंक्तिभिः आकुलां व्याप्तां। एतां पुरतो दृश्यमानां अम्बुधिकामिनीं अम्बुधेः समुद्रस्य कामिनीं प्रियां नदीमित्यर्थः। संगाहितुं प्रवेष्टुं। कथं वा केन कारणेन। व्यवसिताः उद्युक्ताः। यत् यस्मात् कारणात्। अत्रैव। उच्छलदम्बुनिर्भरमहावर्तैः उच्छलद् उद्गच्छद् अम्बुजलं तस्य निर्भरः आधिक्यं तेन महान्तः आवर्ताः जलभ्रमाः तैः। समावर्तितः इतः ततः भ्रामितः। असौ गजग्रामणीः गजश्रेष्ठः। पुनः। ग्रावा पाषाण इव। रसातलं पातालं। यातः–मग्न इत्यर्थः। अस्यां नद्यां करीन्द्रोऽपि जले मग्नः, अतश्चपलतया युष्माभिरत्रावहागहनचेष्टा न कार्येति मृगान् प्रति कस्यचिदुक्तिरिति–मुख्योक्तिः। अन्योक्तिस्तु-महद्भिरप्यसाध्ये कर्मणि क्षुद्रश्चेष्टा न कार्या। अप्रस्तुतप्रशंसालंकारः। अत्राप्रस्तुतैर्मृगैः प्रस्तुताः केचनासमर्था नरा गम्यन्ते, करीन्द्रेण च कश्चित्समर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ५७॥

पिब स्तन्यं पोत त्वमिह मद[1]दन्तावलिधिया
दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान्।
त्रयाणां लोकानामपि हृदयतापं परिहर-
न्नयं धीरं धीरं ध्वनति नवनीलो जलधरः॥५८॥

[1] बा० किल.

पिबति॥ हे पोत शिशो सिंहस्येति शेषः। त्वं इह मदीयं स्तन्यं दुग्धं। पिब। इति सिंहिन्याः स्वशिशुं प्रत्युक्तिः। मददन्तावलधिया मदो विकारः तद्वन्तः ये दन्तावलाः गजाः तेषां धिया बुद्ध्या–इमे मत्ता गजा इति मन्यमानः। हरिदन्तेषु हरितां दिशां अन्तेषु भागेषु। किमिति कथं। परुषान् क्रोधेन तीक्ष्णान्। दृगन्तान् दृशोः नेत्रयोः अन्तान् कोणान्–कटाक्षानिति यावत्। आधत्से क्षिपसि। ननु। अयं। त्रयाणां लोकानां। हृदयपरितापं हृदयस्य ग्रीष्मादिजन्यं परितापं दुःखं। परिहरन् निवारयन्। नवनीलः नवश्चासौ नीलश्च। जलधरः मेघः। धीरं धीरं गम्भीरं यथा स्यात्तथा। ध्वनति गर्जति। हे शिशो क्रोधं मा कुरु, नेमे ते स्वभाववैरिणो गजा अपि तु लोकत्रयतापहारी मेघोऽयं गर्जतीति सिंहिन्याः स्वशिशुं प्रत्युक्तिरिति–

मुख्योक्तिः । अन्योक्तिस्तु–तेजस्वी शैशवेऽपि स्वशत्रोराभासं न सहते। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन सिंहशिशुना प्रस्तुतः कश्चिच्छिशुस्तेजस्वी गम्यते। शिखरिणी वृत्तम् ॥ ५८ ॥

धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥५९॥

धीरेति ॥ हे नीरद मेघ। ते तव। धीरध्वनिभिः धीराः गम्भीराः ध्वनयः गर्जितानि तैः। अलं। गर्जनां मा कुरु–इत्यर्थः। यतः मे मासिकः मासैकमात्रः। गर्भः। उन्मदवारणबुद्ध्या उन्मदाः मत्ताः ये वारणाः गजाः तेषां बुद्ध्या भ्रान्त्या। मध्येजठरं जठरस्य उदरस्य मध्ये। 'पारे मध्ये षष्ठ्या वा' इति समासः। समुच्छलति बहिरागमनाय समुच्चलति। रसगङ्गाधरे (पृ० २११) अतिशयोक्तेरुदाहरणमेतत्। तथा चोक्तं तत्र–'यत्रासंबन्धेऽपि संबन्धो वर्ण्योत्कर्षार्थः। अत्र सिंहीवचने समुच्छलनासंबन्धेऽपि समुच्छलनसंबन्धोक्तिः शौर्यातिशायिका'। केचित्त्वत्राप्रस्तुतप्रशंसां मन्यन्ते। उपगीति वृत्तम् ॥ ५९ ॥

वेतण्डगण्डकण्डूतिपांडित्यपरिपन्थिना।
हरिणा हरिणालीषु कथ्यतां कः पराक्रमः ॥६०॥

वेतण्डेति ॥ वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना वेतण्डानां गजानां गण्डाः कपोलाः तेषां कण्डूतिः घर्षणं तत्र यत्पाण्डित्यं नैपुण्यं तस्य परिपन्थिना विरोधिना। हरिणा सिंहेन। सिंहो हि गजानां हननेन न केवलं तेषां विरोधी अपितु कण्डूतियुक्तानां तेषां कपोलानामपि। हरिणालीषु मृगपंक्तिषु। कः पराक्रमः शौर्यं। कथ्यतां वर्ण्यताम्। पद्यमेतत् ४९ पद्येन समानार्थम्। अप्रस्तुतप्रशंसालङ्कारः। अनुष्टुप् वृत्तम् ॥ ६० ॥

नीरान्निर्मलतो जनिर्मधुरता रामामुखस्पर्धिनी[1]
वासो यस्य हरेः करे परिमलो गीर्वाणचेतोहरः।
सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह
त्वं चेत्प्रीतिमुरीकरोषि मधुपे तत्त्वां किमाचक्ष्महे ॥६१॥

१. वै०–वामा°.

नीरादिति ॥ हे अंभोरुह कमल। यस्य ते तव। निर्मलतः निर्मलात्।

नीरात् जलात् । जनिः उत्पत्तिः । मधुरता मनोहरता । रामामुखस्पर्धिनी रामाणां स्त्रीणां मुखेन सह स्पर्धितुं शीलमस्याः रमणीमुखसदृशीत्यर्थः । तथा हरेः विष्णोः । करे हस्ते । वासः वसतिः । परिमलः गन्धः च । गीर्वाणचेतोहरः गीर्वाणानां देवानां चेतसः हरः अपहारकः—देवानामपि मनांसि हरतीत्यर्थः । महाकविगिरां महाकवीनां गिरां वाणीनां । सर्वस्वं सर्वधनस्वरूपं । कविभिः सर्वत्र कमलमुपमानतयाङ्गीक्रियते । तथा कामस्य च सर्वस्वं–पञ्चसु अस्त्रेषु कमलस्य परिगणितत्वात् । तद्हो त्वं । मधुपे भ्रमरे, मद्यपे इत्यपि ध्वन्यते । प्रीतिं स्नेहं । उरीकरोषि स्वीकरोषि । चेत् । त्वां किं । आचक्ष्महे कथयामः । सर्वथा निन्दनीयमेतदित्यर्थः । हे कमल, उदात्तं ते कुलं निवासश्च ते श्रेष्ठः, देवानां मनोमोहकस्तथा महाकवीनां कामदेवस्य च सन्मानपात्रमसि तथापि यत्वं भ्रमरे स्निह्यसि तदतीवानुचितमिति कमलं प्रति कस्यचिदुक्तिरिति–मुख्योक्तिः। अन्योक्तिस्तु-अखिलोत्कृष्टगुणोपेतं किन्तु नीचसहवासकारिणं प्रति कस्यचिदुक्तिः ।अप्रस्तुतप्रशंसालङ्कारः । अत्राप्रस्तुतेन कमलेन प्रस्तुतः कश्चिद्गुणवान् किन्तु नीचसहचारी गम्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

लीलामुकुलितनयनं किं सुखशयनं समातनुषे ।
परिणामविषमहरिणा करिनायक[1] वर्धते वैरम् ॥६२॥

[1]. प० C. करिणायक.

लीलेति ॥ हे करिनायक गजेन्द्र । लीलामुकुलितनयनं लीलया विलासेन मुकुलिते अर्धनिमीलिते नयने यस्मिन् कर्मणि यथा स्यात्तथा । सुखशयनं सुखं आनन्ददं शयनं निद्राम् । किं कथम् । समातनुषे करोषि । परिणामविषमहरिणा परिणामे अन्ते विषमः दुःसहः हरिः सिंहः तेन सह । वैरं वर्धते । हे गजेन्द्र किमिति सुखनिद्रामनुभवसि, निकटे प्रबलशत्रुः सिंहो जागर्तीति–मुख्योक्तिः । अन्योक्तिस्तु–प्रबलः शत्रुर्निकटे वर्तते, अतोऽसावधानेन न स्थातव्यमन्यथा महाभयशङ्केति कंचित् प्रति हितोपदेष्टुरुक्तिः । अप्रस्तुतप्रशंसालंकारः । अत्राप्रस्तुतेन करिनायकेन प्रस्तुतः कश्चित्प्रमत्तो नरो गम्यते । उपगीतिवृत्तम् ॥ ६२ ॥

विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ ६३ ॥

विदुषामिति ॥ विदुषां पण्डितानां, न तु मूर्खाणां। वदनात् मुखात्। वाचः वचनानि। सहसा एकपदे। बहिः नो यान्ति गच्छन्ति। अविमृश्य न ते वदन्तीत्यर्थः। याताः बहिर्निर्गताः। चेत्। न पराञ्चन्ति परावर्तन्ते द्विरदानां द्वौ रदौ दन्तौ यस्य सः द्विरदः गजः। तेषां रदाः दन्ताः। गजानां बहुत्वात् बहुवचनम्। इव। पण्डिता अविमृश्य न किंचिद्वदन्ति, यत्किंचिच्च गदन्ति तत् सर्वथा परिपालयन्तीत्यर्थः। उपमालङ्कारः। तल्लक्षणंच-'साधर्म्य-मुपमा भेदे' इति। अनुष्टुब् वृत्तम् ॥६३॥

औदार्यं भुवनत्रयेऽपि विदितं संभूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः।
एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः[1]
स्यादर्थिप्रवरार्थितार्पणविधावेको[2] विवेको यदि ॥६४॥

[1].प०-A. F. गुणः...सर्वोऽपि लोकोत्तरः [2].बा०-स्यादर्थिप्रकरार्थतर्पणविधौ चैको.

औदार्यमिति ॥ औदार्यं बहुप्रदत्वं। भुवनत्रये लोकत्रये। अपि विदितं प्रसिद्धं। अम्भोनिधेः समुद्रात्। संभूतिः उत्पत्तिः। अपि विदिता। एवं नन्दनकानने नन्दनवने। वासः स्थितिः। तथा च। गीर्वाणचेतोहरः देवानां मनोमोहकः। परिमलः गन्धः। अपि विदित एव। एवं दातृगुरोः दातृषु वदान्येषु गुरुः श्रेष्ठः तस्य सुरतरोः कल्पवृक्षस्य। सर्वे अपि गुणाः। लोकोत्तराः अलौकिकाः। स्युः। यदि। अर्थिप्रवरार्थितार्पणविधौ अर्थिषु याचकेषु प्रवराः श्रेष्ठाः तेषां यत् अर्थितं, याचितं अथवा अर्थिनां प्रवरं उत्कृष्टं यत् अर्थितं, तस्य अर्पणविधौ दानप्रकारे। एकः विवेकः योग्यायोग्य-विचारः। स्यात्। कल्पवृक्षस्य जन्मनिवासादयः सर्वेऽपि गुणा उत्कृष्टा भवेयुर्यदि योग्यायोग्यविवेकेन याचकानां मनोरथान् पूरयेदयमिति-मुख्योक्तिः। अन्योक्तिस्तु—नरस्य सत्कुलोत्पत्त्यादयो गुणास्तदैव शोभन्ते यदा याचक-मनोरथपूरणादौ योग्यायोग्यविचारोऽपि तस्य स्यात्। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन सुरतरुणा प्रस्तुतः कश्चित्सर्वगुणसंपन्नः किन्तु विवेकहीनो नरो गम्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-
मित्येवं परिचिन्त्य मात्ममनसि[1] व्याधानुतापं कृथाः।
भूपानां भवनेषु किं च विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षा नराः[2] ॥६५॥

[1].र०—मा स्म मनसि [2].र०—खलाः

एक इति ॥ व्याध लुब्धक। अपघृणः अपगता घृणा करुणा यस्य सः, निर्दयः इत्यर्थः अहं एकः। विश्वसतां विश्वासशालिनाम्। प्राणिनां मृगादीनां जीवानाम्। प्राणान् अपहरामि। इति एवम् परिचिन्त्य। आत्ममनसि स्वचित्ते। अनुतापं पश्चात्तापं। मा कृथाः मा कुरु। यतः— भूपानां राज्ञां भवनेषु गृहेषु। तथा विमलक्षेत्रेषु विमलानि शुद्धानि क्षेत्राणि प्रयागाद्यानि तीर्थानि तेषु। गूढाशयाः गूढः पराहितरूपः गुप्तः आशयः अभिप्रायः येषां ते। साधूनां सत्पुरुषाणां च। अरयः शत्रवः। त्वत्तुल्यकक्षाः त्वया तुल्या कक्षा अवस्था येषां ते। नराः कति न वसन्ति अपि तु बहव एतादृशा निवसन्तीत्यर्थः। राजभवनेषु तथा पुण्यक्षेत्रेषु कपटेन विश्वस्तानां सज्जनानां अपकारं कुर्वन्तो बहवः खला विद्यन्ते—अतो न केवलं त्वं विश्वासघातक इति व्याधं प्रति कस्यचिदुक्तिः। पद्यमेतत् रसगङ्गाधरे (पृ० ४९७) प्रतीपालंकार उदाहृतम्। तल्लक्षणं च—'उपमानोपमेययो-रन्यतरस्य किंचिद्गुणप्रयुक्तमद्वितीयतोत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यमपरं (प्रतीपं) द्विविधम्'। अत्र व्याध उपमेयः खलानामुपमानत्वम्। विश्वासघातकता च साधारणो धर्मः। तस्या विश्वासघातकतया व्याधगत उत्कर्षः खलगतविश्वासघातकतया परिहृतः। एतन्मूलमेव च व्याधखलयोः सादृश्यम्। अत्रौपम्यस्य व्याधानुतापनाशः फलम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः[1]।
तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः ॥६६॥

[1]. प०—नम्रतराः र०—नम्रतया

विश्वास्येति ॥ हे मातः काश्यपि पृथ्वि। ये नम्रतमाः अत्यन्तं विनीताः सन्तः। साधून् सज्जनान्। मधुरवचनैः मिष्टवचोभिः।

विश्वास्य। तान् वञ्चयन्ति प्रतारयन्ति तान् एतादृशान् खलान् अपि। दधासि धारयसि। अतः। तव अपि च। विवेकः सदसद्विचारः। यातः गतः। पद्यमेतद्रसगङ्गाधरे (पृ० ४६८) काव्यलिङ्ग उदाहृतम्। तल्लक्षणं च काव्यप्रकाशे–'काव्यलिङ्गं हेतोर्वाक्यपदार्थता'। अत्र पृथिवी विवेकनाशस्य वञ्चकपुरुषाणां धारणं वाक्यार्थो हेतुः। गीतिवृत्तम्॥ ६६॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम्।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या[1]
विद्यावतां सकलमेव गिरां दवीयः[2] ॥६७॥

[1].शे०, वै०–°रार्यहृद्या [2].र०सकलमेव चरित्रमन्यत्।

अन्येति॥ विद्यावतां विदुषां। जगद्धितमयी संसारोपकारिणी। मनसः प्रवृत्तिः व्यापारः। अन्या विलक्षणा। का अपि वचनावलीनां वचनसरणीनां। रचना। अन्यैव अद्भुतैव। कृतिः आचारः। च। लोकोत्तरा अलौकिकी। आकृतिः स्वरूपं च। आर्तहृद्या आर्तानां पीडितानां हृद्या मनोहारिणी। किं बहुना विदुषां सकलं एव। गिरां वाणीनां। दवीयः दूरतरम्। अतिशयोक्तिरलङ्कारः। तल्लक्षणं च–'प्रस्तुतस्य यदन्यत्वम्' इत्यादि। पद्यमेतद्रसगङ्गाधरेऽतिशयोक्तौ (पृ० ३११) उदाहृतम्। अत्र विदुषां वाण्यादीनां अभेदे अपि लोकोत्तरप्रतिपत्त्यर्थं भेदो विवक्षितः। वसन्ततिलका वृत्तम्॥ ६७॥

आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम्।
कालागुरुर्दहनमध्यगतः समन्ता-
ल्लोकोत्तरं परिमलं प्रकटीकरोति॥ ६८॥

आपद्गतइति॥ महाशयचक्रवर्ती महान् उदारः आशयः स्वभावः यस्य सः, तेषु चक्रवर्ती चक्रवर्तिनृपवत् श्रेष्ठः। आपद्गतः विपत्तिग्रस्तः। अपि। खलु निश्चयेन। अकृतपूर्वं पूर्वं कृतः कृतपूर्वः, न कृतपूर्वः अकृतपूर्वः तं। उदारभावं महत्त्वं। विस्तारयति प्रकटयति। दहनमध्यगतः अग्निमध्यगतः, ज्वलन्नित्यर्थः। कालागुरुः कृष्णचन्दनः। समन्तात् सर्वतः

लोकोत्तरं अलौकिकं । परिमलं गन्धं । प्रकटीकरोति दर्शयति । अत्र प्रतिवस्तूपमालङ्कारः । तल्लक्षणं च–'वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मक-वाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा' (रसगङ्गाधर—पृ० ३२०-१)। आपद्गतः सत्पुरुषो दहनमध्यगतकालागुरुसदृशः । अपूर्वौदार्यविस्तारणं च लोकोत्तरपरिमलप्रकटनम् । उभयोश्च वस्तुप्रतिवस्तुभावः । वसन्ततिलका वृत्तम् ॥ ६८ ॥

विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव ।
लोकंपृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुतापि[१] नितान्तरम्या ॥ ६९ ॥

१. र०-कालागुरोः कठिनतापि ।

विश्वेति ॥ विश्वाभिरामगुणगौरवगुम्फितानां विश्वस्य जगतः अभिरामाः मनोहराः ये गुणाः तेषां गौरवेण महत्त्वेन, आधिक्येन वा, गुम्फितानां युक्तानामित्यर्थः । निर्मलधियां शुद्धबुद्धीनां । रोषः क्रोधः । अपि । रमणीयः सुन्दरः । एव । लोकंपृणैः लोकं जनं पृणन्ति तर्पयन्तीति लोकंपृणाः तैः । अलुक् समासः । परिमलैः गन्धैः । परिपूरितस्य । काश्मीरजस्य कुंकुमस्य । कटुता अपि । नितान्तरम्या अतीव मनोहारिणी । पद्यमिदं रसगङ्गाधरे (पृ० ३११) प्रतिवस्तूपमायां उदाहृतम् । वसन्ततिलका वृत्तम् ६९ ॥

लीलालुण्ठितशारदापुरमहासंपद्भराणां[१] पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः[२]।
अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः[३]॥७०॥

१.र०-°पुरधियामस्मादृशानां- २.र०-चेद्बालिशाः ३.र०-सालावृकाः

लीलेति ॥ विद्यासद्मविनिर्गलत्कणमुषः विद्यायाः सद्म गृहं तस्मात् विनिर्गलन्तः भ्रश्यमानाः ये कणाः लेशाः तान् मुष्णन्ति चोरयन्तीति–यथा-कथंचिद्विद्यालयादिभ्यो लब्धज्ञानलवाः पामराः नीचाः । लीलालुण्ठित-शारदापुरमहासंपद्भराणां लीलया अनायासेन लुण्ठिताः प्रसभं गृहीताः

शारदायाः सरस्वत्याः पुरात् महान्तः संपद्भराः उत्कृष्टा ऐश्वर्यभारा यैः ते-अस्मादृशाः-तेषाम्। अनायासाधिगतागाधपाण्डित्यानाम्। पुरः अग्रे। वल्गन्ति विकत्थन्ते। चेत्। तर्हि। अद्य अधुनैव। श्वः वा। अतिशीघ्रमेवेत्यर्थः। शकुन्तशिशवः शकुन्तानां पक्षिणां शावकाः। फणिनां सर्पाणां। मूर्धसु शिरःसु। सुखेन पदं। धास्यन्ति स्थापयिष्यन्ति। एवमेव-शशाः शशकाः। दन्तावलानां गजानां मूर्धसु। तथा। शालावृकाः श्वानः-तेषां शालासु गृहेष्वेव न तु वनादिषु वृकतुल्यत्वात्। सिंहानां मूर्धसु पदं धास्यन्ति। अत्र पूर्वार्धे बहुज्ञाल्पज्ञयोर्व्यतिरेको गम्यते। पद्यमिदं रसगङ्गाधरे (पृ० ४८५) अर्थापत्तावुदाहृतम्। तल्लक्षणं च-केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिः' इति। (अत्र प्रकृतं) महापण्डितानां पुरतोऽल्पज्ञानां वल्गनं-तुल्यन्यायेन—शुनां सिंहमस्तकेषु चरणाधानम्- (एतच्चाप्रकृतम्) गमयति। शार्दूलविक्रीडितम् वृत्तम्॥ ७०॥

गीर्भिर्गुरूणां परुषाक्षराभि-
स्तिरस्कृता यान्ति नरा महत्त्वम्।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति॥ ७१॥

गीर्भिरिति॥ नराः। गुरूणां वृद्धानां शिक्षकाणां वा। परुषाक्षराभिः कठोराभिः। गीर्भिः वाणीभिः। तिरस्कृताः भर्त्सिताः। सन्तः। महत्त्वं गौरवम्। यान्ति। अलब्धशाणोत्कषणाः न लब्धं शाणे रत्नादिघर्षणपाषाणे कषणं घर्षणं यैः ते। मणयः। जातु कदाचिदपि। नृपाणां राज्ञाम्। मौलौ शिरसि। वसन्ति। पद्यमिदं रसगङ्गाधरे (पृ० ३३२) वैधर्म्येण प्रतिपादितायां प्रतिवस्तूपमायामुदाहृतम्। उपजातिवृत्तम्॥ ७१॥

वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं[1] दधाति दीपः।
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः॥७२॥

[1].प०, शे., वै०- मसीपटलं.

वहतीति॥ पटीरजन्मा चन्दनः। विषधरान् धरन्तीति धराः विषस्य धराः विषधराः सर्पाः तान्। वहति धारयति। दीपः शिरसि मषीपटलं अंजनस्य, कज्जलस्येत्यर्थः, पटलं समूहं। दधाति। विधुः चन्द्रः। अपि।

कलङ्कम् । भजतेतरां अतिशयेन धारयति । तथा च । क्षितीन्द्राः भूपतयः । खलु । पिशुनजनं खलजनं । बिभ्रति धारयन्ति । प्रायः सर्वेऽपि सज्जनाः दुष्टसंगदूषिताः, न कोऽपि तस्मान्मुक्तः इत्यर्थः। पद्यमिदं रसगङ्गाधरे (पृ० ३३७) प्रतिवस्तूपमायामुदाहृतम् ।अत्र वहनाधानभजनभरणानां वस्तुत एकार्थतैव। अच्युतरायस्तु चतुर्थचरणं 'पिशुनजनं च बिभर्ति यत्क्षितीन्द्रः' इत्येकवचनान्तं पठति । पुष्पिताग्रा वृत्तम् । तल्लक्षणं च–अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ' ॥ ७२ ॥

सत्पूरुषः खलु हिताचरणैरमन्द-
मानन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै[1]-
रिन्दुर्विकासयति कैरविणीकुलानि[2] ॥ ७३ ॥

[1].वा०–गुणैरुदारैः । [2]. एतदनन्तरं केषुचित्पुस्तकेषु ( मुद्रितेषु, आदर्शेषु च ) पद्यत्रयमिदं पठ्यते —

कृतमपि महोपकारं पय इव पीत्वा निरातंकः ।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ( A. जयति ) ॥
पांडित्यं परिहृत्य[1] यस्यहि[2] कृते [3]बंदित्वमालम्बितं ।
दुष्प्रापं मनसापि यो गुरुतरैः[4] क्लेशैः पदं प्रापितः
रूढ[5] स्तत्र स चेन्निगीर्य सकलां पूर्वोपकारावलिं[6] ।
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे ॥

[1] A. F. चरितं हि. [2] A. F.च. [3] A. वा. [4] A. F. °तरं. [5] F. गूढ. [6] F. स.

खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशंकिभिर्लोकैर्विषेणाशीविषो यथा ॥

सत्पूरुष इति ॥ सत्पुरुषः सज्जनः। अनुक्तः अप्रार्थितः । एव । हिताचरणैः हितानि शुभानि आचरणानि अनुष्ठानानि तैः । अखिललोकं समग्रं जगत् । अमन्दं प्रभूतं यथा स्यात्तथा। आनन्दयति प्रीणयति। खलु निश्चयेन । तथाहि–इन्दुः चन्द्रः । केन । आराधितः पूजितः, प्रार्थित इति यावत् । उदारैः महद्भिः आनन्ददायकैरित्यर्थः । करैः किरणैः।

' गुणैः ' इत्यपि पाठः । कैरविणीकुलानि कैरविणीनां कुमुदिनीनां कुलानि समूहान् । विकासयति प्रफुल्लयति । इति कथय ब्रूहि । अप्रार्थित एव विकासयतीत्यर्थः । सज्जनः स्वत एव लोकहितमनुतिष्ठति यथा चन्द्रः अप्रार्थित एव कुमुदिनीः विकासयति । पद्यमिदं रसगङ्गाधरे ( पृ० ३३७ ) दृष्टान्तालङ्कार उदाहृतम् । तल्लक्षणं च–'प्रकृतवाक्यार्थघटकानामुपमादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्तः ' । अत्र सत्पुरुषस्य इन्दुः, हिताचरणस्य कराः, ' अनुक्त एव ' इत्यस्य ' आराधितः कथय केन ' इति, ' आनन्दयति ' इत्यस्य च ' विकासयति ' प्रतिबिम्बानि । वसंततिलका वृत्तम् ॥ ७३ ॥

परार्थव्यासङ्गादुपजहदथ स्वार्थपरता-
मभेदैकत्वं यो वहति गुणभूतेषु[1] सततम् ।
स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा[2]
समर्थो यो नित्यं सजयतितरां कोऽपि पुरुषः ॥ ७४ ॥

[1]. प०-H. गुणिभूतेषु. [2]. प०-A.F. ललितोदार° । अच्युतराय–ललितोदात्° । बा०–ललितोद्दाम°

परार्थेति ॥ यः पुरुषः । परार्थव्यासङ्गात् परस्य अन्यस्य अर्थः हितं तस्मिन् व्यासङ्गः दत्तचित्तता तद्धेतोः । स्वार्थपरतां स्वपुरुषार्थपरायणताम् । उपजहत् त्यजन् । गुणभूतेषु गौणेषु, आत्मनः हीनेष्वित्यर्थः । एतादृशेषु लोकेषु । सततं निरन्तरं । अभेदैकत्वं अभेदः भेदराहित्यं तस्मात् एकत्वं द्वैतराहित्यम् । वहति धारयति । अर्थात् आत्मनो हीनेष्वपि पुरुषेषु ' सर्वं खल्विदं ब्रह्म ' इति बुद्धया एकत्वमनुभवति । तथा यस्य । अन्तः हृदये । ललितोदात्तमहिमा ललितः शोभनः उदात्तः उन्नतः महिमा महत्त्वं स्वभावात् निसर्गात् । स्फुरति विकसितो भवति । यः च नित्यं । समर्थः दक्षः । प्रभुरित्यर्थः । सः । कोऽपि अनिर्वचनीयः । पुरुषः । जयतितरां अत्यर्थमुत्कर्षेण वर्तत इत्यर्थः । पद्यमेतद्रसगङ्गाधरे ( पृ० ३८४ ) समासोक्त्यावुदाहृतम् । तल्लक्षणं च काव्यप्रकाशे ' समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः । ' अत्र प्रस्तुते सज्जने अप्रस्तुतस्य तत्पुरुषसमासस्य व्यवहार आरोप्यते । तथाहि—' राजपुरुषः '

इत्यत्र 'राजन्' शब्दः 'पुरुष'शब्दश्च उभावपि स्वार्थं त्यजतः—अर्थात् 'राजपुरुषः' न स्वयं राजा न वा साधारणः पुरुषः, अपि तु राजसेवानिरतः पुरुषः। अतोऽत्र राजसेवानिरतपुरुषरूपः परार्थः, अभेदैकत्वं अभेदैकत्वसंख्या—अर्थात् यत्र भिन्नाः संख्या अभेदेन वर्तन्ते। यथा अस्मिन् राजपुरुषशब्दे—राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुषः, इति त्रयमपि संभाव्यते। सर्वाश्चैताः संख्या एकस्मिन् राजपदे संनिविष्टाः। स चायं राजशब्दः समासेऽस्मिन् विशेषणत्वात् गुणभूतः। तत्पुरुषे हि परः शब्दः प्रधानो भवति। अतो गुणभूते। राजशब्दे अभेदैकत्वसंख्या वर्तते। यस्यान्तः उदात्तमहिमा स्फुरति। सर्वेषां शब्दानां उदात्तानुदात्तस्वरितादिस्वराणामेकतमः स्वरो भवति। किन्तु समासे 'समासस्य' इति पाणिनिसूत्रेण अन्तोदात्तत्वं भवति। य : नित्यं समर्थः। अन्वययोग्यः शब्दः समर्थः—राजपुरुषः इत्यत्र राजशब्दस्य पुरुषशब्देन अन्वयः सम्बन्धो भवितुमर्हति, किन्तु 'राज्ञः अवलोकयति पुरुषः' इत्यत्र राजशब्दस्य अवलोकयति पदेन अन्वयोऽशक्यः, एवमेव च अवलोकयतिपदस्य पुरुषपदेन। अतः 'समर्थः पदविधिः' इति सूत्रानुसारं समर्थानां परस्परमन्वययोग्यानामेव पदानां समासो भवति—अर्थात् समर्थाश्रित एव समासः। एवमत्र लौकिके वृत्तान्ते शास्त्रीयव्यवहारसमारोपः। शिखरिणी वृत्तम् ॥ ७४ ॥

वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥७५॥

वंशभव इति॥ वंशभवः सत्कुलोत्पन्नः। गुणवान् दाक्षिण्यादिगुणैर्युक्तः। अपि। पुरुषः सङ्गविशेषेण विशिष्टसहवासेन। पूज्यते आद्रियते। वीणादण्डः—वंशभवः वेणुजन्मा। गुणवान् तन्त्रीयुक्तः। अपि। तुम्बीफलं 'तुंबा' इति प्रसिद्धं, तेन विकलः हीनः। महिमानं महत्त्वं। न प्रयाति न प्राप्नोति। तुम्बीयुक्त एव वीणादण्डो वादयितुं शक्यते। पद्यमिदं रसगङ्गाधरे (पृ० ३३२) वैधर्म्यप्रयुक्तायां प्रतिवस्तूपमायामुदाहृतम्। गीतिवृत्तम् ॥ ७५ ॥

अमितगुणोऽपि पदार्थो दोषेणैकेन[1] निन्दितो भवति[2]।
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव[3] ॥ ७६ ॥

[1].प०–H. लाकेदोषेण । [2].प० F. निंद्यतां याति । [3].प०–F. लशुनेन ।

अमितेति ॥ अमितगुणः अमिताः असंख्याः गुणाः यस्मिन् सः । अपि । पदार्थः । एकेन दोषेण निन्दितः भवति । निखिलरसायनमहितः निखिलेषु समग्रेषु रसायनेषु पारदादिशोधनेषु महितः पूजितः। लशुनः। उग्रेण तीव्रेण, उद्वेजकेनेत्यर्थः । गन्धेन निन्दितः भवति । पूर्वार्धमत्र सामान्यवचनं, उत्तरार्धं च विशेषवचनम् । अत एव नात्रोपमा, किन्तु-उदाहरणालङ्कारः । पद्यमेतद्रसगङ्गाधरे ( पृ० २१३ ) उदाहरणालङ्कार उदाहृतम् । तल्लक्षणं च– 'सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम्'। आर्यावृत्तम् ॥ ७६ ॥

उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ७७ ॥

उपकारमिति ॥ सद्गुणः शोभनाः गुणाः यस्य सः । एतादृशो नरः । विपद्गतः आपत्तिग्रस्तः । अपि । उपकारं हितं । एव । तनुते विस्तारयति । मूर्छां गतः मृतः वा पारदः रसः मूर्च्छामृती वैद्यशास्त्रोक्तौ संस्कारविशेषौ । अत्र । निदर्शनं उदाहरणम् । पद्यमेतद्रसगङ्गाधरे ( पृ० २१४ ) उदाहरणालङ्कार उदाहृतम् । उपगीतिवृत्तम् ॥ ७७ ॥

वनान्ते[1] खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति[2] भयहर्तुः सपदि या ।
अहो सेयं सीता दशवदननीता हलरदैः[3]
परीता रक्षोभिः श्रयति विवशा कामपि दशाम्[4] ॥ ७८ ॥

[1]. र०–वनान्तः । [2]. र०–श्रयति । [3]. र०–शिव शिव परीताश्रुतिचलत्°– [4]. र०–करोटीकोटीभिर्वसति खलु रक्षोयुवतिभिः ।

वनान्त इति ॥ या वनान्ते वनस्य अन्ते दण्डकारण्यस्य एकदेशे। खेलन्ती क्रीडन्ती । शशकशिशुं । आलोक्य दृष्ट्वा । चकिता त्रस्ता सती । सपदि तत्कालं । भयहर्तुः भयापहारकस्य । भर्तुः स्वामिनः रामस्य भुजप्रान्तं बाहुमध्यभागं । भजति सेवते । अहो । दशवदननीता रावणापहृता । सा इयं सीता हलरदैः हलसदृशाः रदाः दन्ताः येषां तैः

रक्षोभिः राक्षसैः । परीता वेष्टिता । पुनश्च । विवशा पराधीना सती । कामपि दशां अनिर्वचनीयां दुःखप्रदां अवस्थां । श्रयति अवलम्बते । पद्यमिदं रसगङ्गाधरे (पृ० ४४८) विषमालङ्कार उदाहृतम् । तल्लक्षणं च– 'अननुरूपसंसर्गो विषमम्' । उक्तं च तत्रैव जगन्नाथेन– "अत्र सती-शिखामणेर्भगवत्या राघवधर्मपत्न्याः परमप्रभावयुक्तत्वाद्राक्षसीभिरनाश्यत्वेऽपि रक्षःकर्तृकनाशस्वरूपयोग्यतावच्छेदकमनुष्यत्वजातियोगेन स्वरूपस्य रक्षो-दर्शनेन सौन्दर्यसौकुमार्यादीनां गुणानां च नाश्यत्वेन विरुद्धत्वात् समानाधि-करणसंयोगरूपः संसर्गोऽननुरूपः' शिखरिणी वृत्तम् ॥ ७८ ॥

पुरो गीर्वाणानां निजभुजबलाहोपुरुषिका[1]–
महो कारंकारं पुरभिदि शरं संमुखयतः[2] ।
स्मरस्य स्वर्बालानयनसुममालार्चनपदं[3]
वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥ ७९ ॥

१. र०–पुलकितकपोलं प्रथयतो । २. इ०–भुजप्रौढिसाक्षाद्भगवति शरं संमुखयितुम् । ३. र०–°मालार्चितमहो ।

पुर इति॥ गीर्वाणानां देवानाम्। पुरः अग्रे। निजभुजबलाहोपुरुषिकां निजभुजयोः बलं स्वबाह्वोः वीर्यं तेन आहोपुरुषिकां अहंमन्यतां । अहो अहं पुरुषः, समर्थः, इत्यहंकारवान् अहोपुरुषः, तस्य भावः आहोपुरुषिका । 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' इत्यमरः । कारंकारं कृत्वा कृत्वा । अहमेव समर्थ इति वारं वारं देवानामग्रतः स्वाभिमानं प्रदर्श्येत्यर्थः पुरभिदि त्रिपुरदाहके अपि । शरं बाणं । संमुखयतः अभिमुखं संदधतः सतः । स्मरस्य कामदेवस्य । स्वर्बालानयनसुममालार्चनपदं स्वर्बालाः देवाङ्गनाः तासां नयनानि एव सुमानि पुष्पाणि तेषां माला पङ्क्तिः तया यत् अर्चनं पूजनं तस्य पदं स्थानम् । वपुः शरीरं । सद्यः तत्कालम् । भालानल-भसितजालास्पदं भालस्य ललाटस्य यः तृतीयनेत्रोत्थितः अनलः अग्निः तेन यत् भसितजालं भस्मसमूहः तस्य आस्पदं स्थानं । अभूत् जगत्त्रयविजेता मदनः यदा परमाराध्ये शङ्करे शरं दधौ तदा तत्तृतीयनेत्रोत्थानलेन भस्मा-वशेषो बभूव । शङ्करभगवतस्तु नाभूत् कोऽप्यपकारः प्रत्युत स्वयं मदनस्यैव दुःखप्राप्तिरभूत् । पद्यमिदं रसगङ्गाधरे (पृ० ४४६) विषमालङ्कार उदा-

हतम्। उक्तं च तत्र जगन्नाथेन–'परस्य दुःखसाधनानवाप्तिः स्वस्य दुःखसाधनप्राप्तिरित्युभयं' अननुरूपं संसर्गं द्योतयति। शिखरिणी वृत्तम् ॥७९॥

युक्तं सभायां खलु मर्कटानां शाखास्तरूणां मृदुलासनानि।
सुभाषितं चीत्कृतिरातिथेयी दन्तैर्नखाग्रैश्च विपाटितानि[1] ॥८०॥

[1]. र०–विपाटनानि। पद्यमिदं बा० पुस्तके टिप्पण्यां पठ्यते।

युक्तमिति॥ मर्कटानां वानराणां। सभायां खलु। तरूणां वृक्षाणां शाखाः। मृदुलासनानि मृदुलानि कोमलानि आसनानि। चीत्कृतिः चीत्कारः। सुभाषितं शोभनालापः। दन्तैः नखाग्रैश्च। विपाटितानि विदारणानि। आतिथेयी अतिथिसत्क्रिया। युक्तं–अनुरूपाणि। सामान्ये नपुंसकम्। अत्रानुरूपाणां वस्तूनामेकत्र संसर्गः समालङ्कारप्रयोजकः। तल्लक्षणं च–'अनुरूपसंसर्गः समम्'। पद्यमिदं रसगङ्गाधरे (पृ० ४५२) समालङ्कार उदाहृतम्। उपजातिवृत्तम्॥ ८०॥

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनानां चयः[1] ॥ ८१ ॥

[1]. र०–दुर्वासनासंचयः।

किमिति॥ हे सखे। तीर्थं पवित्रस्थानं किम्?–हरिपादपद्मभजनं हरेः विष्णोः पादपद्मस्य चरणकमलस्य भजनं सेवनम्। रत्नं किम्?–अच्छा स्वच्छा। मतिः बुद्धिः। शास्त्रं किम्? यस्य श्रवणेन द्वैतान्धकारोदयः द्वैतं जीवब्रह्मणोः भेदबुद्धिः, एव अन्धकारः अज्ञानं तस्य उदयः उद्भवः। गलति नाशं प्राप्नोति। सततोपकाररसिकं सततः निरन्तरः यः उपकारः तस्मिन् रसिकं तत्परं। मित्रं किम्?–तत्त्वावबोधः तत्त्वज्ञानम्। खेददानकुशलः खेदस्य दुःखस्य दाने कुशलः चतुरः। शत्रुः कः? इति वद कथय। दुर्वासनानां दुष्टाः वासनाः इच्छाः तासां चयः समूहः शत्रुः। प्रश्न परिसंख्या। पद्यमिदं रसगङ्गाधरे (पृ० ४८३) परिसंख्यायामुदाहृतम्। तल्लक्षणं च–'सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद् व्यावृत्तिः परिसंख्या।' अत्र हरिपादपद्मभजनादिकमेव तीर्थादि नान्यत्

इत्यर्थः तात्पर्यमर्यादयावसीयते शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ८२ ॥

निष्णात ॥ इति दुर्जनः खलः। वेदान्ते। निष्णातः पारंगतः। अपि च। साधुत्वं सज्जनत्वं। न एति न प्राप्नोति। जलनिधौ समुद्रे। चिरं बहुकालपर्यन्तं। मग्नः मैनाकः पर्वतः इव। मार्दवं कोमलतां। न एति न प्राप्नोति। पद्यमिदं रसगङ्गाधरे (पृ० ५०९) अवज्ञालङ्कार उदाहृतम्। तल्लक्षणम्–'तद्विपर्ययोऽवज्ञा'। विशदीकृतं चैतल्लक्षणं जगन्नाथेन–'तस्योल्लासस्य विपर्ययोऽभावः। अन्यस्यान्यदीयगुणदोषप्रयुक्तगुणदोषाधानाभाव इति पर्यवसितोऽर्थः। अत्र पूर्वार्धे प्रपञ्चानित्यत्वबोधकतारूपवेदान्तशास्त्रगुणप्रयुक्तस्य खले वैराग्यरूपगुणाधानस्य, उत्तरार्धे द्रवत्वरूपजलनिधिगुणप्रयुक्तस्य मैनाके मार्दवरूपगुणाधानस्य च विपर्ययो वर्णितः।' अनुष्टुभ् वृत्तम् ॥ ८२ ॥

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्।
शाखिनोऽन्ये विराजन्ते खण्डयन्ते चन्दनद्रुमाः ॥ ८३ ॥

नैर्गुण्यमिति ॥ नैर्गुण्यं गुणहीनता। एव। साधीयः साधुतरम्। गुणगौरवं गुणमहत्त्वं। धिक् अस्तु। अन्ये गुणहीनाः। शाखिनः वृक्षाः। विराजन्ते अनभिभूताः तिष्ठन्ति। किन्तु। चन्दनद्रुमाः। खण्डयन्ते छिद्यन्ते। पद्यमिदं रसगङ्गाधरे (पृ० ५१२) लेशालङ्कार उदाहृतम्। तल्लक्षणं च–'गुणस्यानिष्टसाधनतया दोषत्वेन, दोषस्येष्टसाधनतया गुणत्वेन च वर्णनं लेशः।' अयं चालंकारः अर्थान्तर न्यासेनानुविद्धः। अनुष्टुभ्-वृत्तम् ॥ ८३ ॥

परोपसर्पणानन्त[1]चिन्तानलशिखाशतैः।
अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ८४ ॥

[1]. प०H–परोपतर्पणाः सन्तः।

परोपसर्पणेति ॥ परोपसर्पणानन्तचिन्तानलशिखाशतैः परेषां अन्येषां यत् उपसर्पणं याच्ञाद्यर्थं अनुवर्तनं तेन अनन्ताः असंख्याः चिन्तानलस्य चिन्ताग्नेः शिखाः ज्वालाः तासां शतैः। अचुम्बितान्तःकरणाः न चुम्बि-

तानि स्पृष्टानि अन्तःकरणानि चेतांसि येषां ते । पादपाः वृक्षाः । साधु शोभनं यथा स्यात्तथा, सुखेनेत्यर्थः । जीवन्ति । पद्यमेतद्रसगङ्गाधरे (पृ.४१९) पठ्यते । अप्रस्तुतप्रशंसेयम् । अत्राप्रस्तुतानां पादपानां स्तुतिः प्रस्तुतानां केषां चित्सांसारिकजनानां निन्दायां पर्यवस्यति । अनुष्टुप् वृत्तम् ॥ ८४ ॥

शून्येऽपि च गुणवत्तामातन्वानः[1] स्वकीयगुणजालैः ।
विवराणि मुद्रयन् द्रागूर्णायुरिव सज्जनो जयति ॥ ८५ ॥

[1] भा०—शून्योऽपि च गुणवांस्तमातन्वानः ।

शून्य इति ॥ सज्जनः । शून्ये शून्यहृदये पुरुषे । अपि । स्वकीयगुणजालैः निजगुणसमूहैः । गुणवत्तां विनयादिगुणशालित्वं । आतन्वानः विस्तारयन् । तथा । विवराणि छिद्राणि दोषान् इत्यर्थः । द्राक् झटिति मुद्रयन् आच्छादयन्, परेषां इति शेषः । जयति सर्वोत्कर्षेण वर्तते । ऊर्णायुः लूताकीटः । इव । स यथा शून्ये गृहकोणे । स्वकीयगुणजालैः निजतन्तुसमूहैः । गुणवत्तां तन्तुमत्तां । आतन्वानः विस्तारयन् । तथा । विवराणि छिद्राणि । मुद्रयन् आच्छादयन् । भवति । श्लिष्टोपमालङ्कारः । अत्र शून्य-गुण-विवर-मुद्रण-पदैः श्लिष्टैः (द्व्यर्थकैः) उर्णायुसज्जनयोः सादृश्यं उपस्थाप्यते । आर्यावृत्तम् ॥ ८५ ॥

खलः[1] सज्जनकार्पासरक्षणैकहुताशनः ।
परदुःखाग्निशमनो मारुतः[2] केन वर्ण्यताम् ॥ ८६ ॥

[1] र०—अयं । [2] र०—परदुःखाग्निशमनमारुतः ।

खल इति ॥ सज्जनकार्पासरक्षणैकहुताशनः सज्जना एव कार्पासाः, शुद्धत्वकोमलत्वादिगुणैस्तूलरूपाः, तेषां रक्षणे, विपरीतलक्षणया नाशने, एकः मुख्यः हुताशनः अग्निः । खलः दुष्टः । भवतीति शेषः । परदुःखाग्निशमनः परेषां दुःखं एव अग्निः तस्य शमनः विपरीतलक्षणया दीपकः । मारुतः वायुः । केन वर्ण्यताम् वर्णनातीतः इत्यर्थः । दुष्टापेक्षया वायुर्नीचतर इत्यर्थः । रूपकमलङ्कारः। तल्लक्षणंच काव्यप्रकाशे–'तद्रूपकमभेदो य उपमानोपमेययोः' अत्र पूर्वार्धे खलसज्जनावुपमेयौ, अग्निकार्पासौ चोपमाने । उदाहृतं पद्यमिदं रसगङ्गाधरे (पृ. २३८) रूपकाङ्कलारे । अनुष्टुब्वृत्तम् ॥ ८६ ॥

परगुह्यगुप्तिनिपुणं गुणमयमखिलैः समीहितं[1] नितराम्।
ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः[2] ॥ ८७ ॥

[1] नि०-समीरितं। [2] प. L. C. खराः

परगुह्येति ॥ खलाः दुर्जनाः। आखवः मूषिकाः। इव। परगुह्यगुप्तिनिपुणं परेषां गुह्यानां गोपनीयानां दोषाणां गुप्तौ रक्षणे निपुणं चतुरं-सज्जनं। पक्षे-परेषां गुह्यानां गोपनीयानां अंगानां गुप्तौ आच्छादने निपुणं समर्थं-ललिताम्बरं शोभनवस्त्रं इव। गुणमयं दयादाक्षिण्यादिगुणैः पूर्णं। वस्त्रपक्षे—तन्तुमयं। अखिलैः सर्वैः। नितरां अत्यर्थं वाञ्छितं। एतादृशं सज्जनं ललिताम्बरं इव शोभनवस्त्रतुल्यम्। दूषयन्ति निन्दन्ति। पक्षे-खण्डयन्ति। यथा मूषिकाः वस्त्रं खण्डयन्ति तथा खलाः सज्जनं दोषारोपयुक्तं कुर्वन्ति। श्लिष्टोपमालङ्कारः। आर्या वृत्तम् ॥ ८७ ॥

यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः।
कारुण्यकुसुमाकाशः खलः सज्जनदुःखदः[1] ॥ ८८ ॥

[1]. र०-पिशुनः केन वर्ण्यते।

यश इति ॥ खलः दुष्टः। यशसौरभ्यलशुनः यशसः कीर्तेः यत् सौरभ्यं तस्य लशुनः, लशुन इव निजदुर्गन्धेन सर्वसुगन्धनाशकः। शान्तिशैत्यहुताशनः शान्तिरेव शैत्यं तस्य हुताशनः वह्निः अग्निवद्दाहक इत्यर्थः। कारुण्यकुसुमाकाशः कारुण्यं दया एव कुसुमानि तेषां आकाशः शून्यभागः, यथाऽऽकाशे कुसुमानामुत्पत्तिरसंभवा तथा खले दयोत्पत्तिरसंभवा। खलः दुर्जनः। सज्जनदुःखदः सज्जनानां पीडकः। भवतीति शेषः। पद्यमिदं रसगङ्गाधरे (पृ० २४५) रूपकालङ्कार उदाहृतम्। अनुष्टुभ् वृत्तम् ॥८८॥

धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥ ८९ ॥

धत्त इति ॥ यः वृक्षः। कुसुमपत्रफलावलीनां कुसुमानां पत्राणां फलानां अवलीनां पंक्तीनां। भरं अतिशयं, भारमित्यर्थः। धत्ते धारयति। घर्मव्यथां निदाघकालोत्पन्नां आतपपीडां। वहति सहते। शीतभवां

शीतकालोत्पन्नाम् । रुजं पीडाम् । च वहति । यश्च । अन्यसुखस्य हेतोः परेभ्यः सुखं दातुम् । देहं शरीरं । अपि इति शेषः। अर्पयति ददाति । तस्मै वदान्यगुरवे वदान्यानां दानशौण्डानां गुरवे शिरोमणये । तरवे वृक्षाय । नमः अस्तु । अत्र तरुवृत्तान्तेन परोपकाराय स्वदेहार्पणमपि कुर्वतां सज्जनानां वृत्तान्तो गम्यते । अप्रस्तुतप्रशंसालङ्कारः । सज्जनोऽपि दयादाक्षिण्यादिगुणभारयुक्तः शीतोष्णवर्षादिदुःखसहिष्णुः परोपकाराय स्वदेहमपि तृणवत्परित्यजति । वसंततिलका वृत्तम् ॥ ८९ ॥

हालाहलं खलु पिपासति कौतुकेन
कालानल परिचुचुम्बिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं तनुते मनीषाम् ॥ ९० ॥

हालाहलमिति ॥ यः नरः । दुर्जनं खलं । वशयितुं स्ववशमानेतुं । मनीषां बुद्धिं । तनुते करोति । स खलु । कौतुकेन हेलया न तु मरणेच्छया । हालाहलं कालकूटं विषं । पिपासति पातुं इच्छति । कालानलं प्रलयकालीनं अग्निम् । प्रकामं अत्युत्कटं ननु यत्किंचित् । परिचुचुंबिषति परिचुम्बितुं इच्छति । व्यालाधिपं सर्पराजम् । च । अद्धा हठात् । परिरब्धुं आलिङ्गितुं । यतते यत्नं करोति । अत्र विषं पातुमिच्छति, प्रलयाग्निं चुम्बितुं इच्छति, तथा सर्पश्रेष्ठमालिंगितुमिच्छतीति वाक्यत्रयस्यासंबद्धार्थकतया विषपानादिवत् दुर्जनवशीकरणमित्युपमायाः कल्पनम् । अतोऽत्र मालानिदर्शनालङ्कारः । तल्लक्षणं च काव्यप्रकाशे—'अभवन्वस्तुसंबन्ध उपमापरिकल्पकः' इति । पद्यं चेदं रसगङ्गाधरे (पृ० ३४६) निदर्शनालङ्कार उदाहृतम् । वसन्ततिलका वृत्तम् ॥ ९० ॥

दीनानामिह[1] परिहाय शुष्कसस्या[2]-
न्यौदार्यं प्रकटयतो[3] महीधरेषु ।
औन्नत्यं परममवाप्य[4] दुर्मदस्य[5]
ज्ञातोऽयं जलधर तावको विवेकः ॥ ९१ ॥

[1]. पा० A. अथ । [2]. पा० L. C. °सस्यान् । [3]. पा०—L. C. प्रकटयसे । [4]. पा०—L. C. विपुलं । [5]. पा०— L. C. धर्मदस्य जातः.

दीनानामिति ॥ हे जलधर। दीनानां अनन्यगतीनां वराकाणां कृषकाणां। शुष्कसस्यानि शुष्कधान्यानि। इह जगति परिहाय त्यक्त्वा। महीधरेषु पर्वतेषु। औदार्यं दातृत्वम्। प्रकटयतः दर्शयतः। तव। अतः परं उत्कृष्टम्। औन्नत्यं महात्म्यं, उच्चपदं इत्यर्थः। अवाप्य प्राप्य। दुर्मदस्य दुष्टः मदः गर्वः यस्य तस्य। तावकः तव। विवेकः योग्यायोग्यविचारः ज्ञातः। अस्माभिरिति शेषः। हे मेघ, त्वं पर्वतेषु वर्षसि किन्तु यैः कृषीवलैरपेक्ष्यसे न तेषां शस्येषु—त्वं खलु स्वोच्चपदाद्धेतोः गर्वितः, अतो विवेकशून्यः—इति मुख्योक्तिः। अन्योक्तिस्तु—हे दुर्मद, यैः प्रार्थ्यसे तेभ्यो न ददासि, ये च नेच्छन्ति तेषु वदान्यत्वं दर्शयसि, अतस्ते विवेकराहित्यं स्फुटमेवेति कस्यचित्कंचित्प्रत्युक्तिः। अत्राप्रस्तुतेन जलधरवृत्तान्तेन प्रस्तुतः कश्चिद्विवेकशून्यो गर्वितश्च नरो गम्यते। अतः। प्रस्तुतप्रशंसालंकारः। रसगङ्गाधरे च पद्यमिदं—(पृ० ४७३) 'दीनानामथ परिहाय शुष्कसस्यान्यौदार्यं वहति पयोधरो हिमाद्रौ। औन्नत्यं विपुलमवाप्य दुर्मदानां ज्ञातोऽयं क्षितिप भवादृशां विवेकः॥' इति पाठभेदेन अर्थान्तरन्यासोदाहरणे पठ्यते। उक्तं च जगन्नाथेन—'अत्र दानेनासंभावितस्य विदुषो राजानं प्रति कोपवचने पूर्वार्धगतो विशेषः उत्तरार्धगतः सामान्ये प्रस्तुते समर्थकः। एवमप्रकृतः प्रकृतस्य समर्थनमुदाहृतम्।' प्रहर्षिणी वृत्तम्। तल्लक्षणं च—'म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीयम्॥ ९१॥

गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम्।
तस्मादप्यतिगुरवः[1] प्रलयेऽप्यचला महात्मानः॥ ९२॥

[1] र०—जगदण्डादपि गुरवः

गिरय इति॥ गिरयः पर्वताः। गुरवः महान्तः। तेभ्यः गिरिभ्यः अपि। गुर्वी गुरुतरा। उर्वी पृथ्वी। ततः पृथिव्याः अपि। गुरुतरं। जगदण्ड ब्रह्माण्डं। तस्मात् ब्रह्माण्डात्। अपि। अतिगुरवः गरिष्ठा इत्यर्थः प्रलये जगन्नाशकाले। अपि। अचलाः निर्विकाराः। महात्मानः। सारालंकारः। तल्लक्षणं काव्यप्रकाशे 'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः'। पद्यमिदं रसगङ्गाधरे (पृ० ४६५) सारालंकार उदाहृतम्॥ आर्या वृत्तम्॥ ९२॥

व्योमनि बीजाकुरुते[1] चित्रं निर्माति सुन्दरं पवने[2] ।
रचयति रेखाः सलिले[3] यस्तु खले[4] चरति सत्कारम् ॥९३॥

१. नि०–वासं कुरुते । प०–शंबां कुरुते । २. नि० प०–यत्नतः सलिले । ३. नि०, प०–स्नपयति पवनं सलिलैः ४. नि० यः क्षुद्रे ।

व्योमनीति ॥ यः तु । खले दुष्टे । सत्कारं आदरं । चरति दर्शयति । स । व्योमनि आकाशे । बीजाकुरुते बीजानि प्रक्षिप्य क्षेत्रकर्षणं कुरुते । पवने वायौ । सुन्दरं चित्रं निर्माति रचयति । तथा । सलिले जले । रेखाः रचयति । आकाशे बीजारोपणं, वायौ चित्रनिर्माणं तथा जले रेखारचनं यथा निष्फलानि तथा खले सत्कारः । निदर्शनालङ्कारः । पद्यमिदं रसगङ्गाधरे ( पृ० ३४६ ) निदर्शनायामुदाहृतम् । आर्या वृत्तम् ॥ ९३ ॥

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम्[1] ॥ ९४ ॥

१. र०–°माननम् ।

हारमिति ॥ मर्कटः वानरः । केन अपि । अज्ञेन मुर्खेण । वक्षसि । दत्तं अर्पितम् । हारं । लेढि जिह्वया स्पृशति । जिघ्रति । संक्षिप्य एकीकृत्य आसनं स्वकीयमित्यर्थः । उन्नतं उच्चं । करोति तस्योपरि तिष्ठतीत्यर्थः । पद्यमिदं रसगङ्गाधरे ( पृ० ४०६ ) अप्रस्तुतप्रशंसायामुदाहृतम् । उक्तं च तत्र जगन्नाथेन–' अत्र मर्कटवृत्तान्तेनाप्रस्तुतेन प्रस्तुतमनभिज्ञेषु रमणीयवस्तुसमर्पणं नाशाय भवतीति सामान्यं गम्यते । ' अनुष्टुभ् वृत्तम् ॥ ९४ ॥

मलिनेऽपि रागपूर्णां[1] विकसितवदनामनल्पजल्पेऽपि[2] ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥९५॥

१. प०–C. परागपूर्णां । २. नि०–°ममन्दजल्पे ।

–मलिनेऽपीति ॥ हे भ्रमर । मलिने कृष्णवर्णे,पक्षे कपटयुक्ते नायके । अपि रागपूर्णां रागः रक्तिमा तेन पूर्णां, पक्षे प्रेमपूर्णां । अनल्पजल्पे अनल्पः अधिकः जल्पः भाषणं यस्य तस्मिन् निरंतरं गुंजारवं कुर्वति, पक्षे बहुसंबद्धप्रलापिनि । अपि विकसितवदनां विकसितं प्रफुल्लं वदनं मुखं यस्याः तां । प्रफुल्लसरोजां, पक्षे सहासमुखीं । चपले चंचले । अपि । त्वयि ।

सरसां रसेन मधुना, पक्षे प्रीत्या, युक्तां। सरोजिनीं पद्मिनीं, पक्षे नायिकां। वा कथं त्यजसि। तस्यास्त्यागो नितरामनुचित इत्यर्थः। हे भ्रमर त्वं मलिनोऽसि, वाचाटोऽसि तथा चपलोऽप्यसि, एवंगतेऽपीयं पद्मिनी त्वयि नितरामनुरक्ता, नातस्त्याज्येयं त्वयेति–मुख्योक्तिः। अन्योक्तिस्तु–हे नायक त्वं वर्णेन कृष्णः, बहुभाषी तथा चंचलचित्तोऽसि, एवं गतेऽपि येयं त्वयि सर्वभावेनानुरक्ता कामिनी तस्यास्त्यागो नितरामनुचितः। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन भ्रमरसरोजिन्योर्वृत्तान्तेन प्रस्तुतः कश्चिच्चपलनायकानुरक्ताकामिन्योर्व्यवहारो गम्यते। उदाहृतं चेदं पद्यं रसगङ्गाधरे (पृ० ३६७) अप्रस्तुतप्रशंसालङ्कारोदाहरणे। गीति वृत्तम्॥ ९५॥

स्वार्थं धनानि धनिकात्प्रतिगृह्णतो य[1]–
दास्यं भजेन्मलिनतां किमिदं विचित्रम्।
गृह्णन् परार्थमपि वारिनिधेः पयोऽपि
मेघोऽयमेति[2] सकलोऽपि च[3] कालिमानम्॥ ९६॥

[1] नि–ऽपि स्वास्यं। [2] प. F मेघो यदेति। [3] प.–किल for अपि च।

स्वार्थमिति॥ स्वार्थं स्वप्रयोजनार्थं। धनिकात् धनानि प्रतिगृह्णतः दानेन स्वीकुर्वतः यत्। आस्यं मुखम्। मलिनतां मालिन्यम्, तेजोराहित्यमित्यर्थः। भजेत् श्रयेत। इदं किम्। विचित्रं आश्चर्यकरम्। वारिनिधेः समुद्रात्। परार्थम् अपि परप्रयोजनाय अपि, न तु स्वार्थं साधयितुं। पयः जलं। अपि, न तु धनादिकं। गृह्णन्। अयं। सकलः समग्रः। अपि मेघः। न तु केवलं मुखमेव। कालिमानं कृष्णवर्णत्वं। एति प्राप्नोति। धिक् याचनमित्यभिप्रायः। अत्र पूर्वार्धगता सामान्योक्तिरुत्तरार्धगतया विशेषोक्त्या समर्थ्यते। अतोऽर्थान्तरन्यासोऽलङ्कारः। तल्लक्षणं काव्यप्रकाशे– 'सामान्यं वा विशेषेण तदन्येन समर्थ्यते। ज्ञेयः सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा' इति। वसंततिलका वृत्तम्॥ ९६॥

जनकः सानु[1] विशेषो जातिः काष्ठं भुजङ्गमैः सङ्गः।
स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम्॥ ९७॥

[1]. नि०–स्थाणु०

जनक इति॥ हे पटीरज चन्दन। तव जनकः तातः, उत्पत्ति-

स्थानमिति यावत्। सानुविशेषः पर्वतविशेषः, मलयाचलः इत्यर्थः। **जातिः** कुलं। काष्ठं। **सङ्गः** सहवासः। **भुजङ्गैः** सर्पैः। एवं जन्मजातिसहवासैः सुतरां नीचोऽपि त्वं। **स्वगुणैः** शैत्यसुरभित्वादिभिः। **तथापि। महिमानं** महत्त्वं। **यातः** प्राप्तः। **असि**। हे चन्दन, जन्म जडात् पदार्थात् पर्वतादित्यर्थः, कुलमपि ते काष्ठं, अतिनीचं, एवं सहवासोऽपि सर्पैः, तथापि शैत्यसुरभित्वादिभिर्गुणैः कृत्वा त्वं सर्वैः पूज्यस इति—मुख्योक्तिः। अन्योक्तिस्तु जन्मजातिसङ्गा न सतामुन्नतौ कारणानि किन्तु स्वगुणा एव। अप्रस्तुतप्रशंसालङ्कारः। अत्राप्रस्तुतेन चन्दनेन प्रस्तुतः कश्चिद्गुणवान् गम्यते। **आर्या** वृत्तम्॥ ९७॥

कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः[1] संभृता-
स्तैरेवास्य कलेः कलेवरपुषो[2] दैनंदिनं वर्तनम्[3]॥ ९८॥

[1] पु०-E तैस्तैर्गुणैः। [2] पा.-A कलेवरजुषो। [3] पा.-H दैन्यं दिनं वर्तते।

कस्मा इति॥ हे सज्जन साधो। हन्त इति खेदे। **कस्मै फलाय** किं फलं प्राप्तुं। **गुणग्रामार्जने** गुणानां ग्रामः समूहः तस्य अर्जने प्राप्तौ। **त्वं। सज्जसि** युक्तो भवसि। **चेत्** यदि ब्रवीषि। **स्वात्मोपस्करणाय** स्वस्य आत्मनः उपस्करणाय भूषणाय—इति। तर्हि **मम। पथ्यं** हितं। **वचः समाकर्णय। शोभाभरैः** शोभातिशयैः। **संभृताः** पूर्णाः। **ये भावाः** पदार्थाः। **हृदयं नितरां हरन्ति। तैः एव** पदार्थैः। **अस्य। कलेवरपुषः** कलेवरं स्वशरीरं पुष्णाति इति तस्य। **कलेः** कलियुगस्य। **दैनंदिनं** दिने दिने भवं। **वर्तनं** जीवनं। सर्वेऽपि ते रमणीयाः पदार्थाः कलेः नित्यं भक्ष्या इत्यर्थः।

पद्यमिदं रसगङ्गाधरे (पृ० १३६) पठ्यते। तत्रोक्तं जगन्नाथेन—'इह यद्यपि रमणीयाः पदार्थाः कलेर्नित्यमदनीया इति वस्तुना प्रौढोक्तिसिद्धेन—मतुं कामयसे चेद्गुणप्राप्तौ यतस्व—इति वस्तु व्यज्यते, तथापि तस्य पर्यायोक्तात्मनो वाच्यापेक्षया सुन्दरताविरहाद् गुणीभूतत्वमेव। अलङ्कारा हि वाच्यसौंदर्यसाराः प्रायशः स्वान्तगतं प्रतीयमानं पृष्ठतः कुर्वन्ति।' अत्र पर्यायोक्तालङ्कारः।

तल्लक्षणंच–'विवक्षितार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम्' (र० गं०, पृ० ४०९)। अत्र विवक्षितोऽर्थः–'मतुं कामयसे चेद् गुणग्राह्यो यतस्व' इति। स चायं प्रतीयमानः, व्यङ्ग्य इत्यर्थः। तस्य च भंग्यन्तरेण श्लोके प्रतिपादनम्। शार्दुलविक्रीडितं वृत्तम्॥ ९८॥

धूमायिता दश दिशो दलिता[1]रविन्दा
देहं दहन्ति दहना इव गन्धवाहाः।
त्वामन्तरेण मृदुताम्रदलाम्र[2]मञ्जु-
गुञ्जन्मधुव्रत मधो[3] किल कोकिलस्य॥ ९९॥

[1]. नि. ललिता° [2]. नि.–मृदुजालकलाम्र। [3]. नि.–'मधो। अच्युतराय suggests. मधौ प.–.H मृदुलाम्र° A. मृदुताम्र-दलाम्र°

धूमायिता इति॥ हे मृदुताम्रदलाम्रमञ्जुगुञ्जन्मधुव्रत मृदूनि कोमलानि ताम्राणि रक्तानि दलानि पर्णानि यस्य सः एतादृशः आम्रः आम्रवृक्षः तस्मिन् मञ्जु मनोज्ञं गुञ्जन्तः मधुव्रताः भ्रमराः यस्मिन् तादृशः। मधो वसन्त। त्वां। अन्तरेण विना। कोकिलस्य किल। दलितारविन्दाः दलितानि विकसितानि अरविन्दानि यासु ताः। दश दिशः। धुमायिताः धूमपूर्णाः। गन्धवाहाः सुरभिवायवः। दहनाः वह्नयः। इव। देहं शरीरम्। दहन्ति तापयन्ति। अत्र पूर्वार्धे उपमालंकारः। श्लोके चास्मिन्न प्रस्तुतप्रशंसालङ्कारः। उभयोश्च संसृष्टिः। प्रियविरहे सुखकराण्यपि वस्तूनि भृशं तापयन्तीति तात्पर्यम्। अत्राप्रस्तुतेन कोकिलवृत्तान्तेन प्रस्तुतः कश्चित्प्रियानुरक्तोजनो गम्यते। वसंततिलका वृत्तम्॥ ९९॥

भिन्ना महागिरिशिलाः करजाग्रजाग्र-
दुद्दामशौर्यनिकरैः करटिभ्रमेण।
दैवे पराचि करिणामरिणा तथापि
कुत्रापि नापि खलु हा[1] पिशितस्य लेशः॥ १००॥

[1]. प.–A. बत हा। H. लिलिहे।

भिन्ना इति॥ दैवे भाग्ये। पराचि पराङ्मुखे सति। करिणां गजानां। अरिणा शत्रुणा, सिंहेनेत्यर्थः। करटिभ्रमेण हस्तिभ्रमेण। करजाग्रजाग्रदुद्दामशौर्यनिकरैः करजाः नखाः तेषां अग्राणां कोटीनां जाग्रन्तः अतन्द्राः

अत एव उद्दामाः उत्कटाः ये शौर्यनिकराः पराक्रमसमूहाः तैः। महागिरिशिलाः महान्तः पाषाणखण्डाः। भिन्नाः विदारिताः। हा इति खेदे। तथापि तेन कुत्रापि। पिशितस्य मांसस्य। क्लेशः स्वल्पांशः अपि। न आपि प्राप्तः। खलु। सिंहो महान्तं पराक्रमं कृत्वा गजभ्रमेण बृहत्पाषाणखण्डान् विदारितवान्–किन्तु दैवप्रातिकुल्यात् तेन मांसस्य लेशोऽपि न प्राप्त इति मुख्योक्तिः। अन्योक्तिस्तु–भाग्यविपर्यये सकलमपि वीर्यं वृथा अप्रस्तुतप्रशंसालङ्कारः। वसन्ततिलका वृत्तम्॥ १००॥

गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि।
हरिशिशु[1]रुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम्[2] ॥१०१॥

[1]. प.–A. हरिपतिः। [2]. नि.–अतिभृशं।

इति श्रीपण्डितराजजगन्नाथनिर्मिते भामिनीविलासे

प्रास्ताविक विलासः॥

गर्जितमिति॥ हरिशिशुः सिंहशावकः। निशार्धजातः अपि निशायाः रात्रेरर्धं निशार्धं जातं वयः यस्य सः। अर्धरात्रिप्रसूतोऽपि। मनाक् अल्पं। गर्जितं मेघशब्दं। आकर्ण्य श्रुत्वा। द्राक् झटिति। उत्पतितुं आक्रमणं कर्तुं। अङ्गानि। आकुञ्च्य संकुच्य। मातुः। अंके क्रोडे। निभृतं निश्चलं यथा स्यात्तथा। लीयते प्रच्छन्नस्तिष्ठति। तेजस्विनः शैशवेऽपि स्वभावं न त्यजन्तीति भावः। अत्र सिंहशिशोः स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः। तल्लक्षणं च काव्यप्रकाशे–'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्।' गीतिवृत्तम्॥ १०१॥

इति चपक टीकायां प्रास्ताविकविलासः॥

---

PANDIT JAGANNATH'S

# BHĀMINĪVILĀSA

(*A Collection of Stray Verses in Sanskrit*)

## ENGLISH TRANSLATION

## I. PRĀSTĀVIKA (ANYOKTI) VILĀSA

1. The elephants, whose temples are sullied with rut, are heard (to have run away) to the end of the quarters; the female elephants are an object of pity; while the deer are indeed not a match. Where then in this world should this lord of the beasts exhibit the skill of his nails, the ends of which are incomparable?

2. Tell (me) how the best of the race of swans, who had passed his former days on the Mānasa Lake in the water, made fragrant by the pollens falling from the rows of full blown lotuses, should now dwell in the water of a puddle full of frogs, gathered together?

3. When the female chakora birds, with their eyes unsteady on account of thirst, are looking towards the East; when the Moon-lotuses are giving up their silence (are blowing open); when cupid is twanging his bow and when the anger of proud women is on the point of giving way; is it, O Creator, proper for you to spread a cluster of clouds over the Moon?

4. O blooming lotus, let the bees tasting your sweet juice, dripping downwards, hum agreeably. (But) this breeze, spreading your fragrance in every direction, without any self-interest, is a friend of yours of quite a different type.

5. O Kuṭaja, when the bee by chance approaches (thee) do not show disrespect to him; (for) he is held in high respect by lotuses laden with honey.

6. O Cuckoo, pass away the dull days by resorting to any other forest, until there appears a mango tree, surrounded by rows of bees.

7. O well, never give yourself up to sorrow with the thought "I am exceedingly low (नीच)" since you have your bottom (हृदय) full of very sweet water (रस) and you take the string (गुण) of others to help it up.

(Taking the words नीच, हृदय, रस, ग्रहीतृ and गुण to mean poor, heart, love, appreciator, and merit respectively, the version would stand thus:—O man, never give yourself up to sorrow with the thought, "I am exceedingly poor (नीच)" since thy heart (हृदय) is full of love (रस) and thou art the appreciator of merits (गुण) in others.)

8. O lotus plant! Why do you distress your mind when you are disregarded by ignorant cranes? May the bees, the appreciators of your fully developed honey, live long on earth.

9. Alas! How indeed did the bee, who passed his days in the full-blown lotus, containing abundant honey entertain a desire for Kuṭaja tree?

10. O sandal-tree! For whose power of description can this greatness of yours be a subject (who can describe your greatness)? Since, by emitting fragrance you feed the snakes (though) vomitting poison.

11. O sandalwood! What intelligent (sensible) person can imitate this action (manner) of yours since though powdered you give delight by means of your fragrance even to those who reduce you to atoms.

12. O swan! If you even are disposed to be idle in separating milk from water, who else on earth will fulfil (adhere to) your family vow?

13. Glory to the persons of indescribable greatness whose exterior is like the edge of a sword and who are

more ferocious than the most frightful snakes but who are at heart so mild as evidently to become preceptors for teaching mildness to grapes.

14. O full-blown lotus! Let the bees, enjoying your honey at their own pleasure, produce humming; but none else in this world than the wind is well versed in spreading your fragrance in all directions.

15. Blessed is the existence of this lake on the road whose body is reduced every day by such constant distressing thoughts, "When I shall be soon after dried up by hundreds of scorching rays of the Summer-sun, whom will this crowd of travellers go to, when oppressed with excessive heat?" Fie upon the existence of the oceans.

16. O tank! When you are reduced (dried up) the birds around might take to the path of the sky, the bees might resort to the blossom of mango trees; but alas! What state would the most miserable fish be reduced to?

17. O lotus! Don't think that the desire for fragrance in this wind is like that of the bee; (for) though high minded, he has stooped to beg only for the pleasure of the people.

18. O Mālati! Don't remain silent (shut) when the bee is sweetly humming; (for) even the trees of heaven, the foremost among the charitable, bear him on their heads with profound respect.

19. O sandal-tree! How can we describe this magnanimity of yours since you bear (on your body) those very serpents by whom you, though possessed of many good qualities, are made unfit to be served by the good.

20. O bee! What a sensible creature must you be, if you desire to fly to yet another flower, after having once sat (enjoyed) on a flower of the trees of heaven, before which no mention of any other fragrance can be made (which defies any other fragrance).

21. O river, holy because of taking your source from the Vindhya Mountains, think well if it be proper for you to accept of the gutter water, even though you be dried up.

22. Tell us, O Barbur tree, attracted by what should we approach you; (for) you are never seen with the charms of leaves, fruits or flowers, but on the contrary are covered with thorns.

23. O cuckoo, while alone, in this forest, you should never utter sweet tunes; for these cruel crows do not kill you mistaking you to be one of their own kind.

24. O Father of Pārvatī, for what attraction, do you sustain (the weight of) this snow drift, which on earth, destroys the beauty of a number of trees and causes affliction to many living beings?

25. O young one of an elephant, never show any disrespect to this bee, coming to thee; for he is welcome to take his seat upon the head of even the best of elephants, who appear charming on account of (flowing) rut.

26. This fondness for other flowers, in a bee all of whose desires are fully gratified by the enjoyment of the fragrance of flowers of the celestial trees, is a matter of great ridiculousness.

27. Indeed cuckoos have been questioned, all trees around are examined; but O mango tree! no equal to thee has been found in this world by the bee.

28. O gardener! Is it possible for the clouds of rainy season which pour down heavy showers of water from all sides, to work that development in this tree, which is effected with tenderness by you with little water in the summer when the sun is very hot?

29. The lord of the garden is destitute of discretion, indeed the soil is devoid of water, the ten quarters are made dusty by the tempestuous winds and the sun is unbearable, thus when everything in the desert is about to cause destruction of चंपक tree. O cloud! The Creator has fortunately sent thee forth from somewhere sprinkling अमृत (water and nectar).

30. Alas! There in the cave—where collection of pearls are rolling on the ground—of the lion, is heard a confused noise of she-jackals when he is dead, where formerly elephants, with a collection of bees hovering about the flow of excessive rut and with their eyes unsteady through fear, could not take their stand.

31. The gardener feeling equal regard to all of the trees does not show great compassion for young बकुल tree; this बकुल tree however, has filled all the quarters with the humming of hosts of bees by means of the fragrance of its flowers speedily blooming forth.

32. O lord of the trees, your root is stout and firmly fixed in the ground, your branches are strong and many, and your situation is on an inaccessible mountain, what have you to fear then (*i. e.* you have nothing to fear). But this voracious and relentless wild fire alone, forming a circle of flames creates a little anxiety in my mind.

33. O cloud, the चातक bird, though scorched by the terribly hot rays of the sun in summer, passed the long days with great difficulty calling thee to mind;

and now when happily thou art in the range of his sight if thou art pleased to favour him with a shower of hail whom are we to blame ? (कृपां this word is ironical.)

34. O cloud, what sort of pride of prosperity is this of thine? Thou pourest down great quantity of water on the peaks of mountains though the trees which are attacked by a number of flames of wild fire, are fading and losing creepers encircling them.

35. O traveller, do not be disquieted in mind even in the least at hearing the harsh thunder of cloud here. O friend, hast thou not heard of this cloud who has devoted all his जीवन (water or life) to the removal of the universal distress ?

36. O sandal tree, thy fragrance is known even to three worlds, thy power of cooling is uncommon and thy fame has reached the court-yards of women in form of quarters; but listen to this one thing, this collection of serpents vomitting the flames of poison in thy hollow trunks swallow up all the good qualities of thine.

37. There is no desire of reciprocal kindness, no courtesy, no affection, no companionship. Still the high (fig.) cloud removes the distresses of the people.

38. Pure lake is thy birth-place, hand of Viṣnu is thy abode, Laksmī has her residence in thee and thy fragrance is attractive to the hearts of gods; with these and such other qualities, O lotus, had thy love turned towards a swan, the best of birds, thy dignity would have been very great.

39. On thy shores jewels brilliant like the disc of the sun roll along with stones, and in thy water along with aquatic animals God Nārāyaṇa takes his sleep; having seen thus, on one hand, thy indiscretion and

great height of dignity, on the other, tell me, O ocean, whether I should censure thee or praise thee?

40. O ocean, what with these jewels and what with thy body resembling a cloud (in dark blue colour), when thy water does not reach the mouth of the thirsty?

41. O lake, if thou dost not immediately quench the thirst of those that are distressed by it even now when there is such abundance of water, in summer, when the sun will be spreading fire everywhere, whose thirst wilt thou satisfy, being almost empty?

42. O ocean, we have to say something to thee if thou wilt have no recourse to anger. "Thou, though great, alas dost not refuse the waters poured down by a cloud who is but thy suppliant."

43. O monsoon-rivulet, we do not object to your entering the stream of the daughter of Jahnu (Bhāgīrathī); but it is not proper that you manifest your waves to her face. (It is ignoble to quarrel with the person resorted to.)

44. O lotus, if thou hast recourse to greediness, when through misfortune that bee longs for honey, which first smells and then quits the flowers of celestial trees shining in the garden of Indra so that they should be again smelt, by gods, what should we say to thee?

45. O swan, by what action of thine wilt thou repay the favours of the lake from which, lotus-stalks are eaten, water is drunk and lotuses are used as seats by thee?

46. If thou givest up the feeling of gratitude towards the mango tree which, now through misfortune, is reduced to miserable state, the same mango-tree about which at the advent of the spring thou didst

enjoy many pleasures amongst the collection of blowing blossoms, producing sweet humming, then who else is baser than thee?

47. O black antelope, why dost thou indulge in sport with the female deer in this forest with thy eyes shut through great pride? Know that this place full of pearls dropped down from the broken temples of elephants is the boundary of pleasure-district of a lion.

48. How a herd of deer should be killed by (lion) the deadly enemy of elephants (not of poor little animals) though they (deer) come before him without any fear and though he (lion) is distressed by the digestive fire in the stomach?

49. How, that lion should now show his prowess to the deer, who had formerly graced the earth with lines of pearls dropping down from the broken temples of elephants?

50. O leader of the herd of elephants blind through intoxication, my friend, thou shouldst not make a stay in this dense forest even for a moment, because here in the cave sleeps the best of lions, who has broken asunder the collection of great rocks by his sharp nails mistaking them for elephants.

51. O young cub of the king of elephants, never enter the caves of the mountain, being puffed up with great pride; if the cub of a lion sucking breast is awakened, there will remain only female elephants on the earth.

52. The gardener successful in the plantation of a number of trees, though skilful, planted even a बकुल tree somewhere in a corner as usual; but who knows the fact that it will fill the whole world with fragrance of flower (even) from the corner?

53. Now that Rāghava fish has abandoned the ocean on account of amorous quarrel, in the interior of what (lake) should this Rāghava sport, that is skilful in swallowing the large Timiṅgala fish and at the time of whose sporting the elephants of quarters mistake the noise of rolling waves for the revolutions of the churning mountain Meru?

54. Some part of forest was destroyed by intoxicated elephants, some part was cut down by people distressed with cold, the remainder of the forest was reduced to ashes by the rays of the hot summer-sun; alas! this tender लवंग creeper standing in the corner and giving fragrance to the quarters is also burnt by wild fire.

55. O Nandana forest, thou art a crest-jewel of celestial world, a wonderful abode of the collection of celestial trees, the fulfilment of the virtuous or meritorious acts of Indra and Paulomī (his wife); but indeed the prayer of the compassionate, to the Creator or fate runs as follows: "Let fire, the skilful dancer on the stage of Khāṇḍava forest, be away from thee."

56. "When all men are away from me being engaged in their respective business I will fly away from this cage by breaking open the door with the end of my beak;" while thus a parrot was drinking nectar in form of desires, there came in a large serpent like the trunk of an elephant.

57. O active or unsteady deer residing in a mountain, how have you determined to plunge into this river, the beloved of ocean, full of series of waves? Even the biggest of elephants went down to the bottom like a large stone, being turned round and round in the eddies throwing up great quantity of water.

58. A lioness addresses her young when it casts a stern look at a cloud thinking it to be an elephant :—

O young one, drink milk; why dost thou cast severe glances at these quarters under the misapprehension of an intoxicated elephant there? It is but a dark-blue fresh cloud which removes the distresses from the hearts of three worlds, that thunders gravely.

59. A lioness addresses a cloud :—

O cloud, enough of your grave thunders, the young in my womb which is but a month old, moves about in the womb taking thee to be an intoxicated elephant.

60. What exploits should be described to the deer by the lion who is an enemy of the skill of the elephants in scratching their temples?

61. O lotus, thy birth is from pure water, thy loveliness rivals with the face of a lovely woman, thy abode is the hand of Hari, thy fragrance attracts the hearts of gods, thou art the whole essence of (chief object of description for) poets and (a principal arrow for) a cupid; with all these qualities thou showest love for मधुप (drunkard or bee); what should we say to thee?

62. Why dost thou enjoy comfortable sleep gracefully shutting thy eyes? O lord of elephants, the enmity with the lion, dangerous in the end, gains ground.

63. From the lips of the wise words do not come out rashly, but if once they come out, they are never retracted like tusks of elephants.

64. Generosity well known to the three worlds, birth in great store of water, abode in the Nandana forest and fragrance attracting the hearts of gods, all these qualities of the celestial tree would have been uncommon, if there be discretion in granting requests of only the best of the supplicants.

65. 'I alone, being relentless, kill animals having confindence', with this idea, O fowler, do not you have recourse to remorse at heart; in palaces of kings and in holy places there are many villains like you who are the enemies of the good and who keep their motives concealed.

66. O mother earth, thou bearest even those who pretending to be the humblest, cheat the good, creating confidence in them by agreeable speeches; hast thou also lost thy discretion?

67. Unusual is the universally beneficial inclination of mind, extraordinary is the process of discourse, uncommon are the deeds and agreeable is the appearance to the afflicted. In short every thing of the learned is far above description.

68. Indeed, the foremost amongst the noble minded, when fallen into misfortune, extends his generosity more than before. Kâlâgaru (sandle wood) when thrown in fire spreads its peculiar fragrance all around.

69. Even the rage of the pure-hearted men endowed with great many qualities agreeable to the world, is pleasant as even bitterness of saffron full of fragrance pleasing to the people, is delightful.

70. If foolish persons, stealing particles (of knowledge) coming out from the abode of learning, swagger before those who have easily snatched away immense wealth from the residence of the goddess of learning; in a day or two young birds will easily set their foot on the head of serpents, hare on the head of elephants, and dogs on the head of lions.

71. Men scolded with harsh words by the elders or teachers rise to greatness; precious stones are never

placed on the head of a king unless they are rubbed against stones (touch stones, &c.)

72. A sandal tree bears serpents, a lamp has on its top a coating of soot, even the moon possesses a blot, so also lords of the earth patronise the wicked.

73. Indeed a noble man gives great pleasure to all people by his benevolent actions without being asked: by whom is the moon requested to cause the beds of the night lotuses to blow by his gentle ray?

74. Ever victorious is that wonderful man who abandoning self-interest, is ever engaged in doing good to others, who without distinction, has a feeling of equality even towards inferior beings in whose mind charming and elevated goodness shines naturally and who is able (to perform good actions).

( The other sense of the verse has relation to grammar, the wonderful man there in that sense is तत्पुरुषसमासः. For that, see notes and the Commentary. )

75. A man, though born of high family and possessing merits, is revered only when in association of some special thing. वीणादण्ड (the neck of the lute) though वंशभव (made up of bamboo) and गुणवान् (consisting of strings) does not rise to greatness when without a gourd.

76. An object, though endowed with innumerable good qualities is disregarded owing to a single bad quality, as garlic, on account of its strongly bad odour, though it stands high in the list of medicines.

77. A man of good qualities though fallen into misfortune extends certainly his generosity; here a calcined and purified quicksilver serves as an illustration.

78. Also that Sītā, who, being terrified at the sight of a young hare while playing in the forest, used

to enter into the arms of her husband, the destroyer of her fears, when carried away by रावण and surrounded by demons having teeth as large as ploughs, being helpless, is reduced to some indescribable state.

79. The body of cupid fit to be worshipped with the collection of flowers in form of eyes of the celestial women, became at once reduced to a heap of ashes by the fire from the head of the God Śiva; the cupid—who was aiming his arrow at God Śiva, having boasted often of his muscular strength before gods.

80. In the assembly of monkeys the branches of trees serve well for the soft seats, the chattering for the excellent speeches and the scratchings by teeth and ends of the nails for hospitality.

81. What is a holy place? Devotion for the lotus-like feet of Hari. What is a jewel? Pure heart. What is a science? At the hearing of which disappears the darkness of dualism in philosophy. What is a friend always taking pleasure in obliging? Knowledge of reality. What is an enemy clever in giving pain? A store of evil desires.

82. A wicked man though well-versed in Vedānta does not attain goodness. As Maināka Mountain does not become soft though plunged in the ocean for a long time.

83. Absence of good qualities, is better; fie upon the collection of good qualities, since all other trees thrive but sandal tree is cut.

84. Trees only live happily because their hearts are never attacked by a number of flames of fire in form of endless anxiety, while approaching others (for begging).

85. Victorious is a virtuous man who, just like spider, is able to produce गुणs (virtues or fibers) where there is absence of them and to conceal the विवरs (defects or holes) by his own गुणs (virtues or fibers).

86. By whom a wicked man can be described (fully)? a wicked man—who is fire for the cotton-heap in form of virtuous men, and wind to allay the fire in form of afflictions of others. (The word रक्षण & शमन are ironical here).

87. Wicked men spoil noble men as mice spoil fine garments, though both of them (noble men and garments) are skilful in concealing परगुह्य (secrets or private parts of others), full of गुणs (good qualities or fibers), and are very much liked by all.

88. A wicked man, troublesome to the virtuous, is garlic to fragrance in form of fame, fire to the cold in form of peace, a sky with regard to flowers in form of kindness.

89. A bow to the tree, first among the generous, which for the happiness of others, offers its own body, bears the burden of flowers, leaves and fruits and suffers afflictions of heat and evil of cold.

90. That man who entertains a desire of persuading a wicked man wishes as if to drink हालाहल poison with curiosity or to kiss closely the fire of destruction or tries to embrace actually the lord of serpents.

91. O cloud, thy power of discrimination is known to me now, since thou, being proud of thy high position, showest thy generosity towards mountains, leaving these dry corn fields of the poor.

92. Mountains are reckoned as great things, but the earth is greater than mountains, further universe is greater than the earth, yet the virtuous who are

undaunted even at the time of universal destruction, are the greatest.

93. That man, who treats the wicked with respect as if sows seed in the sky, draws a good picture in the wind, draws lines in water.

94. A monkey first licks the necklace placed round his neck by some ignorant person, then smells it and having compressed it, makes a high seat (out of it) for himself.

95. O bee, how dost thou abandon the lotus which is रागपूर्णा (full of love or of red colour) though thou art मलिन (black or deceitful), विकसितवदन (having cheerful face or blown) though thou art अनल्पजल्प talkative or constantly humming) and सरस (full of affection or full of honey) though thou art चपल (unsteady or hovering)?

96. What wonder is there if the face be blackened of the man who takes wealth for himself from a wealthy man, when this cloud though it absorbes water from the ocean for others becomes black on all sides?

97. O sandle tree, thou hast risen to greatness only by thy own good qualities (and not through the influence of thy father, class or company) since some particular mountain is thy progenitor, wood is thy class and serpents are thy companions.

98. O virtuous man, for what end art thou so eager to acquire a number of good qualities? If it be for raising thyself to dignity, listen to my salutary advice; those very objects which are attractive to the heart, because full of many beauties, serve as daily food to Kali who is very careful for nourishing his body. (If thou triest to make thyself great there is a great probability of thy becoming a victim to his cruelty).

99. O spring, having bees, producing sweet humming in mango-trees full of tender and therefore reddish foliage, without thee, ten quarters (even) with the blooming lotuses are filled with smoke to the cuckoo and winds burn its body like fires.

100. Rocks from high mountains are broken asunder with great strength lying at the ends of the nails, mistaking them (rocks) for elephants, but fortune being adverse, the lion did not obtain even a little quantity of flesh.

101. Having faintly heard the thunder, while in the lap of the mother, the young of a lion though half a night old, having contracted his limbs lies motionless, as if to pounce (mistaking the thunder for the voice of an elephant).

---

# BHĀMINĪVILĀSA

## NOTES

### VILĀSA I

*Prāstāvika* ( *Anyoktī* )

1. Most of the verses of the first Vilāsa, are *anyoktis*; they have invariably two senses, one apparent and the other concealed. The former is, however, unreal, while the latter is the only meaning that the poet chiefly wants to convey to his reader's mind. The one is a mere external garb, while the other is the real body of the poet's idea. Technically speaking, these *anyokti* verses are so many instances of the *alaṅkāra* known as अप्रस्तुतप्रशंसा, where the thing in hand ( प्रस्तुत ). is described by a reference to what is not in hand ( अप्रस्तुत ). Thus in this first stanza the incident that is प्रस्तुत is, that the poet has no opponent left. This is not said in so many plain words, but the poet takes recourse to the creation of the imagery of a lion being in want of a fit object for the exercise of his nails, a circumstance which, it is easy to see, is quite अप्रस्तुत. In similar case, therefore, that will follow, the student will find the concealed meaning stated in sanskrit commentary.

The compound दिगन्ते is understood in its literal sense by the commentators. And in keeping with this meaning of दिगन्ते they take लोकेऽस्मिन् to refer to the *whole* of this world, which is, no doubt, the literal meaning of the expression. But this will hardly be correct. For can it ever be true that a certain lion should have killed all the elephants in this world, those stationed

## ERRATA OF THE NOTES

| P. | L. | Read. |
|---|---|---|
| 3 | 2 | सोऽय |
| ,, | ,, | 104 |
| ,, | 9 | शालि |
| ,, | 13 | मानसे मानसे |
| ,, | 33 | ०कामे |
| 4 | 3 | river |
| ,, | 8 | ०भूतश्चित्तवृत्तिविशेषोऽसूया |
| ,, | 17 | मरन्दं |
| ,, | 18 | स्पन्दमानं |
| ,, | 29 | garb |
| ,, | 32 | is |
| 5 | 3 | श्लिष्ट |
| ,, | 16 | ०विशेषैर्वक्रै० |
| ,, | 33 | during |
| 6 | 12 | अंगीकृतं |
| ,, | 23 | पिंषतां |
| ,, | ,, | पिष |
| ,, | 32 | साधु: |
| 7 | 2 | कुलव्रतं cf. |
| ,, | ,, | ,, |
| ,, | 14 | सत्त्वाच्छन्दो° |
| ,, | 16-17 | We cannot adopt the |
| ,, | 23 | I. 4 |
| ,, | 25 | wind which has |
| 8 | 18 | gained |
| 9 | 4 | thinks |
| ,, | 12 | प्रद सद्गुरो |
| 11 | 13 | *delete* ज्वाल |
| ,, | 31 | सुप्रसिद्धमेव |
| 12 | 3 | °गर्वै: |
| ,, | 20 | °रणविधैर्न |
| ,, | 22 | विलास: |
| 13 | 8 | which |
| ,, | 12 | चंडांशो: |
| ,, | 28 | भंगस्त— |
| 14 | 9 | भंगुरैरंगै० |
| 18 | 8 | हसिष्यति |
| ,, | 22 | °गुवककर्तृक° |
| 19 | 31 | and |
| ,, | 32 | arrows |
| 22 | 1 | text is |
| ,, | 28 | °नार्थैऽभेदै° |
| ,, | 29 | °शक्तय: |
| 24 | 6 | प्रतिवस्तु— |
| ,, | 6 | °कत्वा— |
| ,, | 10 | alaṅkāra |
| ,, | 16 | शिव शिव |
| 25 | 15 | परोपतर्पणा: |
| 26 | 6 | °कुसुमा° |
| ,, | 16 | वज्रमणी° |
| ,, | 17 | पथि सतां सूक्तै |
| 27 | 1 | अज्ञेन |
| ,, | 5 | that it is |
| ,, | 11 | श्लिष्ट |
| ,, | 19 | सानुविशेष: |
| ,, | 22 | to deprecat |

॥ श्रीः ॥

श्रीपण्डितराजराजतिलकजगन्नाथप्रणीते

# ॥ भामिनीविलासे ॥

## २. शृङ्गारविलासः ॥

न मनागपि राहुरोषशङ्का
न कलङ्कानुगमो[1] न पाण्डुभावः ।
उपचीयत[2] एव कापि शोभा
परितो भामिनि ते मुखस्य नित्यम् ॥ १ ॥

१. बा०—कलङ्कावगमो । २. बा०—परिचीयत ।

न मनागपीति ॥ भामिनीमुखवर्णनमिदम् । हे भामिनि कोपने प्रेयसि । ते तव । मुखस्य । का अपि अनिर्वचनीया । शोभा कान्तिः । परितः समन्ततः । नित्यं उपचीयते वर्धते । एव । चन्द्रस्य शोभा शुक्लपक्ष एव वर्धते तव मुखस्य तु सर्वदैवेति व्यतिरेकः । अपरं च तव मुखस्य—मनाक् ईषद् अपि । राहुरोषशङ्का राहोः रोषस्य क्रोधस्य शङ्का भयम् । न अस्ति । चन्द्रस्य तु राहुग्रासभयं विद्यत एव । पुनश्च—तव मुखस्य कलङ्कानुगमः कलङ्कस्य लाञ्छनस्य अनुगमः संयोगः । न । चन्द्रे तु विद्यत एव कलङ्कः । पुनरपि तव मुखस्य पाण्डुभावः विवर्णता । न । चन्द्रस्य तु सोऽस्त्येव । चन्द्रो राहुणा ग्रस्यते, कलङ्कलाञ्छितः, पाण्डुवर्णस्तथा शुक्लपक्ष एव च शोभा-वृद्धियुक्तः, तव मुखं पुनः सर्वदोषविहीनं तथा सर्वदा शोभाशालि—इति भावार्थः । अत्र चन्द्रापेक्षया मुखस्योत्कर्षो वर्ण्यते । किन्तु उपमानभूतश्चन्द्रो नात्रोपात्तः । तथापि अभिप्रायविशेषेण प्रयुक्तैर्विशेषणैः मुखस्य चन्द्राद् व्यतिरेको ध्वन्यते । अतो वस्तुभिरलंकारो व्यतिरेकाख्यो व्यज्यतेऽत्र । उदाहृतं व्यतिरेकलक्षणं च—" उपमानाद्यदन्यस्य व्यतिरेकः स एव सः " ।

पद्यमिदं रसगङ्गाधरे (पृ. १२५, ३५२)। मालभारिणीवृत्तम्। तल्लक्षणं च--"ससजाः प्रथमे पदे गुरू चेत्सभरा येन च मालभारिणी स्यात्" ॥१॥

नितरां परुषा सरोजमाला
न मृणालानि विचारपेशलानि।
यदि कोमलता तवाङ्गकाना—
मथ का नाम कथापि पल्लवानाम् ॥ २ ॥

नितरामिति ॥ हे प्रेयसि। यदि तव अङ्गकानां शरीरावयवानां। कोमलता मृदुता। अनुभूयते, प्रस्तूयते वा—इति शेषः। तदा सरोजमाला सरोजानां कमलानां माला। नितरां अत्यर्थं। परुषा कठोरा। मृणालानि विसानि। विचारपेशलानि विचारे रुचिराणि। न सन्ति। मृणालानि विचारेऽपि तवाङ्गैः सह तुलयितुं न शक्यन्ते। एवंगते अथ—तर्हि। पल्लवानां किसलयानां। नाम कथा कथनं। अपि का। तवाङ्गानां यन्मार्दवं तस्य केन सह तुलनं कर्तुं शक्यते—लोके कोमलतया प्रसिद्धानां सर्वेषां सरोजादीनामतिपरुषत्वादिति भावार्थः। अत्र पल्लवादीनां सौकुमार्यं अप्रस्तुतं, प्रस्तुतेन तदङ्गसौकुमार्यातिशयेन तिरस्कृतम्। पल्लवादिसौकुमार्यतिरस्कारज्ञानं चात्र कार्यम् अनेन च तदङ्गसौकुमार्यातिशयज्ञानरूपं कारणं गम्यते। अतोऽत्र कार्येण। कारणस्य गम्यमानत्वादप्रस्तुतप्रशंसालङ्कारः। उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ. ५७, ४०५)। उक्तं च तत्र—'कार्यकारणभावश्चेह ज्ञानयोः। तेन पारुष्यस्य मृणालगतत्वेन ज्ञायमानस्य स्वरूपतस्तदङ्गसौकुमार्याजन्यत्वेऽपि न क्षतिः'। इति। मालभारिणीवृत्तम् ॥ २ ॥

स्वेदाम्बुसान्द्रकणशालिकपोलपाली—
दोलायितश्रवणकुण्डलवन्दनीया[1]।
आनन्दमङ्कुरयति स्मरणेन[2] कापि
रम्या दशा मनसि मे मदिरेक्षणायाः ॥ ३ ॥

१. नि०—°मण्डनीया। बा०—वन्दनाया। २. नि०—स्मरणे न। शे०—श्रवणेन।

स्वेदाम्बुसान्द्रेति। इयं नायिकामधिकृत्य नायकस्योक्तिः। मदिरेक्षणायाः मदिरे मदकारके ईक्षणे लोचने यस्याः तस्याः। स्वेदाम्बुसान्द्रकणशालिकपोलपालीदोलायितश्रवणकुण्डलवन्दनीया स्वेदाम्बूनां

 

सुरतकालिकानां घर्मजलानां सान्द्राः घनाः ये कणाः बिन्दवः तैः शालिन्यौ शोभमाने ये कपोलपाल्यौ गण्डस्थल्यौ तत्र दोलायिते चलिते ये श्रवणकुण्डले कर्णभूषणे ताभ्यां वन्दनीया स्तुत्या नम्या वा। का अपि अनिर्वचनीया। रम्या शोभना। दशा अवस्था। स्मरणेन चिन्तनेन। मे मनसि। आनन्दं अङ्कुरयति उत्पादयति। सुरतावस्थायां मत्प्रियायाः मुखं स्वेदजलाचितं भवति, तत्र च चलिते कुण्डले अतितरां शोभां जनयतः, यदाहं तादृशं प्रिया-मुखं स्मरामि तदा मे मनसि महान् हर्षो जायत इति भावार्थः। अत्र पूर्वार्धे अपरुषवर्णप्राचुर्यात्सुकुमारताख्यो गुणः। उत्तरार्धे च पृथक्पदत्वसद्भावा-न्माधुर्याख्यो गुणः। उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ० ५७, ६४)। वसन्ततिलकावृत्तम्॥ ३॥

कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम्।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा—
मुल्लासयन्तु परितो हरितो मुखानि॥ ४॥

कस्तूरिकेति। नायिकां प्रति तत्सख्याः नायकस्य वा चाटूक्तिरियम्। हे आलि सखि। त्वं कस्तूरिकातिलकं कस्तूरिकायाः मृगमदस्य तिलकं। मस्तके विधाय रचयित्वा। सायं संध्याकाले। स्मेरानना स्मेरं ईषद्धास्य-युक्तं आननं मुखं यस्याः, सस्मितमुखीत्यर्थः। सपदि झटिति। सौधमौलिं हर्म्यशिखरं। शीलय भज। सकलङ्कस्य चन्द्रबिम्बस्य साम्यं प्राप्तुं ईषद्धसित-वदने कस्तूरिकातिलकयोजनमतीव युक्ततरम्। ननु किमनेन चन्द्रमण्डल-साम्यलाभेन—इति चेदुच्यते। कुमुदानि मुदां हर्षाणां। उदारां महतीं। प्रौढिं वृद्धिं। भजन्तु प्राप्नुवन्तु। चन्द्रोदये कुमुदविकसनात्। तथा च। हरितः दिशः। निजानि मुखानि। परितः समन्तात्। उल्लासयन्तु प्रोज्ज्वलयन्तु, विकसितानि कुर्वन्त्वित्यर्थः। स्मेरे मुखे कस्तूरिकातिलकं कृत्वा सौधपृष्ठमारुह्यतां त्वया, एवं हि चन्द्रसाम्यात्तव वदनस्य, कैरवाणां विकासः दिङ्मुखेषु च प्रकाश उत्पस्यत इति भावार्थः। अत्र त्वन्मुखं कलङ्कयुक्तचन्द्र-मण्डलादभिन्नमिति रूपकं कुमुदविकासादिना अर्थशक्तिद्वारा ध्वन्यते। ननु रसध्वनिप्रतिपादने यमकानुप्रासादीनां शब्दालङ्काराणां संनिवेशो रसास्वाद-

विघातकत्वात्परिहरणीय एव । उक्तं च—“ ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् । शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ ” इति । पद्ये चास्मिन्ननुप्रासबाहुल्यं कथं न दूषकताबीजमिति चेदुच्यते—“ ये तु पुनरक्लिष्टतयानुन्नतस्कन्धतया च न पृथग्भावनामपेक्षन्ते, किं तु रसचर्वणायामेव सुसुखं गोचरीकर्तुं शक्याः, न तेषामनुप्रासादीनां त्यागो युक्तः ॥ ” इति ( रसगङ्गाधर, पृ० ७३ ) । पद्यं चैतदुदाहृतं रसगङ्गाधरे ( पृ० ७३, २४६ ) । वसन्ततिलकावृत्तम् ॥

तन्मञ्जु मन्द[1]हसितं श्वसितानि तानि
सा वै कलङ्कविधुरा मधुराननश्रीः ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त
सायंतनाम्बुजसहोदरलोचनायाः ॥ ५ ॥

१. बा०–तन्मन्दमञ्जु° ।

**तन्मञ्ज्विति** । नायकोक्तिरियम् । **सायंतनाम्बुजसहोदरलोचनायाः** सायंतनं संध्याकालिकं यदम्बुजं कमलं तस्य सहोदरे तत्सदृशे इत्यर्थः, लोचने यस्याः तस्याः । संध्याकाले कमलानां संकोचात् सुरतावस्थायां मुकुलितनयनायाः प्रियायाः । **तत्** प्रसिद्धं । **मञ्जु** मनोहरं । **मन्दहसितं** स्मितं । **तानि** सुरतसामयिकानि परिश्रमजन्यानि **श्वसितानि** निःश्वासाः । **सा** पूर्वानुभूता । **वै** निश्चयेन । **कलङ्कविधुरा** कलङ्करहिता । **मधुरा** मनोहरा । **आननश्रीः** मुखशोभा । कलङ्कराहित्येन मुखस्य चन्द्रादुत्कर्षो ध्वन्यते । **हन्त** इति खेदे । सर्वाण्येतानि **मे हृदयं अद्यापि** एवं बहुतिथे गतेऽपि काले । **उन्मदयन्ति** स्मृतिशतैरुन्मत्तं कुर्वन्ति । सुरतावस्थायां निमीलितनयनायाः प्रियाया मन्दहासान्, दीर्घनिःश्वासान्, निष्कलङ्कं मुखं च यदाहं स्मरामि तदा मे हृदयमुन्मत्तमिव जायत इति भावार्थः । पद्यमेतत् स्मृत्याख्यस्य व्यभिचारिभावस्य व्यञ्जकम् । उदाहृतं चैतत्तथा रसगङ्गाधरे ( पृ० ७७ ) । वसन्ततिलकावृत्तम् ॥ ५ ॥

प्रातस्तरां प्रणमने विहिते गुरूणा—
माकर्ण्य वाचममलां भव पुत्रिणीति ।

नेदीयसि[1] प्रियतमे परमप्रमोद[2]—
पूर्णादरं दयितया दधिरे दृगन्ताः ॥ ६ ॥

१. बा०–नन्दीयसि । २. बा०–°प्रमोदे । प०–B. °प्रमोदम् ।

प्रातस्तरामिति ॥ प्रभाते गुरवो वन्द्या इति शिष्टाचारपालनप्रवृत्तया दयितया प्रेयस्या । प्रातस्तरां अतिप्रभाते । गुरूणां श्वश्रूप्रभृतिपूज्यजनानां । प्रणमने प्रणामे । विहिते कृते सति । तेषां पुत्रिणी भव इति । अमलां प्रसन्नां । वाचं आशीर्वादरूपां वाणीं । आकर्ण्य श्रुत्वा । नेदीयसि पार्श्ववर्तिनि । प्रियतमे पत्यौ । परमप्रमोदपूर्णादरं परमः उत्कृष्टः प्रमोदः हर्षः तेन पूर्णः निरवधिः आदरः भक्तिः यस्मिन् कर्मणि यथा स्यात्तथेत्यर्थः । दृगन्ताः कटाक्षाः । दधिरे स्थापिताः । गुरुपादवन्दनार्थं गता वधूर्यदा पूज्येभ्यः 'पुत्रवती भव' इत्याशिषमलभत तदानन्दनिर्भरं प्रेमपूर्णकटाक्षैनिकटस्थितं स्वामिनमवलोकितवतीति भावार्थः । "पुत्रस्य भवत्संभोगैकसाध्यत्वादद्याहं स्वरसत एव संपादयिष्याम्येवेत्याश्वासनं नायकं प्रति द्योत्यते" इत्यच्युतरायः । शिष्टाचारपरिपालनं कुलवधूनां धर्मः, तद्वर्णनया चात्र स्वभावोक्तिरलङ्कारः । वसन्ततिलकावृत्तम् ॥ ६ ॥

गुरुजनभयमद्विलोकनान्तः[1]समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा[2] हरिणदृशो नयनं न विस्मरामि ॥७॥

१. बा०–°नान्तं । २. प०–F. °सुंदराभ° ।

गुरुजनेति ॥ प्रियावियुक्तस्य नायकस्योक्तिरियम् । हा इति खेदे । गुरुजनभयमद्विलोकनान्तःसमुदयदाकुलभावमावहन्त्याः गुरुजनः श्वश्रूप्रभृतिः तस्माद् भयं, तत्संनिधौ प्रियवीक्षणानौचित्यात्, तथा मद्विलोकनं मत्कर्तृकमवलोकनं, तयोः अन्तः मध्ये । अथवा, ताभ्यां अन्तः हृदये । समुदयन् उद्गच्छन् य आकुलो भावः विह्वलता, तं आवहन्त्याः धारयन्त्याः । अनेन लज्जाभयलालस्यवैलक्ष्यं व्यज्यते । हरिणदृशः मृगाक्ष्याः । दरदलदरविन्दसुन्दरं दरं ईषत् यथा स्यात्तथा दलत् विकसत् यत् अरविन्दं तद्वत् सुन्दरं । नयनं न विस्मरामि । पुरा गुरुजनसंनिधौ मयावलोकितायाः प्रियाया मनसि यदा त्रासौत्सुक्ययोर्भावयोः संधिः समजनि, तदा सा ईषद्विकसितकमलवच्छोभनेन नेत्रत्रिभागेन मामवलोकितवती—तदहं कथंचिदपि

न विस्मरामीति भावार्थः। अत्र गुरुजनभयसद्विलोकनयोर्मध्ये व्याकुलत्वोदयेन त्रासौत्सुक्ययोरुभयोरपि तुल्यकक्षत्वम्। उपमालङ्कारः। पुष्पिताग्रावृत्तम्। तल्लक्षणं च—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥ ७ ॥

बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतां क्रमेण।
अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ ८ ॥

बदरेति। नायकस्य नायिकां प्रति चाटूक्तिरियम्। हे दयिते प्रेयसि। ते तव। कुचौ स्तनौ। बदरामलकाम्रदाडिमानां बदरस्य, आमलकस्य, आम्रस्य, दाडिमस्य च। उन्नतां उत्कृष्टां। श्रियं शोभां। क्रमेण अनुक्रमात्। अपहृत्य चोरयित्वा। अधुना करिशावकुम्भलक्ष्म्याः करिशावः गजपोतः, तस्य कुम्भयोः कटयोः या लक्ष्मीः शोभा तस्याः। हरणे चोरणे। यतेते यत्नं कुरुतः। हे प्रिये तव स्तनौ पूर्वं बदरसदृशौ, तदनन्तरं आमलकसदृशौ, एवं क्रमेणोत्तरोत्तरं महान्तौ कठिनतरौ च जायमानौ, अधुना गजपोतकटाकारं भजत इति भावार्थः। अत्र सारालङ्कारः। तल्लक्षणं च—'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः' इति। मालभारिणीवृत्तम् ॥ ८ ॥

[ एतदनन्तरं कैश्चिदयमधिकः श्लोकः पठ्यते—
जम्बीरश्रियमतिलंघ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ ]

कपोलपालिं तव तन्वि मन्ये
लावण्यधन्ये दिशमुत्तराख्याम्।
विभाति यस्यां ललितालकायां
मनोहरा वै-श्रवणस्य लक्ष्मीः ॥ ९ ॥

कपोलेति। हे तन्वि कृशाङ्गि। लावण्यधन्ये लावण्येन मौक्तिकसदृशकान्त्या धन्ये कृतिनि। 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥'। तव कपोलपालिं गण्डस्थलीं। उत्तराख्यां दिशं मन्ये। कुत इत्यत आह—यस्यां तव कपोलपाल्यां। ललितालकायां ललिताः मनोहराः अलकाः चूर्णकुन्तलाः यस्यां तस्यां। दिक्पक्षे—ललिता मनोहरा अलका कुबेरनगरी यस्यां तस्यां। मनोहरा। वै इति निश्चयेन।

श्रवणस्य कर्णस्य । दिक्पक्षे—चश्रवणस्य कुबेरस्य । लक्ष्मीः शोभा । विभाति । अत्र सभङ्गश्लेषोत्थापितः, मन्ये इति पदद्योत्य उत्प्रेक्षालङ्कारः । उपजातिवृत्तम् ॥ ९ ॥

नीवीं नियम्य शिथिलामुषसि प्रकाश—
मालोक्य वारिजदृशः शयनं जिहासोः ।
नैवावरोहति कदापि च मानसान्मे
नाभेः प्रभा[1] सरसिजोदरसोदरायाः ॥ १० ॥

१. वै० नि०--निभा ।

नीवीमिति ॥ नायकोक्तिरियम् । उषसि प्रत्यूषे । प्रकाशं सूर्यालोकं । आलोक्य दृष्ट्वा । शिथिलां सुरतार्थमौत्सुक्यात् स्वयमेव स्रस्तां । नीवीं जघनवस्त्रग्रंथिं । नियम्य हस्तेन धृत्वा । शयनं शय्यां । जिहासोः त्यक्तुमिच्छोः । वारिजदृशः पद्मलोचनायाः प्रियायाः संबन्धिन्याः । सरसिजोदरसोदरायाः सरसिजं कमलं तस्य उदरं निम्नो मध्यभागः तस्य सोदरायाः भगिन्याः, तत्सदृश्या इत्यर्थः । नाभेः प्रभा शोभा । मे मानसात् चित्तात् । कदापि नैव अवरोहति अपगच्छति । महति प्रत्यूषे सूर्यप्रकाशं दृष्ट्वा मत्प्रिया रात्रौ स्खलितां नीवीं हस्तेन संयम्य यदा शय्यां त्यक्तुमैच्छत् तदा कमलोदरसदृशीं तस्या नाभिमहमवालोकयम्, सा च नाभिशोभा न मे चित्तादपगच्छतीति भावार्थः । अत्र सोदरशब्दः सदृशवाचक आर्थीमुपमां प्रयोजयति । उदाहृतं चैतत्पद्यं रसगङ्गाधरे उपमालङ्कारे ( पृ० १७९ ) । वसन्ततिलकावृत्तम् ॥ १० ॥

आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती ।
आरादुपाकर्ण्य गिरं मदीयां सौदामिनीयां सुषमामयासीत् ॥ ११ ॥

आलीष्विति ॥ आलीषु सखीषु । केलीरभसेन क्रीडावेगेन । मम आलापं भाषणं । मुहुः पुनः पुनः । आलपन्ती अनुकुर्वाणा । बाला नवोढा प्रिया । आरात् दूरात् । । मदीयां गिरं वाणीं । उपाकर्ण्य श्रुत्वा । सौदामिनीयां विद्युत्सम्बन्धिनीं । सुषमां शोभां । अयासीत् प्राप्तवती । विद्युदिव सहसा पलायनं चक्रे । सखीनां मध्ये वारं वारं मत्संभाषणस्यानुकरणं कुर्वाणा मत्प्रिया यदैव मद्गिरं दूरात् शुश्राव, तदैव 'पत्या मद्वचनमाकर्णितं' इति त्रस्ता झटित्यालापं परित्यज्यान्यत्र गमनं चकारेति भावार्थः ।

अत्र त्रासाख्यस्य व्यभिचारस्य व्यञ्जनम्। उदाहृतं चैतत्पद्यं रसगङ्गाधरे ( पृ० ८६ )। उपजातिर्वृत्तम् ॥ ११ ॥

**मुधैव मन्तुं परिकल्प्य गन्तुं मृषैव रोषादुपजल्पतो मे।**
**उदश्रुचञ्चन्नयना नताङ्गी गिरं न कां कामुररीकरोति ॥ १२ ॥**

१. बा०–उदस्रचञ्चन्नयनं। प०–°चञ्चन्नयनं।

**मुधैवेति**। **गन्तुं** गमनार्थं। **मुधैव** व्यर्थमेव। **मन्तुं** अपराधं **परिकल्प्य** विनाप्यपराधं दोषारोपणं कृत्वा। **रोषात्** क्रोधात्। **मृषैव** मिथ्यैव। **उपजल्पतः** कृत्रिमकोपेन यत्किंचिदपि भाषमाणस्य, **मे**। **उदश्रुचञ्चन्नयना** उदश्रुणी अश्रुयुक्ते चञ्चती चपले नयने यस्याः सा। **नताङ्गी** यौवनभरेणेत्यर्थः। **कां कां गिरं** वाणीं। **न उररीकरोति** स्वीकरोति। मामनुनेतुं किं किं न भाषते। प्रियासकाशाद्गन्तुमिच्छन्नहं तस्यां मिथ्यादोषारोपणं कृत्वा कृत्रिमकोपं चोद्भाव्य यत्किंचिद्वक्तुं प्रवृत्तः, सा च 'सत्यमयं मदपराधात्क्रुद्धः' इति भीता बहुविधैर्वचनैर्मामनुनेतुं प्रायततेति भावार्थः। उपेन्द्रवज्रावृत्तम् ॥१२॥

**तदवधि कुशली पुराणशास्त्र—**
**स्मृतिशतचारुविचारजो विवेकः।**
**यदवधि न पदं दधाति चित्ते**
**हरिणकिशोरदृशो दृशोर्विलासः ॥ १३ ॥**

१. नि०–श्रुतिशतचारु°। नि०–टीका–श्रुतिशतवार°।

**तदवधीति**। **यदवधि** यावत्कालपर्यन्तं। **हरिणकिशोरदृशः** मृगशावाक्ष्याः। **दृशोः** नयनयोः। **विलासः** कटाक्षः। **चित्ते** हृदये। **पदं** स्थानं। **न दधाति** स्थापयति। **तदवधि** तावत्कालपर्यन्तं। **पुराणशास्त्रस्मृतिशतचारुविचारजः** पुराणानि, धर्मशास्त्राणि, मन्वादिस्मृतयः, तेषां शतस्य यः चारुः समीचीनः विचारः, तस्मात् जातः। **विवेकः** कर्तव्याकर्तव्यज्ञानं। **कुशली** क्षेमशाली, चेतसि स्वस्थानापन्न इत्यर्थः। शास्त्राद्यभ्यासोत्पन्नं कर्तव्याकर्तव्यज्ञानं तावदेव सुस्थिरं यावत् कामिनीकटाक्षविलसितेन न विद्धो भवति मनुष्यः, सति तु वेधे विवेकभ्रंशो भवत्येवेति भावार्थः। उदाहृतं पद्यमिदं रसगङ्गाधरे ( पृ० १३६ )। पुष्पिताग्रावृत्तम् ॥ १३ ॥

आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा ॥ १४ ॥

आगत इति । कस्यचित्पथिकस्योक्तिरियम् । **मृगेक्षणा** मृगनयना । **पतिः आगतः इति जनैः** सखीजनैः । **ईरितं** प्रोक्तं वचनं । **शृण्वती** श्रवणसमकालमेव । **देहलीं चकितं** सविस्मयं । **एत्य** आगत्य । **कौमुदी** ज्योत्स्ना । **इव मम लोचने कदा शिशिरीकरिष्यते** आनन्दयिष्यति । पद्यमिदं रसगङ्गाधरे ( पृ० १९३ ) उदाहृतम् । उक्तं च पण्डितराजेन तत्र— 'अत्र शृण्वतीति शत्रा प्रत्यायितेन श्रवणसमकालमेव प्रियाया देहल्यागमनमित्यर्थेनातिशयोक्त्यात्मना गमितस्त्वरातिशयस्तद्गतमौत्सुक्यातिशयं पुष्णाति । कौमुद्युपमा तु तत्परिपोषितं प्रधानीभूतं प्रियगतमौत्सुक्यं' पुष्णाति शेषः । रथोद्धतावृत्तम् ॥ १४ ॥

अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना ।
अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥ १५ ॥

अवधाविति ॥ **दिवसावसानकाले** संध्यासमये । **अवधौ** प्रतिज्ञातायां वेलायां । **भवनद्वारि** गृहद्वारे । **विलोचने** नयने । **दधाना** निवेशयन्ती । मदागमनं प्रतीक्षमाणेत्यर्थः । **रामा** कान्ता । **तदा** तस्मिन्नवधिसमये । **मां समागतं अवलोक्य अथ** अनंतरं । **विकसन्मुखी** हर्षोत्फुल्लवदना । **बभूव** संजाता । सायंकाले पूर्वप्रतिज्ञातायां प्रत्यागमनवेलायां मां प्रतीक्षमाणा द्वारसंनिविष्टलोचना प्रिया यदा मां दृष्टवती तदा हर्षोत्फुल्लमुखी संजातेति भावार्थः । अत्र मुखविकसने नायिकाया नायकागमनजन्यो हर्षो व्यज्यते । उदाहृतं चैतत्पद्यं रसगङ्गाधरे हर्षाख्ये व्यभिचारिभावे ( पृ० ७७ ) । तल्लक्षणं च तत्र— 'इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः' इति । मालभारिणीवृत्तम् ॥ १५ ॥

वक्षोजाग्रं पाणिनाऽऽस्पृश्य[1] दूरं
यातस्य द्रागाननाब्जं प्रियस्य ।
शोणाग्राभ्यां भामिनी लोचनाभ्यां
जोषं जोषं जोषमेवावतस्थे ॥ १६ ॥

१. नि०–°मृश्य । र०–°मृष्य ।

**वक्षोजाग्रमिति।** भामिनी प्रिया। **पाणिना** हस्तेन। **वक्षोजाग्रं** कुचाग्रं। **आस्पृश्य** ईषत्स्पृष्ट्वा। **द्राक्** ईषत्। **दूरं यातस्य प्रियस्य। आननाब्जं** मुखकमलं। **शोणाग्राभ्यां** आरक्तप्रांताभ्यां। **लोचनाभ्यां। जोषं जोषं** निर्निमेषं दृष्ट्वा दृष्ट्वा। **जोषं एव** तूष्णीं एव। **अवतस्थे** स्थिता। विनोदशीलः कश्चिन्नायकः प्रियास्तनाग्रं स्पृष्ट्वा यदा किंचिद्दूरं गतस्तदा ईषद्रक्तनेत्रा प्रिया तन्मुखे दत्तनिर्निमेषदृष्टिस्तूष्णीमेव स्थितेति भावार्थः। इहाकस्मिकस्तनाग्रस्पर्शजन्ये नयनारुण्यनिर्निमेषनिरीक्षणे नायिकागतममर्षाख्यं भावं व्यञ्जयतः। उदाहृतं चैतदमर्षाख्यभावलक्षणे रसगङ्गाधरे (पृ० ८८)। शालिनीवृत्तम् ॥ १६ ॥

गुरुभिः परिवेल्लितापि गण्डस्थलकण्डूयनचारुकैतवेन[1]।
दरदर्शितहेमबाहुनाला मयि बाला नयनाञ्चलं चकार ॥ १७ ॥

१. बा०–°कौतुकेन।

**गुरुभिरिति। गुरुभिः** श्वश्रूप्रभृतिभिः। **परिवल्लिता अपि** परिवेष्टितापि। अपिना अनुरागातिशयो व्यज्यते। **गण्डस्थलकण्डूयनचारुकैतवेन** गण्डस्थलस्य कपोलस्य कण्डूयनस्य खर्ज्वपनयनस्य चारुणा मनोज्ञेन कैतवेन मिषेण। एतेन चातुर्यातिशयो ध्वन्यते। **दरदर्शितहेमबाहुनाला** दरं ईषत् यथा स्यात्तथा दर्शितं हेमबाहुनालं सुवर्णसदृशगौरवर्णं भुजमृणालं यया सा। **बाला। मयि नयनाञ्चलं** कटाक्षं **चकार।** गुरुमध्यगतत्वान्नायिका न स्वानुरागं स्फुटं दर्शयितुमपारयत्, अतः कपोलकण्डूयनमिषेण स्वभुजमूलं दर्शयन्ती नायके कटाक्षविक्षेपमकरोदिति भावार्थः। मालभारिणीवृत्तम् ॥ १७ ॥

गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम्।
दरकुण्डलताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत् ॥ १८ ॥

**गुर्विति। गुरुमध्यगता** श्वश्रूप्रभृतिपूज्यजनानां मध्ये स्थिता। अत एव **नताङ्गी** नतशरीरा। **मया। नीरजकोरेण** पद्मकुड्मलेन **मन्दं** ईषत्। **निहता** ताडिता सती। **दरकुण्डलताण्डवं** दरं ईषत् कुण्डलयोः ताण्डवं नर्तनं यस्मिन् कर्मणि यथा स्यात्तथा। तथा **नतभ्रूलतिकां** नतौ भ्रुवौ-लतिकेव यस्मिन् कर्मणि यथा स्यात्तथा। **मां अवलोक्य** दृष्ट्वा। **घूर्णिता**

भ्रान्ता । आसीत् स्थिता । नायको ब्रूते—यदाहं गुरुजनमध्ये स्थितां स्वप्रियां कमलमुकुलेन मन्दं प्रहृतवान् तदा सा भ्रान्तचित्ताऽभवत्, मदवलोकनक्षणे च तस्या नर्तितकुण्डलं नम्रभ्रूवल्लि आननं नितरां शुशुभे—इति भावार्थः । पद्यमेतदुत्तमकाव्यत्वेनोदाहृतं रसगङ्गाधरे ( पृ० ११ ) । उक्तं च तत्र—'अत्र घूर्णितासीदित्यनेनासमीक्ष्यकारिन्किमिदमनुचितं कृतवानसीत्यर्थसंवलितोऽमर्षश्चर्वणाविश्रान्तिधामत्वात्प्राधान्येन व्यज्यते' इति । मालभारिणीवृत्तम् ॥ १८ ॥

विनये नयनारुणप्रसाराः[1] प्रणतौ हन्त निरन्तराश्रुधाराः[2] ।
अयि[3] जीवितसंशयः[4] प्रयाणे नहि जाने हरिणाक्षि केन तुष्येः ॥१९॥

१. नि०–°प्रचारा । २. नि०–°धारा । ३. नि०–अपि । ४. नि०–°संशया ।

विनय इति । मानिनीं नायिकां प्रति नायकस्यानुनयोक्तिरियम् । मया विनये नम्रतादिसूचकवचनोक्तौ । क्रियमाणे । तव नयनारुणप्रसाराः नयनयोः अरुणस्य आरुण्यस्य, 'असत्यवाद्ययं' इति क्रोधजन्यस्य रक्तत्वस्य प्रसाराः विस्ताराः । भवन्तीति शेषः । तथा प्रणतौ अनुनयार्थं चरणयोः पतनं क्रियमाणे मयि । निरन्तराश्रुधाराः तव निरन्तरं अश्रुधाराप्रवाहो जायते । तथा प्रयाणे मया गमने क्रियमाणे तु । जीवितसंशयः तव प्राणानां संशयो जायते । एवंगते सति, अयि हरिणाक्षि हे मृगलोचने । त्वं केन तुष्येः प्रसीदसि, इति अहं नहि जाने । यदा नम्रो भवामि तदा कुप्यसि, यदा प्रणमामि तदा रोदिषि, यदा गन्तुमुद्यतो भवामि तदा संदिग्धजीविता भवसि—इत्थं केनोपायेन त्वं तुष्यसीति नाहं जाने—इति भावार्थः । मालभारिणीवृत्तम् ॥ १९ ॥

अकरुण मृषाभाषासिन्धो विमुञ्च ममाञ्चलं
तव परिचितः स्नेहः सम्यङ् मयेत्यभिधायिनीम्[1] ।
अविरलगलद्बाष्पां तन्वीं निरस्तविभूषणां
क इह भवतीं भद्रे निद्रे विना विनिवेदयेत् ॥ २० ॥

१. प० इव ।

अकरुणेति ॥ 'एषा प्रवासगतस्य स्वप्नेऽपि प्रियामेवंभाषिणीं दृष्टवतो निद्रां प्रति कस्यचिदुक्तिः' इति रसगङ्गाधरे ( पृ० ८७ ) पण्डितराजः । हे भद्रे साध्वि । निद्रे । भवतीं विना कः इह प्रवासे । वक्ष्यमाणस्वरूपां

प्रियां **विनिवदये**दित्यन्वयः। कीदृशीम्?—हे **अकरुण** निष्कृप। **मृषाभाषासिन्धो** मृषा मिथ्या भाषा वाणी तस्याः सिन्धो समुद्र—मिथ्याभाषिन्नित्यर्थः। त्वं कृत्रिमं प्रेम दर्शयसि अतस्त्वत्प्रीतिवचनानि मिथ्याचाटुकारा इत्यभिप्रायः। **मम अञ्चलं** वसनान्तं। **विमुञ्च** त्यज। **मया तव स्नेहः** कृत्रिम इत्यर्थः। **सम्यक् परिचितः** ज्ञातः। **इति अभिधायिनीं** इति वदन्तीं। **अविरलगलद्बाष्पां** अविरलं निरन्तरं यथा स्यात्तथा गलन्ति क्षरन्ति बाष्पाणि अश्रूणि यस्याः सा ताम्। **तन्वीं** कृशाङ्गीं। **निरस्तविभूषणां** अपसारिताभरणां। **को** विनिवेदयेदिति पूर्वेण सम्बन्धः। अस्मिन् प्रवासे 'हे निर्घृण, त्वं मिथ्याभाष्यसि, तव स्नेहमहं सम्यग्जानामि, अतः कपटप्रीतिं दर्शयन् मा ममाञ्चलं गृहाण' इत्येवं भाषमाणां मानाच्च परित्यक्तभूषणां सततगलदश्रुधारां मम प्रेयसीं, हे भगवति निद्रे त्वामन्तरेण को मया सह सङ्गमयेदिति भावार्थः। पद्येऽस्मिन् सुप्ताख्यो व्यभिचारिभावो व्यज्यते। हरिणीवृत्तम्। तल्लक्षणं च—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ॥ २० ॥

तीरे तरुण्या वदनं सहासं
नीरे सरोजं च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमाला ॥ २२ ॥

**तीर इति।** **तीरे** सरोवरादितटे। **तरुण्याः** युवत्याः। **सहासं वदनं** आननं। तथा **च**। **नीरे** जले। **मिलद्विकासं** मिलन् युक्तः विकासः प्रस्फुटनं यस्मिन् तत्—विकसितमित्यर्थः। **सरोजं** कमलं। **आलोक्य** दृष्ट्वा। **मरन्दलुब्धा** मधुलुब्धा। **अलिकिशोरमाला** अलिकिशोराणां भ्रमरशिशूनां माला पंक्तिः। अत्र किशोरशब्देन तेषां भ्रमयोग्यता ध्वन्यते। **मुग्धा** भ्रान्ता सती। **उभयत्र** वदने सरोजे च—वदनं सरोजमथवा सरोजं सरोजमिति भ्रान्ता। **धावति**—वदनात्कमलं कमलाच्च वदनं पुनः पुनर्गच्छति। अत्र पुरोवर्तिनोर्वदनकमलयोः कमलमिदमिदं वेति भ्रमरगतः संशयो व्यज्यते। स च संशयो वदनकमलयोः सौरभ्यकान्त्यादिसादृश्यं पुष्णन् नायिकायाः पद्मिनीत्वं व्यञ्ज-

यति । उपजातिवृत्तम् । पद्यमिदं रसगङ्गाधरे संशयालङ्कारे ( पृ० २६० ) उदाहृतम् ॥ २२ ॥

वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी ।
अंसदेशविनिवेशितां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥ २३ ॥

वीक्ष्येति । भामिनी कोपना नायिका । दयितस्य प्रियस्य । वक्षसि उरःस्थले । विपक्षकामिनीहारलक्ष्म विपक्षकामिन्याः सपत्न्याः सुरतादिसमये गाढालिङ्गनजन्यं हारस्य मुक्तायष्टेः लक्ष्म चिह्नं । वीक्ष्य दृष्ट्वा । अंसदेशविनिवेशितां अंसदेशे स्कन्धप्रदेशे स्थापितां, आलिङ्गनार्थमिति भावः । निजबाहुवल्लरीं स्वकीयां बाहुलतां । क्षणात् झटिति । आचकर्ष अपसारितवती । स्वप्रियालिङ्गनोद्यता काचिन्नायिका तदुरसि सपत्नीहारचिह्नं दृष्ट्वा सहसा तत्कण्ठात्स्वबाहुमपसारितवतीति भावार्थः । अनेन भुजलताकर्षणेन नायिकागतो रोषाख्यस्य भावस्योदयो गम्यते। उदाहृतं च पद्यमेतद्रसगङ्गाधरे ( पृ० १०३ ) भावोदये । रथोद्धतावृत्तम् । तल्लक्षणं च— ' रान्नराविह रथोद्धता लगौ ' इति ॥ २२ ॥

दरानमत्कंधरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिःश्वासभरालसाङ्गं स्मरामि सङ्गं चिरमङ्गनायाः ॥२३॥

दरानमदिति । दरानमत्कंधरबन्धं दरं ईषत् आनमन्ती कन्धरा ग्रीवा यस्मिन् सः बन्धः पुरुषायिताख्यः सुरतप्रकारः यस्मिन् तम् । ईषन्निमीलितस्निग्धविलोचनाब्ज ईषन्निमीलिते पिहिते स्निग्धे प्रेमरसनिर्भरे इव विलोचने अब्जे कमले इव यस्मिन् तम् । अनेन नायिकायाः पूर्णास्वादो व्यज्यते । सुरतावसाने च—अनल्पनिःश्वासभरालसाङ्गं अनल्पाः दीर्घाः, विपरीतरते नायिकायाः श्रमाधिक्यात् निःश्वासाः तेषां भरेण आधिक्येन अलसानि स्वस्वव्यापारेष्वसक्तानि अङ्गानि यस्मिन् तम् । ईदृशं । अङ्गनायाः प्रियायाः । सङ्गं सुरतं । चिरं स्मरामि । नायिकाया विपरीतरतिं स्मरतो नायकस्योक्तिरियम् । उपजातिवृत्तम् । पद्यमेतद्रसगङ्गाधरे ( पृ० ७८ ) उदाहृतम् ॥ २३ ॥

रोषावेशान्निर्गतं यामयुग्मादेत्य द्वारं कांचिदाख्यां गृणन्तम् ।
मामाज्ञायैवाययौ कातराक्षी मन्दं मन्दं मन्दिरादिन्दिरेव ॥ २४ ॥

रोषावेषादिति ॥ रोषावेशात् रोषस्य, मयैवं प्रसाद्यमानापि नेयं मानं मुञ्चतीति क्रोधस्य आवेशात् आवेगात्। केलिगृहात्। निर्गतं बहिर्गतम्। किन्तु कोपनिर्वाहे अक्षमत्वात् पुनः। यामयुग्मात् प्रहरद्वयानन्तरम्। केलिगृहस्य द्वारं एत्य आगत्य। केलिभवनप्रवेशार्थं द्वारस्थितां नायिकासखीं प्रति कांचित् अलीकाम्। आख्यां नामधेयं। गृणन्तं कथयन्तं द्वारि स्थितोऽमुकस्त्वां दिदृक्षति—इत्यलीकं किंचित् स्वनामधेयं नायिकासख्यै निवेदयन्तं। मां आज्ञाय एव अयं प्रिय एवागत इति निश्चितं ज्ञात्वैव। कातराक्षी सा कदाचित्पुनरपि कुपितो भूदिति भीतचकितलोचना। मन्दिरात् केलिगृहात्। इन्दिरा सौन्दर्यातिशयमहिम्ना लक्ष्मीः। इव। मन्दं मन्दं शनैः शनैः। मां मिलितुं। आययौ आगता। कश्चिन्नायको महता प्रयासेनापि मानिन्याः स्वनायिकाया मानापनोदनासमर्थः सन् क्रोधेन परित्यक्तकेलिभवनो बहिर्ययौ, किन्तु चिरं स्वक्रोधधारणेऽसमर्थः प्रहरद्वयानन्तरमेव केलिभवनद्वारमागत्यालीकं स्वनामधेयं प्रियासख्यै निवेदयामास; प्रिया तु दयित एवायं मे समागत इति तं सम्यग्ज्ञात्वा, पुनस्तत्क्रोधभीता तं मिलितुं केलिमन्दिराद्बहिरायया्विति भावार्थः। शालिनीवृत्तम्। तल्लक्षणं च—"शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः" इति ॥ २४ ॥

हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती।
प्रियनामपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥२५॥

हृदय इति। विरहिण्यवस्थावर्णनम्। इयं विरहिणी। तापशान्तये हृदये वक्षसि। कृतशैवलानुषङ्गा कृतः शैवलानां जलनीलीनां अनुषङ्गः संपर्कः स्थापनमिति भावः, यया सा। तथा च। अङ्गानि हस्तपादं। मुहुः यतः ततः क्षिपन्ती। प्रियनामपरे दयितनामोच्चारणयुक्ते। सखीनां मुखे। अतिदीनां अतिकातरां। अहं अनन्यशरणास्मीत्यनेन द्योत्यते। दृष्टिं आदधाति नियोजयति। विरहसंतापेऽतिभूमिं गते विरहिणी स्ववक्षसि स्थापितशैवला, इतस्ततो हस्तपादं क्षिपन्ती यदा स्वसखीमुखेभ्यः प्रियनामाकर्णयति तदा तन्मुखेषु अतिकरुणां दृष्टिं निदधातीति भावार्थः। पद्यमिदं रसगङ्गाधरे व्याध्याख्यव्यभिचारिभावोदाहरणे (पृ० ८६) पठ्यते। मालभारिणीवृत्तम् ॥ २५ ॥

इत एव निजालयं गताया वनितायाः[1] गुरुभिः समावृतायाः।
परिवर्तितकंधरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि ॥ २६ ॥

१. नि०—विनतायाः।

इत एवेति ॥ इतः अस्मात् प्रदेशात्। एव। निजालयं स्वगृहं। गतायाः वनितायाः प्रियायाः। गुरुभिः श्वश्र्वादिभिः समावृतायाः परिवृतायाः। परिवर्तितकंधरं परिवर्तिता वलिता कंधरा ग्रीवा यत्र। नतभ्रु नते भ्रुवौ यत्र। अत एव स्मयमानं सस्मितं। वदनाम्बुजं वदनं अम्बुजमिव। मुखकमलमित्यर्थः। स्मरामि। स्वगृहं प्रति प्रस्थिता प्रियास्मिन्नेव प्रदेशे यद्ग्रीवां परावृत्य भ्रुवौ च नम्रीकृत्य सस्मितं मामवालोकयत्तन्मे स्मृतिपथं मुहुरारोहतीति भावार्थः। अत्र नायकगता प्रियाविषयिणी चिन्ता, नायिकागते च ह्रीप्रीत्यौ द्योत्यन्ते। लुप्तोपमालङ्कारः। पद्यमिदं रसगङ्गाधरे (पृ० २१७) पठ्यते। मालभारिणीवृत्तम् ॥ २६ ॥

कथय कथमिवाशा जायतां जीविते मे
मलयभुजगवान्ता वान्ति वाताः कृतान्ताः।
अयमपि खलु[1] गुञ्जन्मञ्जु माकन्दमौलौ
चुलुकयति मदीयां चेतनां चञ्चरीकः ॥ २७ ॥

१. र०—बत गुञ्जत्यालि माकन्दमौलौ मनसिजमहिमानं मन्यमानो मिलिन्दः।

कथयेति। कस्याश्चिद्विरहिण्या उक्तिरियम्। हे सखि—मे जीविते प्राणेषु। कथं इव आशा जायतां—इति कथय। किमर्थमेवं ब्रवीषीति चेदुच्यते—मलयभुजगवान्ताः मलयपर्वते चन्दनवृक्षेषु ये भुजगाः तैः वान्ताः उद्गीर्णाः। अत एव—कृतान्ताः यमसदृशाः प्राणहारकाः। वाताः वायवः। वान्ति। चन्दनवृक्षसंपर्केण शीता अपि भुजगैरुद्गीर्णत्वात् विषाक्ता वायवः, अत एव च यमवत्प्राणापहारिण इति भावः। तथा च—अयं अपि माकन्दमौलौ माकन्दस्य प्रफुल्लाम्रवृक्षस्य मौलौ शिखरे। आम्रमञ्जरीदर्शनं विरहपीडाप्रकर्षाधायकम्। मञ्जु मधुरं। गुञ्जन्। खलु निश्चयेन। मदीयां चेतनां संज्ञां। चुलुकयति आचामति। न केवलं मलयपवनो मम विरहवेदनामुत्पादयति, किन्तु आम्रमञ्जरीषु भ्रमरगुञ्जितं तदाधिक्यमेव पुष्णाति, अतः सखि, न मे प्राणधारणाशा विद्यत इति कस्याश्चिद्विरहिण्या उक्तिः। समु-

च्चयालङ्कारः। तल्लक्षणं च रसगङ्गाधरे—"युगपत्पदार्थानामन्वयः समुच्चयः'। पद्यमिदमुदाहृतं रसगङ्गाधरे ( पृ० ४९३ )। मालिनीवृत्तम् ॥ २७ ॥

निरुद्ध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो दधाने।
मयि स्मितार्द्रं वदनारविन्दं सा मन्दमन्दं नमयांबभूव[1] ॥ २८॥

१. बा०–दमयांबभूव।

निरुद्ध्येति। तरसा जवेन—कोपाविष्टतयेति भावः। यान्तीं गच्छन्तीं। कपोतीं। निरुद्ध्य हस्ताभ्यां धृत्वा। कूजत्कपोतस्य कूजतः सुरतार्थं शब्दं कुर्वतः कपोतस्य। पुरः अग्रे। दधाने स्थापयति सति मयि। सा मत्प्रिया। स्मितार्द्रं स्मितेन आर्द्रं स्निग्धं। वदनारविन्दं मुखकमलं। मन्दमन्दं अतिमन्थरं यथा स्यात्तथा। नमयांबभूव नम्रीचकार। कश्चिन्नायकः स्वसखायं ब्रूते—यदाहं कुपितामिव गच्छन्तीं कपोतीं सुरतोत्कण्ठितस्य कपोतस्याग्रे स्थापितवांस्तदा सा मे प्रिया मदभिप्रायविज्ञानेन हर्षेण सस्मिता तथा व्रीडया चाभिभूताभूत्—तदा स्वाननं सा नमयांचकारेति भावार्थः। अत्र हर्षो लेशतया सन्नपि व्रीडाया अनुगुण एव। व्रीडाख्यव्यभिचारिभावोदाहारणे पठ्यते पद्यमेतद्रसगङ्गाधरे ( पृ० ७९ ) उपेन्द्रवज्रावृत्तम् ॥ २८ ॥

तिमिरं हरन्ति हरितां पुरःस्थितं
तिरयन्ति तापमथ तापशालिनाम्।
वदनत्विषस्तव चकोरलोचने
परिमुद्रयन्ति सरसीरुहश्रियः[1] ॥ २९ ॥

१. नि०–°श्रियः।

तिमिरमिति॥ नायिकां प्रति नायकस्य चाटूक्तिः। हे चकोरलोचने चकोरलोचनसदृशलोचने। तव वदनत्विषः मुखकान्तयः। हरितां दिशां। पुरःस्थितं अग्रभागवर्ति। तिमिरं अन्धकारं। हरन्ति नाशयन्ति। अथ तापशालिनां कामज्वरादितापयुक्तानां पुरुषाणां। तापं पीडां। तिरयन्ति अपसारयन्ति। तथा च सरसीरुहश्रियः सरसीरुहाणां कमलानां श्रियः विकासादिशोभाः—चन्द्रोदये कमलानां संकोचात्। परिमुद्रयन्ति आच्छादयन्ति। अत्र दिशामन्धकारनाशः, सन्तप्तानां तापनाशः, कमलानां सङ्कोचनं—इति चन्द्रोदयकार्याणि तव मुखकान्तिभिरेव संपाद्यन्त इति त्वन्मुखं

चन्द्र इति रूपकं गम्यते। एतच्चातिशयोक्त्या प्राणितं, मुखेन वस्तुतोऽन्धकारादिहरणासंभवात्। उदाहृतं च पद्यमेतद्रूपकध्वन्युदाहरणे रसगङ्गाधरे (पृ० २४६)। मञ्जुभाषिणीवृत्तम्। तल्लक्षणं च—'सजसा जगौ भवति मञ्जुभाषिणी' इति ॥ २९ ॥

कुचकलशयुगान्तर्मामकीनं नखाङ्कं
सपुलकतनु मन्दं मन्दमालोकमाना[1]।
विनिहितवदनं मां वीक्ष्य बाला गवाक्षे
चकितनतनताङ्गी सद्म सद्यो विवेश ॥ ३० ॥

१. नि०-°लोकयन्ती।

कुचकलशेति ॥ बाला मुग्धा। अत एव—कुचकलशयुगान्तः कुचौ स्तनौ कलशौ इव, तयोर्युगं द्वन्द्वं, तस्यान्तर्मध्ये। मामकीनं मदीयं। नखाङ्कं नखक्षतं। सपुलकतनु हर्षात् पुलकितगात्रा। मन्दं मन्दं शनैः शनैः। आलोकमाना पश्यन्ती। मां गवाक्षे वातायने विनिहितवदनं किमियं करोतीति द्रष्टुं कुतूहलात् स्थापितमुखं मां वीक्ष्य दृष्ट्वा। चकितनतनताङ्गी चकितं आकस्मिकदर्शनात् विस्मितं नतनतं नम्रादपि नम्रं अतिविलीनं अङ्गं यस्याः सा। सद्म वासगृहं। सद्यः तत्क्षणमेव। विवेश प्रविष्टवती। कश्चिन्नायकः स्वसखायं ब्रूते—प्रथमरात्रिसुरतावसरे मद्दत्तं कुचयोर्नखक्षतमन्येद्युरवेक्ष्य यदा मुग्धा मम प्रिया विस्मयहर्षावनुभवन्ती स्थितासीत्तदा कुतूहलात्तां दिदृक्षुं वातायनसक्तदृष्टिं मां सावलोकितवती—मद्दर्शनेन च संजातव्रीडा झटिति गृहं प्रविष्टवतीति भावार्थः। व्रीडाख्यस्य व्यभिचारिभावस्योदाहरणे रसगङ्गाधरे (पृ० ७८) पद्यमेतत्पठ्यते। मालिनीवृत्तम् ॥३०॥

**विधाय सा मद्वदनानुकूलं[1] कपोलमूलं हृदये शयाना।**
**तन्वी तदानीमतुलां बलारेः साम्राज्यलक्ष्मीमधरीचकार[2] ॥३१॥**

१. बा०-मद्वचनानुकूलं। २. र०-चिराय चित्रे लिखितेव तन्वी न स्पन्दितुं मन्दमपि क्षमासीत्।

**विधायेति** ॥ **सा तन्वी** कृशाङ्गी। **तदानीं** विपरीतरतावसाने। **कपोलमूलं** चिबुकं। **मद्वदनानुकूलं** मम मुखस्य समीपे, चुम्बनार्थमिति भावः। **विधाय** कृत्वा। **हृदये** वक्षसि। **शयाना** निद्राणा—श्रमखिन्नत्वात्प्राप्तनिद्रा।

**बलारेः** बलस्य तदाख्यस्य दैत्यस्य अरेः शत्रोः इन्द्रस्येति यावत्। **अतुलां** अनुपमेयां **साम्राज्यलक्ष्मीं** साम्राज्यस्य त्रिभुवनाधिपत्यस्य लक्ष्मीं श्रियं। **अधरीचकार** तुच्छतां निनाय। कस्यचिन्नायकस्योक्तिः—विपरीतरतावसाने मद्वक्षसि मुखसमीपे स्वचिबुकं निधाय यदा सा मत्प्रिया निद्रामगमत्तदाहमिन्द्रस्य त्रैलोक्यराज्यसुखमपि तुच्छमेवागणयमिति भावार्थः। पद्यमिदं तृतीयचतुर्थपादयोः पाठभेदेन श्रमाख्यस्य व्यभिचारिभावस्योदाहरणे पठ्यते रसगङ्गाधरे ( पृ० ८४ )। उपजातिवृत्तम् ॥ ३१ ॥

मुहुरर्थितयाद्य निद्रया मे
बत यामे चरमे निवेदितायाः।
चिबुकं सुदृशो मृशामि याव—
न्मयि तावन्मुदिरोऽपि[1] निर्दयोऽभूत् ॥ ३२ ॥

१. नि०—मुदितो। वै० शे०—मिहिरो।

**मुहुरिति।** **मुहुः** वारं वारं। **अर्थितया** प्रार्थितया—मत्प्रेयसीं स्वप्नेऽपि दर्शयेति प्रार्थितया। **निद्रया।** **चरमे** निशाया अन्तिमे। **यामे** प्रहरे। **मे** मम। **निवेदितायाः** स्वप्नावस्थायां दर्शितायाः। **सुदृशः** चारुलोचनायाः। **चिबुकं** कपोलमूलं। **यावत् मृशामि** हस्तेन स्पृशामि। **बत** इति खेदे। **तावत् मुदिरः** मेघः। **अपि मयि निर्दयः** विगतानुकम्पः। **अभूत्।** प्रवासगतस्य स्वप्नेऽपि प्रियासङ्गमं वाञ्छत उक्तिरियम्—प्रहरत्रयं प्रार्थितवतो मे प्रसन्ना निद्रा तां प्रेयसीं दर्शितवती, किन्तु यावदेवाहं स्वहस्तस्पर्शेन तच्चिबुकोन्नयनं करोमि तावद्गर्जता घनेन निर्वासितनिद्रस्य मे पुनर्विरहः सम्पादितः। अत्र प्रियाप्रसादात्प्रागेव निद्राभङ्गजनितो निर्वेदो ध्वन्यते। **विषादनालंकारः।** तल्लक्षणं च कुवलयानन्दे—"इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम्। दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः॥ १३२॥" इति। मालभारिणीवृत्तम् ॥ ३१ ॥

श्रुतिशतमपि भूयः शीलितं भारतं वा
विरचयति तथा नो हन्त सन्तापशान्तिम्।

अपि सपदि यथायं केलिविश्रान्त[1] कान्ता—
वदनकमलवल्ग[2]त्कान्तिसान्द्रो नकारः ॥ ३३ ॥

१. वा०—°विश्रान्ति° । २ वा०—°कमलनिर्यत्°

**श्रुतिशतेति** । श्रुतिशतं श्रुतीनां वेदादीनां शतम् । अपि भूयः बहुवारं, नैकवारमित्यर्थः । शीलितं अभ्यस्तं । वा अथवा । भारतं अनेकधा परिशीलितमिति शेषः । हन्त इति खेदे । सन्तापशान्तिं दुःखशमनं । तथा नो नैव । विरचयति करोति । यथा अयं । केलिविश्रान्तकान्तावदनकमलवल्गत्कान्तिसान्द्रः केलिविश्रान्तायाः सुरतखिन्नायाः कान्तायाः वदनकमलात् मुखपद्मात् वल्गन्ती बहिः प्रसरन्ती या कान्तिः शोभा तया सान्द्रः पूरितः, अतिमधुर इति यावत् । नकारः निषेधसूचिका वाक् । अपि । सपदि झटिति । सन्तापशान्तिं विदधातीति शेषः । वेदमहाभारतादीनां पुनः पुनरनुशीलनेन नहि तादृशी मनःशान्तिरुपलभ्यते यादृशी रतिखिन्नकान्तामुखान्निःसरतो निषेधवाक्यस्यापि श्रवणेनोत्पद्यते, किं पुनर्वक्तव्यं स्याद्यदि स्वीकृतिसूचको हीकारः श्रूयेत, इति भावार्थः । विशेषालंकारः । मालिनीवृत्तम् ॥ ३३ ॥

लवलीं तव लीलया कपोले
कवलीकुर्वति कोमलत्विषा ।
परिपाण्डुरपुण्डरीकखण्डे[1]
परिपेतुः परितो महाधयः ॥ ३४ ॥

१. वा०—°कण्ठे ।

**लवलीमिति** । कस्याश्चित्सख्या नायिकां प्रति चाटूक्तिः । हे सखि—तव **कपोले** । **लीलया** अनायासेन । **कोमलत्विषा** करणभूतया कोमलकान्त्या **लवलीं** श्वेतवर्णां तदाख्यां लतां । **कवलीकुर्वति** ग्रसति सति—स्वशुक्लतया पराजितवति सति । **परिपाण्डुरपुण्डरीकखण्डे** परिपाण्डुरः अत्युज्ज्वलः पुण्डरीकाणां शुक्लकमलानां खण्डः समूहः, तस्मिन् । **परितः** सर्वतः । **महाधयः** बहुविधा मानसीर्व्यथाः । **परिपेतुः** निपतिताः । यदा तव कपोलः स्वशुभ्रतया अत्यन्तशुभ्रां लवलीलतामधरीचकार, तदा लवल्यपेक्षया न्यूनतरशुभ्रतानां श्वेतकमलानां महती चिन्ता समजनि—अस्माकं पराजयः

सुकरः प्रत्यासन्नश्चेति बहुदुःखितमभूत् पुण्डरीकजातम्--इति भावार्थः। अत्रपूर्वोत्तरार्धयोर्लकारपकारयोरनुप्रासः सुतरां चमत्कृतिकृत्। अतिशयोक्तिश्चालंकारः। मालभारिणीवृत्तम् ॥ ३४ ॥

यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः।
संकुचन्ति विकसन्ति[1] राघवे जानकीनयननीरजश्रियः ॥३५॥

१. बा०–विकुचन्ति।

यौवनेति। जानकीनयननीरजश्रियः जानक्याः सीतायाः नयननीरजयोः नेत्रकमलयोः श्रियः कान्तयः। यौवनोद्गमनितान्तशङ्किताः रामचन्द्रगतस्य यौवनस्य उद्गमेन तारुण्यप्राप्त्या नितान्तं अत्यन्तं शङ्किताः संजातव्रीडाः। राघवे रामचन्द्रविषये। संकुचन्ति संकोचं प्राप्नुवन्ति। तथा--शीलशौर्यबलकान्तिलोभिताः शीलं सदाचारः, शौर्यं वीरता, बलं शक्तिः, कान्तिः सौन्दर्यं, तैः लोभिताः आकृष्टाः। विकसन्ति विकासं प्राप्नुवन्ति। पद्येऽस्मिन् भावसंधिर्वर्णितः--उक्तं च जगन्नाथेन (र. गं., पृ० १०३)—"अत्र भगवद्दाशरथिगतस्य लोकोत्तरयौवनोद्गमस्य, तादृशस्यैव शीलशौर्यादेश्च दर्शनं विभावः। नयनगतसंकोचविकासावनुभावः। व्रीडौत्सुक्ययोः संधिर्व्यङ्ग्यः"। लक्षणं चोक्तं—'भावसंधिरन्योन्यानभिभूतयोरन्योन्याभिभावनयोग्ययोः सामानाधिकरण्यम्' इति। तथा चात्र यथासंख्यालंकारः। तथा चोक्तं रसगङ्गाधरे (पृ० ४७६–७)--"'उपदेशक्रमेणार्थानां संबन्धो यथासंख्यम्।'...अत्र यौवनोद्गमनितान्तशङ्किताः संकुचन्ति, शौर्यबलकान्तिलोभिता विकसन्तीति प्रथमद्वितीयक्रिययोः क्रमेण प्रथमद्वितीयविशेषणावच्छिन्नेन कर्त्रान्वयः। स च शाब्दः। समासाभावेन शब्दानामप्यन्वयात्॥" रथोद्धतावृत्तम्। 'रान्नराविह रथोद्धता लगौ' इति लक्षणम् ॥ ३५ ॥

अधिरोप्य हरस्य हन्त[1] चापं
परितापं प्रशमय्य बान्धवानाम्।
परिणेष्यति वा न वा युवायं[2]
निरपायं मिथिलाधिनाथपुत्रीम् ॥ ३६ ॥

१. बा०–कृत्त०। २. त्विदानीं।

अधिरोप्येति । विदेहाधिपतेर्धनुर्यज्ञे पिनाकारोपणोद्यतं राममुद्दिश्य मिथिलास्थजनोक्तिः । हन्त इति खेदे । हरस्य शङ्करस्य । चापं धनुः पिनाकमिति यावत् । अधिरोप्य अधिज्यं कृत्वा । बान्धवानां विश्वामित्रादीनां । परितापं चापारोपणे समर्थो भविष्यति न वेति शङ्कां । प्रशमय्य निरस्य । अयं पुरो दृश्यमानः । युवा रामचन्द्रः । मिथिलाधिनाथपुत्रीं जनकतनयां सीतां । निरपायं निर्विघ्नं । परिणेष्यति वा न वा । इति सन्देहः । शैवं धनुरारोप्य तथा स्वबान्धवानां मनश्चिन्तामपहृत्य निर्विघ्नं सीतापाणिग्रहणं करिष्यत्ययं रामो न वेति मिथिलास्थजनानां संशयोक्तिः । संशयाख्यस्य व्यभिचारिभावस्य ध्वनिरत्र । न चात्र ससन्देहालंकारः, सादृश्याभावात् । पद्यमिदं रसगङ्गाधरे ( पृ. २५६ ) ससन्देहालंकारस्य प्रत्युदाहरणे पठ्यते । मालभारिणीवृत्तम् ॥ ३६ ॥

भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि[1] वधूः ।
तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम्[2] ॥ ३७ ॥

१. बा०-चिरेण दहति । २. बा० बाला ।

भुजेति ॥ नवपरिणीता नवोढा—अत एव सुरतरसानभिज्ञा । वधूः भार्या । रहसि एकान्ते । वरेण पत्या । भुजपञ्जरे बाहुद्वयमध्ये । गृहीता गाढमाश्लिष्टा । तत्कालजालपतिता तत्कालं अकस्मादित्यर्थः, जाले बन्धने पतिता बद्धा । बालकुरङ्गी बालमृगी । इव । नितरां अत्यर्थं । वेपते कम्पते । अनाज्ञातरतिस्वादा मुग्धा नायिका वरेण गाढमाश्लिष्टा कम्पते–इति भावार्थः । पद्यमिदं श्रृंगाराभासोदाहरणत्वेन रसगङ्गाधरे (पृ० १००) पठ्यते । उक्तं च तत्र–'अत्र रतेर्नववध्वा मनागप्यस्पर्शादनुभयनिष्ठत्वेनाभासत्वम्' इति । अत्र पूर्वार्धे भुजपञ्जर इति रूपकं, द्वितीयार्धे तूपमा । गीतिवृत्तम् ॥ ३७ ॥

उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता ।
तदपि न हा विधुवदना मानससदनाद् बहिर्याति ॥ ३८ ॥

उपनिषद इति । उपनिषदः कठकेनाद्याः । परिपीताः जलवत् स्वोदरस्थाः कृताः, सम्यगधीता इत्यर्थः । गीता भगवद्गीता । अपि च । हन्त इति खेदे । मतिपथं बुद्धिमार्गं । नीता सम्यक् परिशीलितेत्यर्थः । एवं

सत्यपि वेदान्तज्ञानोपकरणस्य सम्यगनुशीलने। तदपि तथापि। विधुवदना चन्द्रमुखी नायिका। **मानससदनात्** मनोगृहात्, अन्तःकरणात्। **बहिः न याति**। हा इति खेदे। यद्यपि उपनिषदादिवेदान्तग्रन्थमननं मया सम्यगनुष्ठितं, तथापि विषयवैमुख्यं न मे समुद्भवति, प्रत्युत ममान्तःकरणं तामेव चन्द्रवदनामहर्निशं स्मरति इति भावार्थः। अत्र सत्यप्युनिषदाद्यध्ययनरूपे विषयवैमुख्यकारणे समुपस्थिते, कान्ताविस्मृतिरूपकार्यानुदयात् विशेषोक्तिरलङ्कारः। पद्यमिदं रसगङ्गाधरे (पृ. ४३७) विशेषोक्त्युदाहरणे पठ्यते। तल्लक्षणं च तत्रैव—"प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्यानुत्पत्तिर्विशेषोक्तिः" इति। आर्यावृत्तम्॥ ३८॥

**अकरुणहृदय प्रियतम मुञ्चामि त्वामितः[1] परं नाहम्।**
**इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥ ३९॥**

१. वा०—त्वागतः।

**अकरुणेति**। अत्र काचित् दूती विरहजनितां नायिकाया उन्मादावस्थां नायकसमीपे वर्णयति। हे **अकरुणहृदय** नास्ति करुणा दया हृदये यस्य तत्सम्बुद्धौ। ईदृगवस्थामपि मां विहाय गतोऽसीति यावत्। **प्रियतम** कान्त। **इतः परं अहं त्वां न मुञ्चामि** त्यजामि। **इति सा** तव प्रिया नायिका। **विकला** विरहोन्मत्ता सती। **आलीजनस्य** सखीजनस्य। **कराम्बुजं** हस्तकमलं। **आदाय** गृहीत्वा। **आलपति** प्रलापं करोति। विरहोद्वेगात् सखीजनं कान्तं मन्यत इत्यर्थः। पद्यमिदं रसगङ्गाधरे (पृ. ९०) उन्मादाख्यस्य व्यभिचारिभावस्योदाहरणे पठ्यते। तल्लक्षणं च—'विप्रलम्भमहापत्तिपरमानन्दादिजन्मान्यस्मिन्नन्यावभास उन्मादः।' विशदीकृतं च जगन्नाथेन—'एषा प्रवासगतं स्वनायिकावृत्तान्तं पृच्छन्तं नायकं प्रति कस्याश्चित्संदेशहारिण्या उक्तिः। प्रियविरहोऽत्र विभावः। असंबद्धोक्तिरनुभावः' इति। न चात्र भ्रान्तिमानलङ्कारः, तस्य सादृश्यप्रयोज्यत्वादिति च रसगङ्गाधरे (पृ. २६६) व्यक्तीकृतम्। गीतिवृत्तम्॥ ३९॥

**लोभाद्वराटिकानां विक्रेतुं तक्रमानिशमटन्त्या[1]।**
**लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः॥ ४०॥**

१. नि०—तक्रमक्रममटन्त्या।

लोभादिति । वराटिकानां कपर्दिकानां । लोभात् कपर्दिकाः लप्स्यन्ते इत्याशया । तक्रं विक्रेतुं । आनिशं रात्रिपर्यन्तं । अटन्त्या भ्रमन्त्या । गोपकिशोर्या गोपालकन्यया । मध्येरथ्यं रथ्यायाः वीथ्याः मध्ये । महेन्द्रनीलमणिः महार्घो रत्नविशेषः श्रीकृष्ण इत्यर्थः । लब्धः प्राप्तः । तक्रविक्रयाय भ्रमन्त्या गोपकुमार्या मार्गे श्रीकृष्णः प्राप्त इति भावार्थः । अत्रेन्द्रनीलमणिना कृष्णवर्णस्य भगवतो वासुदेवस्य निगरणात् निगीर्याध्यवसानरूपातिशयोक्तिः । वराटिका अन्विष्यन्त्या मणिर्लब्ध इति वाञ्छितार्थादधिकलाभत्वाच्च प्रहर्षणालङ्कारः । उदाहृतं पद्यमेतत्प्रहर्षणालङ्कारे रसगङ्गाधरे (पृ. ५०४)। तल्लक्षणं च तत्रैव--"साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम्" इति । गीतिवृत्तम् ॥ ४० ॥

रूपारुचिं निरासितुं रसयन्त्या हरिमुखस्य लावण्यम् ।
सुदृशः शिव शिव[1] सकले जाता सकलेवरे जगत्यरुचिः ॥४१॥

This verse is omitted in बा०. १. नि०–शिव शिव सुदृशः ।

रूपेति ॥ रूपारुचिं रूपे सौन्दर्ये अरुचिः अप्रीतिः, द्वेष इति यावत्, तां । निरासितुं दूरीकर्तुं । हरिमुखस्य श्रीकृष्णमुखस्य । लावण्यं सौन्दर्यम् । रसयन्त्याः आस्वादयन्त्याः, कस्याश्चित् । सुदृशः शोभनलोचनायाः नायिकायाः । शिव शिव इति खेदे । सकले समग्रे । सकलेवरे स्वशरीरसहिते । जगति इहलोके । अरुचिः अप्रीतिः । जाता उत्पन्ना । यथा कश्चित्कस्मिन्नपि खाद्ये वस्तुनि जातद्वेषः, तत्र रुचिमुत्पादयितुं लवणमास्वादयति, तथा सौन्दर्ये जातद्वेषा काचिन्नायिका भगवन्मुखलावण्यास्वादने प्रवृत्ता, किन्तु तत्फलं विपरीतमेव जातम्, न केवलं सौन्दर्ये रुचिर्नोत्पन्ना, अपि तु स्वशरीरेऽप्यरुचिरुदपद्यत —अर्थाद्भगवद्दर्शनेन ब्रह्मप्राप्तिरभूत्सकलैहिकवस्तुजाते चौदासीन्यमिति । उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ० ४४५) विषमालङ्कारे । 'अननुरूपसंसर्गो विषमम्' इति लक्षणं कृत्वा तत्रैवाह जगन्नाथः— 'स्वस्य दुःखसाधनवस्त्वनिवृत्तिदुःखान्तरसाधनावाप्तिरूपद्वयम् । अत्र यद्यपि ब्रह्मदर्शनोत्तरं जातायामपि जगति वैराग्यलक्षणायामरुचौ भगवद्वदनलावण्यदर्शनाद्रूपारुचिर्विलक्षणा या काचित्सा निवृत्तैवेति वक्तुं शक्यते, तथापि जगदरुचित्वेन सकलारुचीनामभेदाध्यवसायाद्रूपारुचिनिवृत्तेरप्रत्यय एव ।

अन्यथा सुखहेतोर्वैराग्यलक्षणाया अरुचेर्दुःखान्तरसाधनत्वं दुरुपपादं स्यादिति भवत्युभयोदाहरणम्।' गीतिवृत्तम् ॥ ४१ ॥

किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णमिति ।
तद्यदि पतति हुताशे तदा हताशे तुलां तवारोहेत् ॥ ४२ ॥

किमिति । नायिकां प्रति नायकस्य चाटूक्तिरियम् । हन्त इति हर्षे । मम अङ्गं । सुवर्णवर्णं सुवर्णसदृशवर्णं । इति मुग्धतया सारल्येन । किं वदसि । हे हताशे नष्टा, सुवर्णस्य तुल्यरूपं मम शरीरं इति आशा यस्याः सा, तत्संबुद्धौ । तत् सुवर्णं । यदि हुताशे अग्नौ । पतति । तदा तव तुलां साम्यं । आरोहेत् प्राप्नुयात् । मम शरीरं सुवर्णरूपमिति कथनं तवात्मलाघवकारि, अग्निविशुद्धं तत् त्वदवयवानां साम्यं प्राप्तुं शक्नोति नान्यथेति भावार्थः । अत्रोपमानभूतं सुवर्णं द्वितीयार्धे पद्यस्योपमेयीक्रियते, उपमेयभूतं च नायिकाङ्गमुपमानीक्रियते । अतोऽत्र प्रतीपालङ्कारः । तल्लक्षणं च रसगङ्गाधरे—'प्रसिद्धौपम्यवैपरीत्येन वर्ण्यमानमौपम्यमेकं प्रतीपम्' इति । एतदुदाहरणव्याख्याने चाह जगन्नाथः ( पृ. ४९६ )—'अत्र पूर्वार्धोपमागम्यं सुवर्णाधिक्यं तिरस्कृत्य द्वितीयार्धे प्रतीपं बालाङ्गवर्णस्याधिक्यं गमयति। हुताशपातं विना प्रतीपमपि दुर्लभम् । उपमातु स्वप्नेऽपि न संभवतीति मुग्धत्वहताशत्वाभ्यां गम्यते ' गीतिवृत्तम् ॥ ४२ ॥

औत्सुक्यात्परिमिलतां त्रपया संकोचमञ्चतां च मुहुः ।
नवसंगमयोर्यूनोर्नयनानामुत्सवो जयति ॥ ४३ ॥

औत्सुक्यादिति । औत्सुक्यात् दर्शनोत्कण्ठया । परिमिलतां संगच्छतां । त्रपया लज्जया । च । मुहुः वारं वारं । संकोचं अप्रसरणभावं । अञ्चतां प्राप्नुवतां । नवसंगमयोः नवः संगमः मिलनं ययोः तयोः । यूनोः युवा च युवतिश्च तयोः । नयनानां नेत्राणां । उत्सवः आनन्दः । जयति विशेषेण वर्तते । दंपत्योः प्रथममिलनप्रसङ्गे दर्शनोत्कण्ठया नयनानि संगतानि भवन्ति, पुनश्च स्वभावसुलभलज्जया संकोचं प्राप्नुवन्ति—एतादृशो नयनानन्दोऽत्यर्थं रमणीय इति भावार्थः । स्वभावोक्तिरलङ्कारः । आर्यावृत्तम् ॥ ४३ ॥

गरिमाणमर्पयित्वा लघिमानं कुचतटात्कुरङ्गदृशाम्[1] ।
स्वीकुर्वते नमस्ते यूनां धैर्याय निर्विवेकाय ॥ ४४ ॥

१. प., वै., शै०–°सरोजदृशाम् ।

गरिमाणमिति । गरिमाणं गुरुत्वं, आत्मन इति शेषः । अर्पयित्वा दत्वा–कुचतटायेति शेषः । कुरङ्गदृशाम् मृगनयनानां । कुचतटात् स्तनप्रदेशात् । लघिमानं लघुत्वं । स्वीकुर्वते गृह्णते । निर्विवेकाय विचारशून्याय । यूनां । धैर्याय साहसाय । ते तुभ्यं । नमः । हे युवजनसाहस, नितरामविमृश्यकार्यसि त्वं यन्मृगाक्षीणां स्तननिष्ठं लघुत्वमादाय स्वनिष्ठं गुरुत्वं स्तनयोरर्पयसि । यथा यथा नायिकायाः कुचद्वन्द्वं लघुभावं त्यजद्गुरुभावमापद्यते तथा तथा यूनां मनो गाम्भीर्यरूपं गुरुभावं त्यजद्विकाररूपं लघुभावं प्राप्नोतीति भावः । धैर्यस्य लघुगुरुविनिमयेन निर्विवेकत्वम् । परिवृत्त्यलङ्कारः । 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः' इति काव्यप्रकाशे । उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ. ४८२) । गीतिवृत्तम् ॥ ४४ ॥

न्यञ्चति[1] वयसि प्रथमे समुदञ्चति[2] तरुणिमनि सुदृशः ।
दधतिस्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च[3] भृशम्[4] ॥ ४५ ॥

बा० Reads this verse after the next one. १ बा०–भवंति । २. र०–Adds after it किं च । ३. नि०–चारुतां च । ४ र० Reads the second line उल्लसति कापि शोभा वचसां च दृशां च विभ्रमाणां च, but gives our reading also in the comment.

न्यञ्चतीति । सुदृशः चारुलोचनायाः । प्रथमे वयसि बाल्ये । न्यञ्चति ह्रासं गच्छति सति । तथा तरुणिमनि यौवने । समुदञ्चति आविर्भवति सति । वाचः गिरः । गतयः गमनानि । विभ्रमाः विलासाः । च । भृशं अत्यर्थं । मधुरिमाणं मधुरतां । दधाति स्म धारयंति स्म । वयःसंधिवर्णनम् । उत्तरार्धे प्रकृतानां वाग्गतिविभ्रामाणामेकयैव 'मधुरिमाणं दधति' इति गुणविशिष्टया क्रियया योगात् तुल्ययोगितालङ्कारः । उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ. ३१८) । तत्रैव तुल्ययोगितालक्षणं च—'प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता' इति । गीतिवृत्तम् ॥ ४५ ॥

**निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ।**
**अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ ४६ ॥**

**निःसीमेति ।** **नताङ्ग्याः** यौवनभरनतावयवायाः नायिकायाः । **नयनद्वयं** लोचनयुगं । **निःसीमशोभासौभाग्यं** निःसीमं अमर्यादं शोभायाः सौन्दर्यस्य सौभाग्यं संपद् यस्य तत्—अनन्तसौन्दर्ययुतमित्यर्थः । **अन्योन्यालोकनानन्दविरहात्** अन्योन्यालोकने परस्परदर्शने य आनन्दः तस्य विरहात् अभावात् । **इव** । **चञ्चलम्** इत्युत्प्रेक्षा । स्वभावतश्चञ्चलं कामिनीनयनयुगं, परस्परदर्शनाभावहेतुना तादृशमिति कविनोत्प्रेक्ष्यते । पद्यं चैतद्रसगङ्गाधरे ( पृ० २९४ ) [ आनन्दरूप- ] गुणाभावस्य हेतूत्प्रेक्षायामुदाह्रियते । अनुष्टुब्वृत्तम् ॥ ४६ ॥

**गुरुमध्ये हरिणाक्षी मार्तिकशकलैर्निहन्तुकामं[1] माम् ।**
**रदयन्त्रितरसनाग्रं[2] तरलितनयनं निवारयांचक्रे ॥ ४७ ॥**

१. र०—कमलाक्षी कमलाक्षेण प्रहर्तुकामं । नि०—विहन्तुकामं । २. बा०—रदयन्निव रसनाग्रं ।

**गुर्विति ।** **गुरुमध्ये** गुरूणां श्वश्रुवादीनां मध्ये स्थितेति शेषः । **हरिणाक्षी** मृगनयना । **मार्तिकशकलैः** मृत्तिकाया इमानि तानि च तानि शकलानि चेति तथा तैः । मृल्लोष्टखण्डैरित्यर्थः । **निहन्तुकामं** प्रहर्तुकामं । **मां** वीक्ष्येति शेषः । **रदयन्त्रितरसनाग्रं** रदैः दन्तैः यन्त्रितं धृतं रसनाग्रं जिह्वाग्रं यस्मिन् कर्मणि यथा तथा । **तरलितनयनं** तरलिते चालिते नयने यस्मिन्कर्मणि यथा तथा । **निवारयांचक्रे** प्रतिषिद्धवती । सुगमो भावार्थः । **स्वभावोक्तिरलङ्कारः** । उदाहृतं चैतत्पद्यमर्थव्यक्तिगुणोदाहरणे रसगङ्गाधरे ( पृ० ६० ) । तल्लक्षणं च–' वस्तुनो वर्णनीयस्यासाधारणक्रियारूपयोर्वर्णनमर्थव्यक्तिः । ' उक्तं च ग्रन्थकृता तत्र ' अयमेवेदानींतनैः स्वभावोक्त्यलङ्कार इति व्यपदिश्यते ' । गीतिवृत्तम् ॥ ४७ ॥

**नयनाञ्चलावमर्शं या न कदाचित्पुरा सेहे ।**
**आलिङ्गितापि जोषं तस्थौ[1] सा गन्तुकेन दयितेन ॥ ४८ ॥**

१. नि०—तस्थौ साङ्गं; it omits जोषं ।

नयनेति । या नायिका । पुरा संयुक्तावस्थायां । कदाचित् अपि । नयनाञ्चलावमर्शं लोचनपक्ष्मस्पर्शं । न सेहे न सोढवती । सा एव । अधुना गन्तुकेन प्रवासोद्युक्तेन । दयितेन प्रियेण । आलिङ्गिता अपि । जोषं तूष्णीं । तस्थौ स्थिता । या खलु नायिका पुरा संयोगावस्थायां स्वाभाविकचाञ्चल्यवशात् अक्षिपक्ष्मस्पर्शं न सोढवती, सैवेयं प्रवासार्थं गच्छता प्रियेणाश्लिष्टापि न किंचिद्वदतीति भावः । प्रवासविप्रलम्भशृङ्गारोदाहरणमिदं रसगङ्गाधरे ( पृ० ३५ ) पठ्यते । अत्र च सहजचाञ्चल्यनिवृत्तिर्जडता च नायिकागते स्पष्टे । गीतिवृत्तम् ॥ ४८ ॥

मानपराग्वदनापि प्रिया शयानेव दयितकरकमले[1] ।
उद्वेल्लद्भुजमलसग्रीवाबन्धं कपोलमाधत्ते ॥ ४९ ॥

१. नि०–दयित करकमले ।

मानेति । मानपराग्वदना मानेन प्रणयकोपेन पराग्वदना पराङ्मुखी । अपि । प्रिया कान्ता । शयाना इव निद्राव्याजेनेति यावत् । उद्वेल्लद्भुजं उद्वेल्लन् चञ्चलः भुजो यस्मिन्कर्मणि यथा तथा । अलसग्रीवाबन्धं अलसः शिथिलः ग्रीवाया बन्धो यस्मिन्कर्मणि यथा तथा । दयितकरकमले प्रियतमहस्ते । स्वकीयं कपोलं । आधत्ते स्थापयति । काचिन्नायिका प्रणयकुपितापि दयिताश्लेषसुखमिच्छन्ती निद्राव्याजेन प्रियतमकरकमले स्वकपोलं निधत्ते । एतेनैतादृशं प्रियतमसौभाग्यं सूचितं भवति येन मानिनी क्षणमपि मानधारणे असमर्था । उद्वेल्लद्भुजमलसग्रीवाबन्धमिति क्रियाविशेषणे निद्रामिषं पोषयतः । गीतिवृत्तम् ॥ ४९ ॥

लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः ।
कस्तूरीतिलकमिषादयमलिकेऽलिस्तवोल्लसति ॥ ५० ॥

लोचनेति । नायिकां प्रति नायकस्य चाटूक्तिः । लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः लोचने एव फुल्लाम्भोजद्वयं विकसितपद्मयुगलं तयोः लोभः, तेन आन्दोलितं तरलितं—अस्मिन् पद्मे निवसामि, इतरस्मिन्वेति संशयारूढं, एकमेव मनः यस्य सः । अलिः भ्रमरः । तव । अलिके ललाटे—मध्यभागे इत्यर्थः । कस्तूरीतिलकमिषात् कस्तूरीतिलकव्याजात् । उल्लसति शोभते । विकसितपद्मसदृशं तव लोचनद्वयं दृष्ट्वा कतरस्मिंस्तिष्ठा-

मीत्यनिश्चितमना भ्रमरोऽयं मध्यस्थित इव दृश्यते–इति कस्तूरीतिलकापह्नवः कृतः कविना। अपह्नुतिरलङ्कारः। तल्लक्षणं च काव्यप्रकाशे—'अपह्नुतिरपह्नुत्य किंचिदर्थप्रदर्शनम्' इति। आर्यावृत्तम्॥ ५०॥

अधिरजनि प्रियसविधे कथमपि संवेशिता गुरुभिः।
किं भवितेति सशङ्कं पङ्कजनयना परामृशति॥ ५१॥

अधिरजनीति। अधिरजनि रात्रौ। गुरुभिः श्वश्र्वादिभिः पूज्यैः जनैः। प्रियसविधे कान्तसमीपे। कथमपि महता कष्टेन। संवेशिता स्थापिता। पङ्कजनयना कमललोचना। किं भविता किमापतिष्यति। इति सशङ्कं सभयं। परामृशति विचारयति। अनभिज्ञातपतिसंगमास्वादायाः पत्युः सविधे प्रथमवारं निवेशितायाः नवोढाया मुग्धावस्था व्यज्यतेऽत्र। आर्यावृत्तम्॥ ५१॥

चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः
प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा।
एतत्त्वां प्रतिबोधयामि मम चेदुक्तिं हितां मन्यसे
मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति॥ ५२॥

चिन्तेति। मानिनीं प्रति कस्याश्चिदुक्तिः। मनसिजः कामः। चिन्तामीलितमानसः चिन्तया, कथमहमिमां जेतुं समर्थः स्यामितीदृश्या, मीलितं शून्यं, विरतव्यापारं, मानसं यस्य सः। सख्यः। विहीनप्रभाः स्वकथनस्य वैफल्यात् निस्तेजस्काः। प्राणेशः प्रियः। प्रणयाकुलः प्रेमव्याकुलः, प्रणतिपर इत्यर्थः। भवतु–इयं समस्ता समग्रा। कथा आस्तां तिष्ठतु। चेत् यदि। त्वं मम उक्तिं वचनं। हितां हितप्रदां। मन्यसे अवधारयसि। तर्हि त्वां एतत् प्रतिबोधयामि निवेदयामि–हे मुग्धे मूढे। मानं मा कुरु। नोचेत्। इदं तव आननं मुखं। राकापतिः चन्द्रः। जेष्यति–सति माने मुखस्य मलीमसत्वाच्चन्द्रः साम्यं प्राप्स्यति। तव मानापनोदार्थं चिन्ताव्याकुलो मदनः, स्वप्रयत्नवैफल्यान्निस्तेजस्कास्तवसख्यः, प्रियोऽपि प्रणतिपरः–सर्वमेतत्तिष्ठतु, किन्तु मानात्पूर्वं त्वदाननेन सकलङ्कश्चन्द्रो जित आसीत्, अधुना यदि मानमाधत्से तर्हि त्वन्मलिनमुखसादृश्यं भजमानश्चन्द्रस्त्वां जेष्यतीति हितं मे वचनमवधार्य त्यज्यतां मान इति भावार्थः।

पद्यमेतद्रसगङ्गाधरे (पृ. ६५) माधुर्यौजःप्रसादाख्यगुणत्रयाभिव्यञ्जन उदाहृतम्। तथा चोक्तं ग्रन्थकृता—"अत्र सर्वावच्छेदेन प्रसादाभिव्यञ्जकत्वं। अंशभेदेन तु माधुर्यौजोऽभिव्यञ्जकत्वमपि। मनसिजान्तस्य मा कुर्वादेश्च माधुर्याभिव्यक्तिहेतुत्वात्। सख्य इत्यादेरोजोगमकत्वात्। नन्वत्र शृङ्गाराश्रयस्य माधुर्यस्याभिव्यक्तये तदनुकूलास्तु नाम रचना, ओजसस्तु कः प्रसङ्गो यदर्थं तदनुकूलवर्णविन्यास इति चेत्। नायिकामानोपशान्तये कृतानेकयत्नायास्तदीयं हितमुपदिशन्त्याः सख्याः सक्रोधत्वस्य व्यञ्जनीयतया तथाविन्यासस्य साफल्यात्" इति। शार्दूलविक्रीडितं छन्दः ॥ ५२ ॥

अलंकर्तुं कर्णौ भृशमनुभवन्त्या नवरुजं[1]
ससीत्कारं तिर्यग्वलितवदनाया मृगदृशः।
कराब्जव्यापारानतिसुकृतसारान्रसयतो
जनुः सर्वश्लाघ्यं जयति ललितोत्तंस भवतः ॥ ५३ ॥

१. र. °रुजा। नि०-°रुचं।

अलंकर्तुमिति॥ इयं कस्यचित्कामिनीकर्णभूषणं प्रत्युक्तिः। हे ललितोत्तंस रमणीय कर्णभूषण। कर्णौ अलंकर्तुं तव धारणेन भूषयितुं। भृशं अत्यन्तं। नवरुजं नूतनां पीडां। अनुभवंत्याः अलंकाराणां प्रथमधारणे क्लेशः प्रसिद्ध एव। ससीत्कारं सीत्कारपूर्वकं यथा स्यात्तथा। तिर्यग्वलितवदनायाः तिर्यक् वक्रं यथा स्यात्तथा वलितं परिवर्तितं वदनं मुखं यया तस्याः। मृगदृशः हरिणाक्ष्याः नायिकायाः। अतिसुकृतसारान् महतः पुण्यस्य सारान् फलभूतान्। कराब्जव्यापारान् हस्तकमलयोः चेष्टाः। रसयतः आस्वादयतः। भवतः। जनुः जन्म। सर्वश्लाघ्यं सर्वजनैः स्तुत्यं। जयति सर्वोत्कर्षेण वर्तत इत्यर्थः। अत्र नवोढया कामिन्या प्रथममेव क्लेशेन कर्णे धार्यमाणस्योत्तंसस्य वृत्तांतः प्रत्यग्रखंडिताधरकामुकवृत्तांताभेदेन स्थितः। सा हि अधरखंडनकाले नवरुजमनुभवति ससीत्कारं वदनं परावर्तयति नायके करकमलं व्यापारयति। अत्र प्रस्तुते उत्तंसवृत्तांते अप्रस्तुतकामुकवृत्तांतस्यारोपेण समासोक्तिरलङ्कारः। कामिनीविषयः कामुकगतोऽभिलाषश्च व्यज्यते। उदाहृतं पद्यमेतद्रसगङ्गाधरे (पृ० ३७७) समासोक्तौ। शिखरिणीवृत्तम् ॥५३॥

आयातैव निशा निशापतिकरैः कीर्णं[1] दिशामन्तरं[2]
भामिन्यो भवनेषु भूषणगणैरङ्गान्यलंकुर्वते[3] ।
मुग्धे[4] मानमपाकरोषि न मनागद्यापि रोषेण ते
हा हा बालमृणालतोऽप्यतितरां[5] तन्वी तनुस्ताम्यति[6] ॥५४॥

१. नि०-पूर्णं । २. बा०- °मन्दिरं । ३. र०- भूषणगणैरुल्लासयन्ति श्रियम् । ४. र०- बाले । ५. र०- °तमां । ६. नि०-तनुः क्षाम्यति ।

आयातैवेति । मानिनीं प्रति सखीजनस्योक्तिः । हे मुग्धे मूढे । निशा रात्रिः । आयाता एव तव मानापनोदकरणे इयान् कालो व्यतीतः-इत्यर्थः । तथा च-दिशां अन्तरं अन्तरालं । निशापतिकरैः चन्द्रकिरणैः । कीर्णं व्याप्तम् । एतत्फलत्वेन च-भामिन्यः कोपस्वभावा अपि कामिन्यः । भवनेषु स्वस्वगृहेषु । प्रियसङ्गमार्थं भूषणगणैः अङ्गानि अलंकुर्वते स्वप्रसाधने रता इत्यर्थः । त्वं पुनः अद्यापि । मानं रूपयौवनादिगर्वं प्रणयकोपं वा । मनाक् ईषत् । न अपाकरोषि न त्यजसि । हा हा इति खेदे । रोषेण क्रोधेन । बालमृणालतः अभिनवमृणालात् । अपि । तन्वी कोमला । ते तनुः शरीरं । ताम्यति म्लानतां भजते । तव प्रसादने रतानामस्माकं रात्रिर्जाता, ज्योत्स्नया चाम्बरं व्याप्तं, अन्याश्च स्त्रियः परित्यक्तकोपाः प्रियमिलनार्थमात्मप्रसाधने लग्नाः परिदृश्यन्ते, त्वं पुनस्तथैव कुपिता तिष्ठसि, हे मुग्धे एवं च कोमलं ते शरीरं म्लानिमापद्यते, अतो मानं त्यजेति भावार्थः । पद्यमेतद्वैदर्भीवृत्तेरुदाहरणत्वेन पठ्यते रसगङ्गाधरे ( पृ० ७३ )। लक्षणं च तस्यास्तत्रैव-" एभिर्विशेषविषयैः सामान्यैरपि च दूषणै रहिता । माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा ॥ व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता । तां विबुधा वैदर्भीं वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥ " इति । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

वाचो माङ्गलिकीः[1]-प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा[2] ।
निःश्वासग्लपिताधरं परिपतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव शिव प्राणेशमालोकते ॥५५॥

१. बा०—वाचं माङ्गलिकी । २. नि०—०म्बुजं । ३. र०—निःश्वासग्लपिताधरोपरिपत° ।

**वाच** इति । प्रवत्स्यत्पतिकाया वर्णनमिदम् । **प्रयाणसमये** गमनकाले । प्रियस्येति शेषः । **जने** बन्धुजने । **माङ्गलिकीः** स्वस्त्यादिशब्दयुता मङ्गलफलकाः । **वाचः** गिरः । **अनल्पं** बहु । **जल्पति** सति । **केलीमन्दिरमारुतायनमुखे** केलीमन्दिरस्य क्रीडागृहस्य मारुतायनमुखे वातायनद्वारि । **विन्यस्तवक्त्राम्बुजा** विन्यस्तं स्थापितं वक्त्राम्बुजं मुखकमलं यया सा । **परिपतद्बाष्पार्द्रवक्षोरुहा** परिपतद्भिः बाष्पैः अश्रुभिः आर्द्रौ सिक्तौ वक्षोरुहौ स्तनौ यस्याः सा । **लोलविलोचना** लोले चञ्चले, कातरे इति यावत्, विलोचने नयने यस्याः सा । **बाला** मुग्धा प्रिया । **निःश्वासग्लपिताधरं** निःश्वासैः ग्लपितः ग्लानिं प्रापितः, त्यक्तरक्तवर्ण इत्यर्थः, अधरः ओष्ठः यस्मिन् कर्मणि यथा स्यात्तथा । **प्राणेशं** कान्तं । **आलोकते** पश्यति । **शिव शिव** इति खेदे । अत्र नायिका मुग्धा, अत एव प्रयाणकाले पत्युर्बन्धुजनस्य च सांनिध्यं परिहृत्य क्रीडागृहगवाक्षेण तदवलोकनपरा तूष्णीमेव विरहवेदनामनुभवति। पद्यमेतद्रसगङ्गाधरे ( पृ० ३४ ) विप्रलम्भशृङ्गार उदाहृतम् । व्याख्यातं च तत्रैव ग्रन्थकृता—' अत्राप्यालम्बनस्य नायकस्य, निःश्वासाश्रुपातादेरनुभावस्य, विषादचिन्तावेगादेश्च व्यभिचारिणः, संयोगाद्रतिरभिव्यज्यमाना वियोगकालावच्छिन्नत्वाद्विप्रलम्भरसव्यपदेशहेतुः । ' इति । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥

दारिद्र्यं भजते कलानिधिरयं राकाधुना म्लायति
स्वैरं कैरवकाननेषु परितो मालिन्यमुन्मीलति ।
द्योतन्ते हरिदन्तराणि सुहृदां वृन्दं समानन्दति
त्वं चेदञ्चसि काञ्चनाङ्गि वदनांभोजे विकासश्रियम् ॥५६॥

**दारिद्र्यमिति** । मानिनीं प्रति सख्या उक्तिः । हे **काञ्चनाङ्गि** काञ्चनवर्णं सुवर्णवर्णं अङ्गं शरीरं यस्याः तत्संबुद्धौ । **त्वं वदनांभोजे** मुखकमले । **विकासश्रियं** विकासस्य, स्मितस्येति यावत्, श्रियं शोभां । **चेत्** यदि । **अञ्चसि** धारयसि । तदा **अयं कलानिधिः** चन्द्रः । **दारिद्र्यं** श्रीशून्यत्वं, निष्कलत्वं वा । **भजते** धारयति । **अधुना** अस्मिन्नेव क्षणे । **राका** पूर्णिमा । **म्लायति** म्लाना, हीनज्योत्स्ना भवति । **परितः** समन्तात् । **कैरवकाननेषु** कुमुदवनेषु । **स्वैरं** विना परप्रयत्नं । **मालिन्यं** विकासराहित्यं । **उन्मीलति**

उदितं भवति। हरिदन्तराणि दिशां मध्यवर्तिनो भागाः। द्योतन्ते प्रकाशयुक्ता भवन्ति। तथा च—सुहृदां अस्मादृशां बन्धूनां। वृन्दं समूहः। समानन्दति हृष्यति। हे सुवर्णसदृशगौरशरीरे, यदि मानमपहाय प्रसादसूचकं मन्दस्मितं स्वमुखकमले धारयसि तर्हि न केवलं सखीजनस्याह्लादो दिक्षु प्रसादश्च विस्तीर्णो भविष्यति, अपि तु चन्द्रस्य पूर्णिमायाः कुमुदानां च निःश्रीकत्वमुत्पत्स्यत इति भावार्थः। सूर्यप्रभोदये हि दिक्षु प्रकाशः, कमलवृन्दे विकासः, चन्द्रादिशोभाह्रास उपजायते। एतेन मुखे सूर्यसादृश्यं व्यङ्ग्यम्। मुखे मन्दस्मितानयनसमकालमेव चन्द्रो दारिद्र्यं भजिष्यते—वर्तमानसामीप्ये वर्तमानवद्वेति लट्। एवमुत्तरत्रापि। हेतुकार्ययोर्यौगपद्याभावेऽप्यत्र तथा वर्णनादतिशयोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥५६॥

पाटीरद्रु[1]भुजङ्गपुङ्गवमुखायाता[2] इवातापिनो[3]
वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः।
एते[4] हन्त किरन्ति कूजितमयं[5] हालाहलं कोकिला
बाला बालमृणालकोमलतनुः प्राणान्कथं रक्षतु॥ ५७॥

१. धा०—पाटीरास्तु। २. र०—°मुखोद्भूता। ३. र०—वपुस्तापिनो। ४. र०—श्रोत्रे। ५. र०—कूजितमिमे।

**पाटीरेति।** वसन्ते विरहिणीवर्णनम्। **पाटीरद्रुभुजङ्गपुङ्गवमुखायाताः** पाटीरद्रुः चन्दनतरुः, तस्मिन् भुजङ्गपुङ्गवाः सर्पश्रेष्ठाः, तेषां मुखेभ्यः आयाताः निःसृताः। पुङ्गवशब्देन तेषां महाविषत्वं द्योत्यते। **इव।** **आतापिनः** समन्तात् विरहिणीसंतापजनकाः। **वाताः** वायवः। **वान्ति** चलन्ति। **अमी** परितो दृश्यमानाः। **ताम्राः** रक्तवर्णाः। **रसालद्रुमाः** आम्रवृक्षाः। वसन्ते ताम्रपल्लवैराम्राणामाच्छादितत्वात्। **लोचनं दहन्ति** नेत्रयोरुद्वेगजनका इत्यर्थः। **हन्त** इति खेदे। **एते कोकिलाः।** **कूजितमयं** कूजितरूपं। **हालाहलं** कालकूटं। **किरन्ति** वर्षन्ति। सत्येतादृशेऽनर्थसंपाते—**बालमृणालकोमलतनुः** नवमृणालसदृशकोमलशरीरा। **बाला** युवतिः। **कथं प्राणान् रक्षतु** जीवतु। विरहावस्थायामेकैकमप्यनर्थाय, किन्त्वत्र भयंकराशीविषफूत्कारवद्दुःसहा दक्षिणानिलाः, अभिनवपल्लवभराचिता आम्राः, कालकूटवद्भृशमुद्वेजकाः कोकिलरवाः, त्रयोऽपि मिलित्वा बालाप्राणनाशायोद्युक्ता

इति भावः। समुच्चयालङ्कारोदाहरणे पठ्यते पद्यमिदं रसगङ्गाधरे (पृ. ४९१)। 'युगपत्पदार्थानामन्वयः समुच्चयः' इति लक्षणं च तत्रैव। अत्र त्रयोऽपि पदार्था जीवनाशार्थमापतन्तोऽरमणीयाः। शार्दूलविक्रीडितं छन्दः ॥ ५७ ॥

आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती
मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति।
ऊहापोहमिमं सरोजनयना यावद्विधत्तेतरां
तावत्कामनृपातपत्रसुषमं बिम्बं बभासे विधोः ॥ ५८ ॥

आयातैवेति। कस्याश्चिद् विगलन्मानाया उक्तिरियम्। मृगदृशां हरिणाक्षीणां। मनः। उन्निद्रं दीप्ताभिलाषं। आतन्वती कुर्वती। निशा रात्रिः। आयातैव आगता एव। एष मे मानः। संप्रति अधुना। निरातङ्कं निःशङ्कं। कथं हृदि स्थास्यति। सरोजनयना कमलनयना नायिका। इमं। ऊहापोहं तर्कवितर्कं। यावत् विधत्तेतरां कुरुते। तावत्। कामनृपातपत्रसुषमं कामनृपस्य मदननृपतेः आतपत्रस्य छत्रस्य सुषमा शोभा इव सुषमा यस्य तत्। विधोः चन्द्रस्य। बिम्बं मण्डलं। बभासे प्रकाशितमभूत्। 'अत्र रात्रिसंनिधानादपि सिद्ध्यतो मानविनाशस्य चन्द्रोदयादनायासेन सिद्धिः।' (रसगङ्गाधर, पृ० ४९२) समाधिरलङ्कारः। तल्लक्षणं च—'एककारणजन्यस्य कार्यस्याकस्मिककारणान्तरसमवधानाहितसौकर्यं समाधिः।' शार्दूलविक्रीडितं छन्दः ॥ ५८ ॥

प्रभातसमयप्रभां प्रणयिनि[1] ह्नुवाना रसा-
दमुष्य निजपाणिना दृशममीलयल्लीलया[2]।
अयं तु[3] खलु पद्मिनीपरिमलालि[4]पाटच्चरै
रवेरुदयमध्यगादधिकचारु तैर्मारुतैः[5] ॥ ५९ ॥

१. नि०-प्रणयिनी। २. र०-नयनाम्बुजं सपदि पाणिनामीलयत्। ३. र०-अनेन। बा०-अयं नु। ४. बा०-°लाद्रिपाट°। ५. र०-समीरशिशुकैश्चिरादनुमितो दिनेशोदयः।

प्रभातेति। प्रणयिनि प्रियतमे। रसात् रागात्, प्रेम्णः, हेतोः। प्रभातसमयप्रभां प्रातःकालीनसूर्यकान्ति। ह्नुवाना गोपयन्ती। काचिन्ना-

यिका निजपाणिना स्वहस्तेन । लीलया कुतूहलेन । अमुष्य स्वप्रियस्य । दृशौ दृष्टिं । अमीलयत् आच्छादयामास । अथं प्रकृतनायकः । तु । खलु निश्चयेन । पद्मिनीपरिमलालिपाटच्चरैः पद्मिनीनां कमलिनीनां परिमलस्य गन्धस्य आलीनां पंक्तीनां पाटच्चरैः तस्करैः । तैः पूर्वानुभूतैः । मारुतैः वायुभिः । रवेः सूर्यस्य । उदयं । अधिकचारु अतिसम्यक् यथा स्यात्तथा । अध्यगात् अज्ञासीत् । काचिन्नायिका उषसि स्वप्रियतमस्य प्रभातदर्शनं वारयितुमिच्छन्ती तस्य नयने स्वहस्तेनाच्छादितवती, किन्तु कमलगन्धवाहिभिः पवनैस्तस्य सूर्योदयज्ञानमभूत्, सूर्योदये कमलानां विकासादिति भावः । इष्टाप्राप्तिजन्योऽत्र विषमालङ्कारः । 'अननुरूपसंसर्गो विषमम्' इति रसगङ्गाधरे लक्षयित्वेममलङ्कारं पद्यं चैतदुदाहृत्य (पृ० ४४६) ग्रन्थकृदाह— 'अत्र प्रियतमकर्तृकप्रभातविषयकज्ञानाभावः कामिन्याः सुखसाधनतयेष्टः । स च तया साध्यमानोऽपि न सिद्ध इतीष्टाप्राप्तिरेव । यद्वा तादृशज्ञानं तस्या दुःखसाधनम्, तन्निवृत्तिरूपं चेष्टं साध्यमानमपि न [त] थेति सैव । एवं च द्विप्रकारापीष्टाप्राप्तिरेवात्र संभवति ।' पृथ्वीवृत्तम् ॥ ५९ ॥

विदूरादाश्चर्यस्तिमितमथ किंचित्परिचया—
दुदञ्चच्चाञ्चल्यं तदनु परितः स्फारितरुचि ।
गुरूणां संघातं[1] सपदि मयि याते समजनि
त्रपाघूर्णत्तारं नयनमिह सारङ्गजदृशः[2] ॥ ६० ॥

१. नि० र०-संघाते । २. र०-नयनयुगमिन्दीवरदृशः ।

विदूरादिति । अत्र कश्चित्सखायं प्रति क्वचिदनपावृते स्थलविशेषे गुरूञ्शुश्रूषमाणायाश्चिरप्रोषितमसंभावितागमनं प्रियमकस्मादवलोकितवत्याः प्रियाया नयनव्यापारं वर्णयति । सारङ्गजदृशः सारङ्गो हरिणस्तस्माज्जायत इति सारङ्गजो मृगपोतस्तद्वद् दृग् दृष्टिर्यस्याः तस्याः, मत्प्रियायाः । नयनं नेत्रं । विदूरात् दूरतो मद्दर्शनात् । आश्चर्यस्तिमितं कथमयमकस्मादद्य संप्राप्त इत्याश्चर्येण निश्चलं । अथ ततः । किंचित्परिचयात् मयीषन्निकटवर्तिनि जाते सम्यग्दर्शनात् । उदञ्चच्चाञ्चल्यं प्राप्तचाञ्चल्यं औत्सुक्येन तरलतां प्राप्तं । तदनु तदनंतरं । परितः समन्ततः । स्फारितरुचि स्फारिता वृद्धिं प्रापिता रुचिः कान्तिर्यस्य, हर्षोद्रेकात् विकसितमित्यर्थः । इह अत्र । मयि

गुरूणां पूज्यानां । संघातं समूहं । याते सति । सपदि झटिति । त्रपाघूर्णत्तारं त्रपया लज्जया घूर्णन्ती भ्रमन्ती तारा कनीनिका यस्य तादृशं । समजनि संजातम् । अत्र क्रमेण नायिकागतनयनविकारवर्णनम्—दूरतो विलोकिते, अतर्कितागमनात् साश्चर्यं, ईषत्संनिधाने समुत्सुकतया चञ्चलं, तदनन्तरं हर्षाद्विकसितं, गुरुसांनिध्यमागते च सलज्जमभूदिति भावार्थः । अत्र क्रमेणानेकविकाराणां स्तिमितत्वादीनां नयनरूप एकस्मिन्नधिकरणे वर्णनात्पर्यायालङ्कारः । उदाहृतं चैतत्पद्यं रसगङ्गाधरे ( पृ. ४७९ ) पर्यायालङ्कारे । तल्लक्षणं च तत्रैव—'क्रमेणानेकाधिकरणकमेकमाधेयमेकः पर्यायः । क्रमेणानेकाधेयकमेकमधिकरणमपरः ।' शिखरिणी छन्दः ॥ ६० ॥

कपोलावुन्मीलत्पुलकनिकुरम्बौ[1] मयि मनाङ्
मृशत्यन्तः[2] स्मेरस्तबकितमुखाम्भोरुहरुचः ।
कथंकारं शक्याः परिगदितुमिन्दीवरदृशो
दलद्द्राक्षानिर्यद्रसभरसपक्षा[4] भणितयः ॥ ६१ ॥

१. शे. वै०—°लसवपुलकपाली । २. नि०—स्पृशत्यन्तः । ३. बा०—लसत् । ४. बा०—°समच्छा ।

कपोलाविति ॥ नायकोक्तिरियम् । उन्मीलत्पुलकनिकुरम्बौ उन्मीलन् उद्गच्छन् , मत्सांनिध्येन चेष्टया वा प्रादुर्भवन् , पुलकस्य रोमाञ्चस्य, निकुरम्बः निचयः ययोः तौ नायिकायाः कपोलौ । मयि । मनाक् ईषत् । मृशति स्पृशति सति । अन्तःस्मेरस्तबकितमुखाम्भोरुहरुचः अन्तः स्मेरस्य ईषद्धास्ययुक्तस्य, अत एव स्तबकितस्य ईषद्विकसितस्येव मुखाम्भोरुहस्य मुखकमलस्य रुक् कान्तिः यस्याः तस्याः नायिकायाः । अत्र नायिकाया नातिस्फुटस्मितयुक्तं वदनं, ईषद्विकसितेन कमलेनोपमीयते । अर्धविकसितं च कुसुमं, सम्यग्विकसितकुसुमानां गुच्छेन तुल्यं भवतीत्यत्र स्तबकितशब्दप्रयोगः । इन्दीवरदृशः नीलोत्पलतुल्यनयनायाः, तस्याः नायिकायाः । दलद्द्राक्षानिर्यद्रसभरसपक्षाः दलन्ती अत्यन्तपरिपाकेन स्वयमेव प्रस्फुटन्ती या द्राक्षा, तस्याः निर्यन् बहिर्गच्छन् यो रसभरः रससमूहः, तस्य सपक्षाः सदृशाः । अत्यन्तमधुरा इति यावत् । भणितयः वचनानि । परिगदितुं वर्णयितुं । कथंकारं केन प्रकारेण । शक्याः । मत्संनिधानेन सञ्जातरोमाञ्चौ

प्रियाकपोलौ यदाहं स्पृष्टवान्, तदेषद्धास्ययुक्तेन वदनेन यानि यानि मधुराणि वचांसि प्रिया जगाद, तानि वर्णयितुमशक्यानीति भावार्थः। अत्र स्पर्शात्पूर्वमपि रोमाञ्चोद्गमो नायिकाया नायके प्रेमातिशयं द्योतयति। स्पर्शानन्तरं च सहजमधुरोद्गारोऽप्यनुरागातिशयपोषकः। शिखरिणी वृत्तम्॥ ६१॥

राजानं जनयांबभूव सहसा जैवातृक त्वां तु यः
सोऽयं कुण्ठितसर्वशक्तिनिकरो[1] जातो जरातो विधिः।
संप्रत्युन्मदखञ्जरीटनयनावक्त्राय नित्यश्रिये[2]
दाता राज्यमखण्डमस्य जगतो धाता नवो मन्मथः॥ ६२॥

१. बा०—°शक्तिविभवो। २. बा०—नयनावक्त्रारविन्दश्रिये।

**राजानमिति**॥ कस्यचिच्चन्द्रं प्रत्युक्तिः। हे **जैवातृक** चन्द्र। **यः विधिः** ब्रह्मा। **त्वां राजानं** नृपं, सौन्दर्यातिशयात्सर्वश्रेष्ठम्। द्विजराजपदाच्चन्द्रस्य राजत्वमपि प्रसिद्धम्। **सहसा** अविचारेणैव। **जनयांबभूव** उत्पादयामास। **सोऽयं** एतादृशाविमृश्यकारी। **जरातः** वार्धक्येन। **कुण्ठितसर्वशक्तिनिकरः** कुण्ठितः प्रतिहतः सर्वासां शक्तीनां निकरः समूहो यस्य। वृद्धत्वाल्लुप्तसकलसामर्थ्यः। **जातः**। अतो नास्मादन्यत्किंचिन्नूतनं निर्माणमाशास्यते। **संप्रति** अधुना। **मन्मथः** मदनः। **नवो धाता** नूतनः विधिः। **अस्य जगतः**। **अखण्डं** समग्रं। **राज्यं** सौन्दर्यश्रेष्ठत्वं। **नित्यश्रिये**। सततशोभायै। **उन्मदखञ्जरीटनयनावक्त्राय** उन्मदः उन्मत्तः खञ्जरीटः पक्षिविशेषः तस्य नयने इव नयने यस्या नायिकायाः, तस्याः वक्त्राय मुखाय। **दाता** दास्यति। 'अयं चन्द्रः सर्वश्रेष्ठसौन्दर्यः' इति मत्वा, विमर्शं विनैव यो ब्रह्मा, हे चन्द्र, त्वां राजानमकार्षीत्, सोऽस्मद्भाग्यवशाद्वृद्धावस्थां प्राप्तः सन् प्रतिहतसकलसामर्थ्यो जातः। अन्यथा पुनरप्यसमीक्ष्यैवान्यत्किंचिद्विरचयेत्। अधुना नवो धाता मदनः संततशोभायुक्तायास्मै नायिकावदनायाखिलभुवनचक्रवर्तित्वं दास्यति। चन्द्रो वृद्धिक्षययुक्तो रात्रावेव च रमणीयः, कान्तावदनं तु सर्वदैव रमणीयमिति **व्यतिरेकालङ्कारो** ध्वन्यते। शार्दूलविक्रीडितं वृत्तम्॥ ६२॥

आविर्भूता यदवधि मधुस्यन्दिनी नन्दसूनोः
कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा[1]।

श्वासो दीर्घस्तदवधि मुखे पाण्डिमा गण्डमूले
शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत् ॥ ६३ ॥

१. बा०–°नयनाकर्षणी कर्मणि ज्ञा ।

आविर्भूतेति । यदवधि यद्दिनादारभ्य । नंदसूनोः भगवतः श्रीकृष्णस्य । मधुस्यंदिनी माधुर्यस्राविणी, अत्यन्तमनोहारिणीति यावत् । निखिलनयनाकर्षणे निखिलानां, अखिलानां जगतामिति भावः । नयनाकर्षणे दृष्टिविलोभने । कार्मणज्ञा कार्मणं मन्त्रतन्त्रादि, तज्ज्ञा । वशीकरणादिमन्त्रज्ञेति यावत् । काचित् अनिर्वचनीया । कान्तिः शोभा । आविर्भूता प्रकटीभूता । तदवधि तद्दिनादारभ्य । कुलमृगदृशां कुलस्त्रीणां, तासां चित्ताकर्षणस्य दुष्करत्वात् मुखे दीर्घः श्वासः, दुःखस्यासह्यत्वात् । गण्डमूले कपोले च । पाण्डिमा पाण्डुत्वं, विवर्णत्वमिति यावत् । चेतसि हृदये । शून्या यथोक्तप्रयोजनरहिता । वृत्तिः व्यापारः । प्रादुरासीत् बभूव । भगवतोऽनिर्वचनीया शोभा वशीकरणादिमन्त्रवेत्त्रा तान्त्रिकेण तुल्यं निखिलजगतां दृष्टिविलोभने तदाकर्षणे च समर्था । यदारभ्य सा कुलस्त्रीणां दृष्टिपथमायाता तदारभ्यैव ता दीर्घं निश्वसन्ति विवर्णमुख्यश्च तत्तदुचितव्यापारशून्यास्तिष्ठन्तीति भावार्थः । विप्रलम्भशृङ्गारोऽत्र व्यङ्ग्यः । उदाहृतं च पद्यमेतद्रसगङ्गाधरे ( पृ० २४ ) । मन्दाक्रान्ता वृत्तम् ॥ ६३ ॥

प्रसङ्गे गोपानां गुरुषु[1] महिमानं[2] यदुपते—
रुपाकर्ण्य स्विद्यत्पुलकितकपोला कुलवधूः ।
विषज्वालाजालं झटिति[3] वमतः पन्नगपतेः
फणायां साश्चर्यं कथयतितरां ताण्डवविधिम् ॥ ६४ ॥

१. नि०–यदुषु । २. नि०–बहुमानं । ३. र०–झगिति ।

प्रसङ्ग इति । प्रसङ्ग कालियाख्यसर्पदमनस्य कथावसरे । गोपानां गुरुषु वृद्धगोपानां समीपे । यदुपतेः श्रीकृष्णस्य । महिमानं शौर्यमहत्त्वं । उपाकर्ण्य श्रुत्वा । स्विद्यत्पुलकितकपोला स्विद्यंतौ स्वेदयुक्तौ पुलकितौ च कपोलौ यस्याः सा । कुलवधूः अभिजातकुलाङ्गना गोपवधूः । झटिति सपदि । विषज्वालाजालं विषस्य ज्वालाः अर्चींषि तासां जालं समूहं । वमतः उद्गिरतः । पन्नगपतेः सर्पराजस्य कालियस्य । फणायां । ताण्डव-

विधिं नृत्यप्रकारं, यदुपतेरिति भावः। साश्चर्यं विस्मयेन सह। कथयतितराम्। काचिद्गोपवधूः वृद्धसमीपे स्थिता श्रीकृष्णस्य कालियमर्दनावसरे वर्ण्यमानं माहात्म्यमुपश्रुत्य संजाताभिलाषाभूत्; प्रियतमगुणाकर्णनेन स्वेद-पुलकरूपयोः सात्त्विकभावयोरुदयश्च तस्याः शरीरेऽभूत्; मा नाम च तदवस्था-दर्शनेन तस्याः श्रीकृष्णे गूढप्रेमाविर्भावः स्यादिति तद्गोपनाय सा 'आश्चर्यं, आश्चर्यं, कथं नाम तादृशतीक्ष्णविषमुद्गिरतः कालियसर्पस्य फणायां सहेलं नृत्यमिवाकरोत् कृष्णः' इत्याश्चर्यं प्रकटयतीति भावः। पद्यमिदमवहित्था-ख्यस्य व्यभिचारिभावस्य लक्षण उदाहृतं रसगङ्गाधरे (पृ. ८९)। तल्लक्षणं च तत्रैव—'व्रीडादिभिर्निमित्तैर्हर्षाद्यनुभावानां गोपनाय जनितो भावविशेषोऽवहित्थम्' इति। शिखरिणीवृत्तम् ॥ ६४ ॥

केशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना—
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः[1] ॥६५॥

१. नि०—सर्वदा।

केशोर इति। तन्व्याः कृशाङ्ग्याः। केशोरे वयसि बाल्यावस्थायां। "'कैशोरमापञ्चदशं' इत्यभियुक्तोक्तेर्दशवर्षोत्तरपञ्चदशवर्षपरिसमाप्तिपर्यन्त-मित्यर्थः" इत्यच्युतरायः। क्रमेण। तनुतां कृशतां, ह्रासमिति यावत्। आयाति आगच्छति सति। तथा। अखिलेश्वरे सर्वस्वामिनि, अनुलंघनी-याज्ञ इत्यर्थः। रतिपतौ कामदेवे। तनौ शरीरे। आगामिनि आगमिष्यति सति। अस्य मदनस्य। आज्ञया। तत्कालं तत्क्षणं। अस्याः तन्वङ्ग्याः आस्ये मुखे। पूर्णशशाङ्कता पूर्णचन्द्रत्वं। नयनयोः अंभोरुहां कमलानां। तादात्म्यं अभेदः। किं च अपि च। साचिस्मिते ईषद्धसिते। अमृतस्य तात्त्विकः यथार्थः। भेदविगमः भेदराहित्यं, तादात्म्यमित्यर्थः। आसीत् प्रादुरभवत्। यथैव बाल्यावस्थातिक्रमोऽभूत् तथैव तस्याः कृशाङ्ग्या वदनं पूर्णचन्द्रसदृशं, नेत्रे कमलतुल्ये, हसितं चामृतसममभूदिति भावः। अत्र मुखनेत्रहसितानामुपमेयानां चन्द्रकमलामृतोपमानैरभेदसंदर्शनाद्रूपकमल-

ङ्कारः। उदाहृतं चैतत्पद्यं रसगङ्गाधरे (पृ. २४२) रूपकालङ्कारप्रसङ्गे। शार्दूलविक्रीडितं छन्दः ॥ ६५ ॥

शयिता शैवलशयने सुषमाशेषा नवेन्दुलेखेव।
प्रियमागतमपि सविधे सत्कुरुते मधुरवीक्षणैरेव[1] ॥ ६६ ॥

१. नि०-°वीक्षणेनैव।

शयितेति ॥ विरहिण्यवस्थावर्णनम्। शैवलशयने शैवलं जलनीली। तस्य शयने शय्यायाम्। विरहाग्निशान्त्यर्थं शीतलैव शय्या युक्ता। शयिता संविष्टा। अत एव–नवेन्दुलेखा इव नवश्चासाविन्दुः प्रतिपच्चन्द्रः। तस्य लेखा कला। प्रतिपदि चन्द्रस्यैकैव कला भवति। यथा स क्षीणो दृश्यते, तथा नायिकापि प्रियविरहात् कृशा दृश्यते। अत एव–सुषमाशेषा सुषमा परमाशोभा। सा एव शेषो यस्याः सा। लावण्यमात्रशेषा। एतेन नितरां कृशेति गम्यते। सविधे निकटे। आगतं उपस्थितम्। अपि प्रियं नायकम्। मधुरवीक्षणैः प्रीतियुक्तैरवलोकनैः। एव। न तु प्रत्युत्थानादिभिः। सत्कुरुते अभिनन्दयति। काचिन्नायिका प्रियविरहाद्धेतोरत्यन्तं कृशा सती शैवलशय्यामधिशेते। सा च क्षीणबला नितरां शैथिल्यमापन्ना च तथा दुःखविशेषमनुभवति यथा विरहान्तकरं नायकं समीपागतमपि मधुरावलोकनैरेवाभिनन्दयति, न प्रत्युत्थानालिङ्गनादिभिरिति भावः। पद्यमिदं रसगङ्गाधरे (पृ० ८०) ग्लान्याख्यस्य व्यभिचारिभावस्योदाहरणे पठ्यते। ग्लानिलक्षणं च तत्रैव—"अधिव्याधिजन्यबलहानिप्रभवो वैवर्ण्यशिथिलाङ्गत्वदृग्भ्रमणादिहेतुर्दुःखविशेषो ग्लानिः" इति। उपमालङ्कारः। गीतिर्वृत्तम् ॥ ६६ ॥

विरहेण विकलहृदया विलपन्ती दयित दयितेति।
आगतमपि तं[1] सविधे परिचयहीनेव वीक्षते बाला ॥ ६७ ॥

१. नि०-सा।

विरहेणेति ॥ विरहिण्यवस्थावर्णनम्। विरहेण प्रियस्येति शेषः। विकलहृदया विकलं विह्वलं हृदयं चित्तं यस्याः सा। हे दयित प्रिय। हे दयित प्रिय। इति विलपन्ती व्याक्रोशन्ती। बाला ऊनषोडशवर्षा मुग्धेत्यर्थः। तं दयितम्। सविधे निकटे। आगतमपि प्राप्तमपि। परिचयहीना इव तमजानन्तीव। वीक्षते पश्यति। मुग्धावस्था काचिन्नायिका वियोगे

प्रियनामोच्चारणं कुर्वाणैतादृशं दशान्तरं प्राप्ता यन्निकटसमागतमपि प्रियं न प्रत्यभिजानातीति भावः। पद्यमिदं रसगङ्गाधरे (पृ० ७९) मोहाख्यस्य व्यभिचारिभावस्योदाहरणे पठ्यते। तल्लक्षणं च तत्रैव—"भयवियोगादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः" इति। आर्यावृत्तम्॥ ६७॥

अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी।
तनुरप्रतिमा च[1] सुभ्रुवो न विधेरस्य कृतिं विवक्षति॥ ६८॥

१. वा०–तनुरप्रतिमात्र।

अधरेति॥ सुभ्रुवः शोभने भ्रुवौ यस्याः सा सुभ्रूः। तस्याः। अधरद्युतिः अधरस्य द्युतिः कान्तिः। अस्तपल्लवा अस्ताः निरस्ताः दूरीकृताः पल्लवाः किसलयानि यया सा। अधरः पल्लवानां रक्ततामतिशेत इत्यर्थः। मुखशोभा आस्यकान्तिः। शशिकान्तिलङ्घिनी शशिनः चन्द्रस्य कान्तिं लङ्घते अतिक्रामतीत्यर्थः। चन्द्रादप्यधिकमनोहारिणीति भावः। तनुः शरीरं चास्याः। अप्रतिमा नास्ति प्रतिमा सादृश्यं यस्याः सा। एवंभूता नायिकेयम्। अस्य प्रसिद्धस्य। विधेः ब्रह्मणः। कृतिं सृष्टिं। न विवक्षति वक्तुमिच्छति। अस्या नायिकाया अधरः किसलयेभ्योऽपि रक्ततरः, मुखं चन्द्रादपि सुन्दरतरम्, शरीरं चानुपमसौन्दर्यम्। एवं नेयं जगत्स्रष्टुर्ब्रह्मणः सृष्टिरपि त्वन्यस्य कस्यचिदिति भावः। रसगङ्गाधरे (पृ० ८२) तूत्तरार्धं 'अकृतप्रतिमा तनुः कृता विधिना कस्य कृते मृगीदृशः' इति पठित्वा पद्यमिदं चिन्ताख्यस्य व्यभिचारिभावस्योदाहरणे दीयते। अतिशयोक्तिरलङ्कारः। आर्यावृत्तम्॥ ६८॥

व्यत्यस्तं लपति क्षणं क्षणमहो मौनं समालम्बते
सर्वस्मिन्विदधाति किं च विषये दृष्टिं निरालम्बनाम्।
श्वासं दीर्घमुरीकरोति न मनागङ्गेषु धत्ते धृतिं
वैदेहीविरहव्यथाविकलितो हा हन्त लङ्केश्वरः॥ ६९॥

व्यत्यस्तमिति॥ हा हन्त इति खेदातिशयसूचकं पदद्वयम्। वैदेहीविरहव्यथाविकलितः सीताविरहाकुलः। लङ्केश्वरः रावणः। क्षणं व्यत्यस्तं विपरीतं, असंबद्धं वा। लपति भाषते। अहो इत्याश्चर्ये। क्षणं मौनं समालम्बते मूको भवति। किं च। सर्वस्मिन् विषये पदार्थजाते।

निरालम्बनां शून्यां दृष्टिं विदधाति करोति । दीर्घं श्वासं उरीकरोति अङ्गीकरोति मुञ्चतीत्यर्थः । अङ्गेषु हस्तपादादिषु गात्रेषु । धृतिं धैर्यं, अनवसादमिति यावत् । मनाक् ईषदपि । न धत्ते न धारयति । स्पष्टो भावः । पद्यमिदं रसगङ्गाधरे ( पृ. १०१ ) विप्रलम्भाभासोदाहरणे पठ्यते । उक्तं च तत्र "अत्र सीतालम्बनेयं लङ्केशगता विप्रलम्भरतिरनुभयनिष्ठतया जगद्गुरुपत्नीविषयकतया चाभासतां गता, व्यस्यस्तं लपतीत्यादिभिरुक्तिभिर्व्यज्यमानैरुन्मादश्रमसोहचिन्ताव्याधिभिस्तथैवाभासतां गतैः प्राधान्येन परिपोष्यमाणा ध्वनिव्यपदेशहेतुः " इति । अत्र लङ्केश्वरस्यैकस्य कर्तुर्लपतीत्याद्याभिरनेकाभिः क्रियाभिरभिसम्बद्धत्वाद्दीपकाख्योऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥६९॥

उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन ॥ ७० ॥

उदितमिति ॥ चन्द्रोदयसमयवर्णनम् । इन्दोः चन्द्रस्य । मण्डलं बिम्बम् । उदितम् । सद्यः चन्द्रोदयसमकालमेव । वियोगिवर्गेण वियोगिनां विरहिणां वर्गेण समूहेन । रुदितं रोदनं कृतम् । चन्द्रोदये विरहस्यासह्यत्वात् । सकलललनाचूडामणिशासनेन सकलानां सर्वासां ललनानां चूडामणिः शिरोभूषणं तथाभूतं शासनं आज्ञा यस्य तेन । मदनेन कामेन । मुदितं प्रहृष्टम् । रुदितं मुदितमित्युभयत्रापि भावे क्तः । चन्द्रोदये जातमात्र एव विरहिणो रुदिताः, नारीष्वप्रतिहतशासनः कामदेवश्च प्रहृष्ट इति भावः । अत्र 'उदितं' 'रुदितं' 'मुदितं' इति तिसृणां युगपदेवेन्दुवियोगिमदनैर्भिन्नैर्धर्मिभिरन्वयात् समुच्चयाख्योऽलङ्कारः । उदाहृतं चैतत्पद्यमुत्तरार्धे सकलललनास्थाने सकलयुवजनेति पाठभेदेन समुच्चयालङ्कारप्रसङ्गे ( रसगङ्गाधरे, पृ. ४९० ) । तल्लक्षणं च तत्रैव–'युगपत्पदार्थानामन्वयः समुच्चय' इति । अनेन च समुच्चयेन 'कार्यकारणपौर्वापर्यविपर्ययात्मिकातिशयोक्तिः' ( रसगङ्गाधर, पृ. १३६ ) ध्वन्यते । अत्र चन्द्रोदयः कारणं वियोगिरोदनमदनमोदने च कार्ये । किन्तूत्तरकालभाविनोरप्येतयोश्चन्द्रोदयसमकालभावित्ववर्णनम् । अत एव कार्यकारणपौर्वापर्यविपर्ययः । गीतिवृत्तम् ॥ ७० ॥

इदमप्रातिमं पश्य सरः सरसिजैर्वृतम् ।
सखे मा जल्प नारीणां नयनानि दहन्ति माम् ॥ ७१ ॥

**इदमिति** ॥ सरस्तटगतयोर्मित्रयोरालापोऽयम् । हे सखे । **इदं** पुरोवर्ति । **सरसिजैः** कमलैः । **वृतं** चितम् । **अप्रतिमं** नास्ति प्रतिमा उपमानं यस्य तत् । **सरः पश्य** । द्वितीयः सखा ब्रूते—हे सखे, इदमप्रतिममित्यादि **मा जल्प** मा भण । यतः **नारीणां** स्त्रीणाम् । **नयनानि मां दहन्ति** । एकेन मित्रेण प्रफुल्लकमलं सरो दर्शितो द्वितीयः सुहृत् कमलैस्तत्सदृशनारीनेत्रस्मृतियुक्तो भूत्वा प्रथमं वारयतीति भावः । पद्यमिदमुदाहृतं रसगङ्गाधरे स्मरणालङ्कार-ध्वनौ ( पृ. २२२ ) । अनुष्टुप्वृत्तम् ॥ ७१ ॥

**मुञ्चसि नाद्यापि रुषं भामिनि मुदिरालिरुदियाय ।**
**इति सुदृशः प्रियवचनैरपायि नयनाब्जकोणशोणरुचिः ॥७२॥**

**मुञ्चसीति** ॥ रुष्टां नायिकां प्रति नायकस्योक्तिः । हे **भामिनि** मानशीले । इयं **मुदिरालिः** मुदिराणां मेघाणां आलिः पङ्क्तिः । **उदियाय** उदयं प्राप्ता । त्वं **अद्यापि** अधुनापि । **रुषं** क्रोधं । **न मुञ्चसि** । मेघोदयस्य कामोद्दीपकत्वा-न्नाधुना कोपस्त्वया कार्य इति भावः । **इति** इत्थम् । **प्रियवचनैः** कान्तालापैः । **सुदृशः** शोभननेत्रायाः नायिकायाः । **नयनाब्जकोणशोणरुचिः** नयने अब्जे कमले इव तयोः कोणयोः प्रान्तभागयोः शोणा रक्ता रुचिः कान्तिः । **अपायि** पीता । सत्यपि मेघोदये त्वं कुपितासीति प्रियवचनमाकर्णयन्त्या नायिकाया रोषो निःशेषतां गत इति भावः । पद्यमिदं भावशान्त्युदाहरणे रसगङ्गाधरे ( पृ० १०२ ) पठ्यते । ‘ भावस्य प्रागुक्तरूपस्य शान्तिर्नाशः ’ इति लक्षणानन्तरं ग्रन्थकृत्तत्रैवाह “ इह तादृशप्रियवचनश्रवणं विभावः । नयनकोणगतशोणरुचेर्नाशः, तदभिव्यक्तः प्रसादो वानुभावः । उत्पत्तिकाला-वच्छिन्नो रोषनाशो व्यङ्ग्यः ” इति ॥ उद्गीतिवृत्तम् ॥ ७२ ॥

**आलोक्य सुन्दरि मुखं तव मन्दहासं**
**नन्दत्यमन्दमरविन्दधिया मिलिन्दाः ।**
**किं चा[1]सिताक्षि मृगलाञ्छनसम्भ्रमेण**
**चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥ ७३ ॥**

१. वा०–कि वासिताक्षि । र०–किं चालि पूर्णमृग० ।

**आलोक्येति** ॥ हे **सुन्दरि** । **मिलिन्दाः** भ्रमराः । **तव मन्दहासं** मृदुहास्ययुक्तम् । **मुखं आलोक्य** । **अरविन्दधिया** कमलबुद्ध्या । **अमन्दं**

 

अत्यन्तम् । नन्दन्ति हृष्यन्ति । किं च । हे असिताक्षि असिते कृष्णे अक्षिणी यस्याः सा, तत्सम्बुद्धौ । मृगलाञ्छनसम्भ्रमेण चन्द्रभ्रान्त्या । चकोराः । चञ्चूपुटं चिरं बहुकालपर्यन्तम् । चटुलयन्ति चपलयन्ति । हे भामिनि मृदुहास्ययुक्तं तवाननं दृष्ट्वा भ्रमराणां कमलभ्रमो जायते चकोराणां च चन्द्रभ्रम इति भावः । अत्रैकस्यैव मुखस्य मिलिन्दैः कमलमिति चकोरैश्च मृगलाञ्छनोऽयमिति ग्रहणादुल्लेखालङ्कारः । स च भ्रान्तिमता मिश्रितः । उदाहृतं चैतत्पद्यं रसगङ्गाधरे ( पृ० २७२ ) उल्लेखालङ्कारप्रसङ्गे । तल्लक्षणं च तत्रैव—" एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः " इति ॥ वसन्ततिलकावृत्तम् ॥ ७३ ॥

स्मितं नैतत्किन्तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते को वा[1] कुसुम[2]मिदमुद्यत्परिमलम् ।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या[3] न रमणी ॥ ७४ ॥

१. र०—मूढः । २. र० कुसुद° । ३. बा० °कुलरम्या ।

स्मितमिति ॥ एतत् स्मितं मृदुहसितम् । न । किन्तु । प्रकृतिरमणीयं प्रकृत्या स्वभावेन रमणीयं सुन्दरम् । विकसितं विकासः । कः वा इदं मुखं इति ब्रूते कथयति । इदं उद्यत्परिमलं उद्यन् उद्गच्छन् परिमलः आमोदः यस्मात् । तादृशं कुसुमं पुष्पम् । इदं स्तनद्वन्द्वं विद्यत इति यदि कश्चिद्ब्रवीति तत् मिथ्या अलीकम् । एतत् कनकनिभं सुवर्णसदृशम् । फलयुगं फलद्वन्द्वम् । सा इयं रमणी नारी न किन्तु भ्रमरकुलनम्या भ्रमरकुलैः नमयितुं शक्या । लता । स्पष्टो भावः । अत्र सर्वेषामुपमेयभूतानां रमण्यवयवानां निषेधात्, तदुपमानानां च स्थापनादपह्नुत्यलङ्कारः । पद्यमिदं रसगङ्गाधरे ( पृ० २७८ ) अपह्नुत्युदाहरणे पठ्यते । सावयवा चेयमपह्नुतिः । तल्लक्षणं च तत्रैव—" उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः " इति शिखरिणीवृत्तम् ॥ ७४ ॥

संग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वर—
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।

अङ्गारप्रखरैः करैः कवलयन्नेतन्महीमण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥ ७५ ॥

संग्रामेति ॥ उदयन्तं चन्द्रं दृष्ट्वा कस्यचिद्विरहिण उक्तिरियम् । संग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वरव्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा संग्रामाङ्गणे रणक्षेत्रे संमुखं आहताः, अपलायनतया पृष्ठमदर्शयन्तो नाशिताः, ये कियन्तः कतिपये, न तु बहवः, विश्वंभराधीश्वराः विश्वंभरायाः पृथिव्याः अधीश्वराः स्वामिनः राजानः, तैः व्यादीर्णीकृतः विदारितः यः मध्यभागः, तस्य विवरेण छिद्रेण, उन्मीलन् प्रकाशमानः,यः नभसः आकाशस्य, नीलिमा कृष्णो वर्णः, सोऽस्यास्तीति । रणे अभिमुखं हताः क्षत्रियाः सूर्यमण्डलं भित्त्वा दिवं गच्छन्ति । उक्तं च महाभारते–"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखं हतः" इति । तस्मात्सूर्यमध्यगतछिद्रात्परिदृश्यमानं कार्ष्ण्यमेतत्, न तु चन्द्रगतः कलङ्क इति भावः । यतः–अङ्गारप्रखरैः अङ्गारवत्तीक्ष्णैः । करैः किरणैः । एतत् महीमण्डलं पृथिवीमण्डलम् । कवलयन् भक्षयन् । अयं मार्तण्डः सूर्यः । उदेति । लोके अस्मिन् जगति । केन पशुना पशुवन्मूर्खेण । शशाङ्कितः शशचिह्नवान् चन्द्र इति कल्पितः । अङ्गारवत्तीक्ष्णैः किरणैर्जगत्सन्तापयन् सूर्योऽयं न चन्द्र इति भ्रान्तो विरही चन्द्रं सूर्यं मन्यते । पद्यमेतद्भ्रान्तिमदलङ्कारोदाहरणे पठ्यते रसगङ्गाधरे (पृ० २७९–८०) । उक्तं च तत्र—"अत्र विरहिजनवाक्ये नायं शशाङ्कः, अपि तु सच्छिद्रो मार्तण्ड इति तु च्छायामात्रमपह्नुतेः । नत्वपह्नुत्यलङ्कारः । तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात् । किं तु भ्रान्त्यलङ्कार एव" इति । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथामृतं च[1] ।
नो चेत्कथं निपतनादनयोस्तदेव
मोहं मुदं च नितरां दधते युवानः ॥ ७६ ॥

१. पा०—स्फुटं च गरमेतदथामृतं वा ।

श्याममिति ॥ सुदृशः शोभननेत्रायाः अस्याः नायिकायाः । दृशोः नयनयोः । स्वरूपं स्वाभाविकः गुणः । श्यामं कृष्णम् । सितं श्वेतं च । न न

भवति । किं तु । एतत् स्वरूपम् । स्फुटं निश्चितम् । गरलं विषम् । अथ च अमृतम् । नो चेत् अन्यथा अनयोः नेत्रयोः । निपतनात् गात्रेषु पतनात् । तदैव तस्मिन्नेव क्षणे, निपतनसमकालमेव । युवानः नितरां अतिशयेन । मोहं मूर्च्छां । मुदं हर्षम् । च । कथं दधते धारयन्ति, प्राप्नुवन्तीत्यर्थः । अस्या मृगलोचनाया नेत्रयोः श्यामत्वं श्वेतत्वं वा न स्वरूपम्, किं तु विषममृतं चेति मन्तव्यम् । यतो नयननिपातसमकालमेव यूनां मोहो हर्षश्च जायेते इति भावः । अपह्नुतिरलङ्कारः । पद्यमेतद्रसगङ्गाधरे (पृ० २७८) अपह्नुत्यलङ्कारोदाहरणे पठ्यते । वसन्ततिलकावृत्तम् ॥ ७६ ॥

अलिर्मृगो वा नेत्रं वा यत्र किंचिद्विभासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं[1] मृगीदृशः ॥ ७७ ॥

१. बा०–चेदं ।

अलिरिति ॥ यत्र यस्मिन् मुखे । अलिः भ्रमरः वा । मृगः हरिणः वा । नेत्रं वा । किंचित् किमप्यनिर्वचनीयं वस्तु । विभासते शोभते । तत् इदं पुरोदृश्यमानम् । क्रमात्—अरविन्दं कमलं वा । मृगाङ्कः चन्द्रः वा । मृगीदृशः हरिणाक्ष्याः । मुखं वा । किमिदं हरिणीदृशो मुखं यत्र नेत्रं विभासते, उत कमलमेतद्यत्र भ्रमरो विलसति, अथवा चन्द्रोऽयं यत्र मृगः शोभत इति भावः । अत्र मुखरूपे वस्तुनि कमलचन्द्रयोराहार्यः संशयः, कवेर्वस्तुस्वरूपज्ञत्वात् । पद्यमिदं रसगङ्गाधरे (पृ० २६५) ससन्देहालङ्कारोदाहरणे पठ्यते । तल्लक्षणं च तत्रैव—"सादृश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनी धी रमणीया ससन्देहालङ्कृतिः" इति ॥ अनुष्टुप् छन्दः ॥ ७७ ॥

दयिते रदनत्विषां मिषा
दयि तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो
मकरन्दस्पृहयालवोऽलयः[1] ॥ ७८ ॥

१. बा०–अपि चालकवेषधारिणी मकरन्दस्पृहयालिचोलयः ।

दयिते इति ॥ नायिकां प्रति नायकोक्तिरियम् । अयि दयिते हे प्रिये । ते तव । रदनत्विषां दन्तकान्तीनाम् । मिषात् व्याजात् । अमी पुरोदृश्य-

मानाः । **केसराः** । किञ्जल्काः । **विलसन्ति** विकसन्ति । अपि च । **अलकवेषधारिणः** अलकाः चूर्णकुन्तलाः, तेषां वेषं धारयन्ति, तच्छीलाः । **मकरन्दस्पृहयालवः** मकरन्दः पुष्परसः, मधु इति यावत्, तस्य स्पृहयालवः अभिलाषुकाः । **अलयः** भ्रमराः । विलसन्तीति शेषः । नेमा दन्तकान्तयोऽपितु पद्मकेसराः, न चेमे कुन्तलाः किंतु मधुलुब्धा भ्रमरा इति भावार्थः । **अत्रापह्नुत्यलङ्कारः** । पठ्यते चैतत्पद्यं रसगङ्गाधरे (पृ० १३८,२८२) तदलङ्कारप्रसङ्गे । उक्तं च तत्र—"अत्र 'नैता रदनत्विषः, किं तु किञ्जल्कपरम्पराः । न चैतेऽलकाः, अपि त्वलयः' इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती तावत्प्राकट्येनैव निवेदिते । ताभ्यां च 'न त्वं नारी, किं तु कमलिनी' इति तृतीयापह्नुतिर्व्यञ्जनाव्यापारेण प्राधान्येन निवेद्यते" इति । वैतालीयं वृत्तम् । तल्लक्षणं च—"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरू" इति ॥ ७८ ॥

**अनिशं नयनाभिरामया**
**रमया संमदिनो मुखस्य ते ।**
**निशि निःसरदिन्दिरं कथं**
**तुलयामः कलयापि पङ्कजम् ॥ ७९ ॥**

**अनिशमिति** ॥ नायकस्य नायिकां प्रत्युक्तिः । **अनिशं** सर्वदा । **नयनाभिरामया** नयनोः अभिरामया कमनीयया । **ते** तव । **संमदिनः** हर्षयुक्तस्य । **मुखस्य** । **रमया** शोभया । **निशि** रात्रौ । **निःसरदिन्दिरं** निःसरन्ती अपगच्छन्ती इन्दिरा शोभा यस्य तत् । **पङ्कजं** कमलम् । **कलया** अंशेन । **अपि** । **कथं तुलयामः** उपमिमीमहे । तव मुखस्य शोभा सर्वदास्थायिनी, कमलस्य तु दिवस एव, रात्रौ मुकुलितत्वात् । अतस्ते मुखं रात्रौ निःशोभेन कमलेन कथं तुलयाम इति भावः । अत्रोपमानात्कमलादुपमेयस्य मुखस्य शोभाविशेषोत्थापित उत्कर्षो व्यतिरेकसूचकः । **व्यतिरेकालङ्कारः** । पठ्यते चैतत्पद्यमेतदलङ्कारोदाहरणे रसगङ्गाधरे (पृ० ३४७) । वैतालीयं वृत्तम् ॥ ७९ ॥

अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति ।
विकलयति[1] कुसुमबाणो बाणालीभिर्मम प्राणान् ॥ ८० ॥

१. र०–प्रहरति ।

अङ्गैरिति ॥ नायकोक्तिरियम् । सा नायिका । सुकुमारतरैः अत्यन्तकोमलैः । अङ्गैः । कुसुमानाम् । श्रियं शोभाम् । हरति चोरयति । कुसुमबाणः मदनः । बाणालीभिः शरपङ्क्तिभिः, कुसुमरूपाभिरित्यर्थः । मम प्राणान् विकलयति विह्वलयति । नायिकया स्वकोमलैरङ्गैः कुसुमश्रीश्चोरिता । कुसुमबाणस्तु क्रुद्धः । यया च चौर्यं कृतं तस्यामेव दण्डो युक्तः । किं तु तथा न कृत्वा मम प्राणान् व्याकुलीकुर्वन् मां दण्डयतीति भावः । अत्र यत्रापराधहेतुस्तत्र दण्डकार्यं युक्तम् । किं तु तयोर्वैयधिकरण्यं जातम् । अतोऽसङ्गत्याख्योऽलङ्कारः । उदाहृतं चैतदलङ्कारप्रसङ्गे पद्यमिदं रसगङ्गाधरे ( पृ. ४४० ) । तल्लक्षणं च तत्रैव–" विरुद्धत्वेनापाततो भासमानं हेतुकार्ययोर्वैयधिकरण्यमसङ्गतिः " इति । उपगीतिवृत्तम् ॥ ८० ॥

खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण ।
खिद्यामि हन्त परितस्तद्रूपविलोकनेन विकलोऽहम्[1] ॥ ८१ ॥

१. र०–खिद्यन्ति हन्त परितस्तद्रूपविलोकिनस्तरुणाः ।

खिद्यतीति ॥ नायकोक्तिरियम् । कोमलचरणा सा नायिका । पथि मार्गे । यान्ती गच्छन्ती । नितम्बभारेण खिद्यति श्रममनुभवति । अहं पुनः । हन्त इति खेदे । परितः सर्वतः । तद्रूपविलोकनेन तदाकृतिदर्शनेन । विकलः विह्वलचित्तः सन् । खिद्यामि खेदमनुभवामि । गमनं नितम्बभारश्च नायिकायाः खेदहेतुर्मम पुनः परितस्तद्रूपविलोकनमिति भावः । असङ्गतिरलङ्कारः । पठितं चैतत्पद्यं रसगङ्गाधरे (पृ. ४४१) । गीतिवृत्तम् ॥ ८१ ॥

मथुरागमनोन्मुखे मुरारा–
वसुभारार्तिभृतां व्रजाङ्गनानाम् ।
प्रलयज्वलनायते स्म राका
भवनाकाशमजायताम्बुराशिः ॥ ८२ ॥

**मथुरेति** ॥ **मुरारौ** श्रीकृष्णे । **मथुरागमनोन्मुखे** मथुरां गन्तुं उद्यते सति । **असुभारार्तिभृतां** असवः प्राणाः एव भारः तस्य आर्ति पीडां बिभ्रति धारयन्ति इति तासाम् । प्राणभारपीडामावहन्तीनाम् । **व्रजाङ्गनानां** गोपस्त्रीणाम् । **राका** पूर्णिमा । **प्रलयज्वलनायते स्म** प्रलयस्य ज्वलनं अग्निः इव आचरति स्म । तथा । **भवनाकाशं** भवनस्य गृहस्य आकाशं प्रदेशः । **अम्बुराशिः** समुद्रः । **अजायत** । अश्रुजलपूर्णत्वात् । यदा श्रीकृष्णो मथुरां गन्तुमुद्यतोऽभवत्तदा गोपीनां पूर्णिमापि प्रलयाग्निवद्दाहकर्यभूत, गृहप्रदेशश्च तदश्रुजलैः समुद्रोपमो बभूवेति भावः । उपमालङ्कारः । मालभारिणी-वृत्तम् ॥ ८२ ॥

केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः
सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः ।
जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि
श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममासञ्जितः[1] ॥८३॥

१. र०–°र्ममाधीयत ।

**केलीति** ॥ नायकस्य मित्रं प्रत्युक्तिः । **केलीमन्दिरं** क्रीडाभवनम् । **आगतस्य** प्राप्तस्य । **इङ्गितैः** अङ्गुल्यादीनां चेष्टाभिः । **शनकैः** शनैः । शब्दादिकरणं विना । **आलीः** प्रियासखीः । **अपास्य** दूरीकृत्य । **सुप्तायाः** व्याजनिद्रितायाः । **सरुषः** प्रणयकुपितायाः । **सरोरुहदृशः** कमलनयनायाः । **संवीजनं कुर्वतः** व्यजनादिना वायुसञ्चारणं कुर्वतः । **जानन्त्या** प्रियोऽयं मां वीजयति न तु सख्यः इति जानन्त्या । **अपि** । **अनभिज्ञया** अज्ञया इव । **कपटव्यामीलिताक्ष्या** कपटेन छद्मना व्यामीलिते अक्षिणी यया तया । **सखि** । व्यजनकरणेन **श्रान्ता** खिन्ना । **असि** । **इति अभिधाय** उक्त्वा । **तया** स्वे **वक्षसि** उरःस्थले । **मम पाणिः** हस्तः । **आसञ्जितः** स्थापितः । काचित्कुपिता नायिका रतिमन्दिरे व्याजसुप्तासीत् । तत्र गतो नायको निःशब्दं सखीजनं ततो दूरीकृत्य नायिकां स्वहस्तेन वीजयितुमारेभे । सा च 'प्रियो मां वीजयति, न काचित्सखी' इति जानन्त्यपि कपटनिमीलित-नयनानभिज्ञेव च 'हे सखि श्रान्तासि' इत्युक्त्वा प्रियहस्तं स्ववक्षःस्थले निहितवतीति भावः । पद्यमेतत्प्रहर्षणालङ्कारप्रसङ्गे रसगङ्गाधरे (पृ० ५०४)

 

पठ्यते । तत्रैव—"साक्षात्तदुद्देश्यकयत्नमन्तरेणाभीष्टार्थलाभः प्रहर्षणम्" इति लक्षयित्वालङ्कारं पण्डितराज आह—"अत्र भामिन्या रोपनिवारणाय यत्ने क्रियमाणे रोपनिवारणादप्यधिकतरसुखप्रदः कामुकस्य भामिनीकर्तृकः स्वकरकर्मकस्तत्कुचाधिकरणक आसङ्गः" इति । शार्दूलविक्रीडितं वृत्तम् ॥८३॥

मान्थर्यमाप गमनं सह शैशवेन
रक्तं सहैव मनसाधरबिम्बमासीत् ।
किं चाभवन्मृगकिशोरदृशो नितम्बः
सर्वाधिको गुरुरयं सह मन्मथेन ॥ ८४ ॥

मान्थर्यमिति ॥ मृगकिशोरदृशः मृगकिशोरस्य मृगशावस्य दृशौ इव दृशौ यस्याः तस्याः । गमनं गतिः । शैशवेन बाल्येन । सह । मान्थर्यं मन्दत्वम् । आप प्राप्तम् । शैशवमपगतं गतिश्च मन्दा जातेत्यर्थः । अधरबिम्बं अधरो बिम्ब इव इति । मनसा सह । रक्तं ताम्रवर्णम् । मनःपक्षे अनुरागयुक्तम् । आसीत् । किं च । अयं नितम्बः । मन्मथेन कामेन । सह । सर्वाधिकः । गुरुः विस्तृतः । कामपक्षे महान् । अभवत् । स्पष्टो भावः । सहोक्तिरलङ्कारः । पठ्यते चैतदुदाहरणप्रसङ्गे पद्यमिदं रसगङ्गाधरे ( पृ० ३६३ ) । तल्लक्षणं च तत्रैव-"गुणप्रधानभावावच्छिन्नसहार्थसम्बन्धः सहोक्तिः" इति । वसन्ततिलका वृत्तम् ॥ ८४ ॥

श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः ।
तस्याः सुभग[1] कथेयं तिष्ठतु तावत्कथान्तरं कथय ॥८५॥

१. पा०—सुरतकथेयं ।

**श्वास इति** ॥ नायकं प्रति विरहपीडिताया नायिकाया अवस्थां निवेदयति कश्चित् । हे **सुभग** सुन्दर । **तस्याः** नायिकायाः । **श्वासः** श्वसितम् । **अनुमानवेद्यः** अनुमानेन-एतन्नासिकाग्रसंस्थापितं वस्त्रं कम्पते, अतो ध्रुवमद्यापि श्वसितीयमेतादृशेनानुमानेन, न तु प्रत्यक्षेण-वेद्यः ज्ञेयः । **अङ्गानि** गात्राणि । **शीतानि** । **दृष्टिः** नेत्रयुगलम् । **निश्चला** इतस्ततो भ्रमणरहिते नेत्रे संजाते इत्यर्थः । **इयं** एतादृशी : तस्याः **कथा** वार्ता । **तिष्ठतु तावत्** अत्रैव विश्राम्यतु । त्वं पुनः । **कथान्तरं** अन्यत् किंचित् । **कथय** ब्रूहि । तस्या नायिकायाः श्वासोऽतिसूक्ष्मो जातः, अङ्गानि शीतत्वं प्राप्तानि, दृष्टिः

स्थिरा भूता–एवं त्वद्विरहे सा जाता–अथवा तिष्ठत्वेतत्सर्वम् । त्वं पुनरन्य-स्त्रिकंचिद्ब्रूहीति नायकं प्रत्युक्तिः कस्यचिदिति भावः । अत्र नायिकाविषयिण्याः कथाया अंशमात्रं कथयित्वा शिष्टकथाभागे निषेधस्तद्दुःसहत्वं द्योतयति । आक्षेपालङ्कारः । पठ्यते च पद्यमिदं तदुदाहरणप्रसङ्गे रसगङ्गाधरे (पृ० ४२२) गीतिवृत्तम् ॥ ८५ ॥

पाणौ कृतः पाणिरिलासुतायाः
सस्वेदकम्पो रघुनन्दनेन ।
हिमाम्बुमन्दानिल[1]विह्वलस्य
प्रभातपद्मस्य बभार शोभाम् ॥ ८६ ॥

१. नि०, वा०–°गङ्गानिल° । प०, वे० शे०–°झंझानिल° ।

पाणाविति ॥ रामविवाहवर्णनमिदम् । रघुनन्दनेन रामेण । इलासुतायाः इला पृथिवी तस्याः सुतायाः सीताया इति यावत् । पाणिः हस्तः । स्वकीये पाणौ हस्ते । कृतः गृहीतः । सस्वेदकम्पः स्वेदश्च कम्पश्च ताभ्यां सहितः सन् । सात्त्विकभावोद्रेकात् । हिमाम्बुमन्दानिलविह्वलस्य हिमाम्बुना हिमकणैः विह्वलस्य आकीर्णस्य, मन्दानिलेन मन्दवायुना च विह्वलस्य कम्पितस्य । प्रभातपद्मस्य प्रातःकाले ईषद्विकसितस्य कमलस्य । शोभां बभार धारितवान् । विवाहसमये रामेण स्वहस्ते गृहीतः सीताहस्तः सात्त्विकभावोदयात्स्वेदकम्पाभ्यां युक्तो बभूव । अतः प्रभात ईषद्विकसितस्य हिमकणैर्व्याप्तस्य तथा मन्दवायुना कम्पितस्य च कमलस्य शोभां दधावसाविति भावः । निदर्शनालङ्कारः । पद्यमेतद्रसगङ्गाधर उदाहृत्य ( पृ. ३४१ ) पण्डितराजेनोच्यते–" अत्र हिमाम्बुजनितविह्वलता हिमकणकीर्णतारूपा वा । तज्जनितविह्वलता च विधुतिरूपा । एताभ्यां च सस्वेदतासोत्कम्पितत्वयोः प्रतिबिम्बनमिति पूर्वस्मादुदाहरणाद्भेदः । प्रभातपदसांनिध्याच्च पद्मस्येषद्विकाससुद्रणयोः प्रत्ययात्पाणावपि तत्सिद्धिः । अस्यां चोपमानोपमेयगतधर्मयोरार्थाभेदप्रतिपत्तिः । अतः पदार्थनिदर्शनोच्यते " इति । निदर्शनालक्षणं च तत्रैव " उपात्तयोरर्थयोरार्थाभेद औपम्यपर्यवसायी निदर्शना " इति उपजातिवृत्तम् ॥ ८६ ॥

अरुणमपि विद्रुमद्रुं मृदुलतरं चापि किसलयं बाले।
अधरीकरोति नितरां तवाधरो मधुरिमातिशयात्॥ ८७॥

अरुणमिति॥ नायकस्य नायिकां प्रति चाटूक्तिः। हे बाले। तव अधरः। मधुरिमातिशयात् मधुरिम्णः माधुर्यस्य अतिशयात् आधिक्यात्। अरुणं रक्तवर्णं अपि। विद्रुमद्रुं प्रवालवृक्षम्। मृदुलतरं अतिकोमलम्। किसलयं पल्लवम्। च अपि। नितरां अत्यन्तम् अधरीकरोति तुच्छीकरोति। तवाधरो रक्तवर्णात्प्रवालवृक्षाद्रक्ततरः, किसलयाच्च कोमलतर इति भावः। व्यतिरेकालङ्कारः। उदाहृतं चैतत्पद्यमेतदलङ्कारप्रसङ्गे रसगङ्गाधरे (पृ० ३५७)। तल्लक्षणं च तत्रैव—"उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः" इति। आर्यावृत्तम्॥ ८७॥

नयने[1] वहतां नु खञ्जनानामिह नानाविधमङ्ग[2]भङ्ग[3]भाग्यम्।
मुखमेतु तुलां कथं[4] सुशोभं सुदृशो भङ्गुरसम्पदाम्बुजेन॥ ८८॥

१. र०, वै०, शे०—नयनानि। २. वै०, शे०—नानाविधमङ्ग भङ्गभाग्यम्। ३. बा०—°भङ्गि। ४. र०, वै०, शे०—सदृशं कथमाननं।

नयने इति॥ सुदृशः। मृगाक्ष्याः। नयने। इह जगति। खञ्जनानां खञ्जरीटानां पक्षिणाम्। नानाविधं अनेकप्रकारम्। अङ्गभङ्गभाग्यं अङ्गानां अवयवानां भङ्गाः तरङ्गाः तेषां भाग्यं सौन्दर्यम्। वहतां धारयताम्। परन्तु सुशोभं मुखं। भङ्गुरसम्पदा भङ्गुरा क्षणस्थायिनी सम्पत् शोभा यस्य तेन। अम्बुजेन कमलेन। कथं। तुलां उपमाम्। एतु गच्छतु। नायिकाया नयने यथाकथंचित् खञ्जरीटानामवयवस्तङ्गसादृश्यं धारयतां, किन्तु समीचीनशोभमस्या मुखमनियतशोभेन कमलेन कथं सदृशं स्यात्—कमलादधिकसुन्दरं मुखमिति भावः। व्यतिरेकालङ्कारः। पद्यमिदं रसगङ्गाधरे (पृ० ३४८) व्यतिरेकोदाहरणे पठ्यते। मालभारिणीवृत्तम्॥ ८८॥

सुदृशो[1] जितरत्नजालया सुरतान्तश्रमबिन्दुमालया।
अलिकेन[2] च हेमकान्तिना विदधे कापि[3] रुचिः परस्परम्॥८९॥

१. बा०—सुदृशोज्झितरत्नमालया। २. बा०—अलकेन। ३. बा०—काति।

सुदृश इति॥ सुरतश्रान्तायाः नायिकाया वर्णनम्। सुदृशः चारुनेत्रायाः। जितरत्नजालया जितं रत्नजालं रत्नसमूहः यया तया।

सुरतान्तश्रमाबिन्दुमालया सुरतान्ते संभोगावसाने ये श्रमबिन्दवः स्वेदबिन्दवः तेषां मालया पङ्क्त्या । हेमकान्तिना हेम्नः सुवर्णस्य कान्तिः शोभा इव कान्तिः यस्य तेन । अलिकेन ललाटेन । परस्परं अन्योन्यम् । का अपि अनिर्वचनीयाः । रुचिः शोभा । विदधे कृता । स्वेदबिन्दुभिर्ललाटेन च परस्परं सौन्दर्यवर्द्धनं कृतमिति भावः । अन्योन्यालङ्कारः । पद्यमिदं रसगङ्गाधरे ( पृ० ४५५ ) एतदलङ्कारप्रसङ्गे पठ्यते । तल्लक्षणं च तत्रैव—"द्वयोरन्योन्येनान्योन्यस्य विशेषाधानमन्योन्यम्" इति । मालभारिणीवृत्तम् ॥ ८९ ॥

परपूरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता ।
अविशत्परकामिनीभुजङ्गीभयतः सत्वरमेव सोऽपि तस्याः ॥९०॥

परेति ॥ परपूरुषदृष्टिपातवज्राहतिभीता परपुरुषाणां स्वपतिभिन्नानां दृष्टिपातः एव वज्राहतिः वज्रताडनं, तस्याः भीता । सीता । प्रियस्य रामस्य । हृदयं अविशत् । सः रामः । अपि । परकामिनीभुजङ्गीभयतः परकामिन्यः परस्त्रियः एव भुजङ्ग्यः सर्पिण्यः ताभ्यः भयं तस्मात् । तस्याः सीतायाः । हृदयं सत्वरं शीघ्रं एव । अविशत् । स्पष्टो भावः । अन्योन्यालङ्कारः । पद्यमिदं रसगङ्गाधरे ( पृ० ४५५ ) एतदलङ्कारोदाहरणे पठ्यते । गीतिवृत्तम् ॥ ९० ॥

जम्बीरश्रियमतिलङ्घ्य लीलयैव
व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते
स्पर्धेते किल कनकाचलेन सार्धम् ॥ ९१ ॥

जम्बीरेति ॥ नायकस्य नायिकां प्रति चाटूक्तिः । हे नीलाम्भोरुहनयने नीलोत्पलसदृशनेत्रे । ते कुचौ । जम्बीरश्रियं जम्बीराख्यस्य प्रसिद्धस्य फलस्य श्रियं शोभाम् । लीलया अनायासेन । एव । अतिलङ्घ्य अतिक्रम्य व्यानम्रीकृतकमनीयहेमकुम्भौ व्यानम्रीकृतौ जितौ कमनीयौ सुन्दरौ हेम्नः सुवर्णस्य कुम्भौ याभ्यां तौ । अधुना । कनकाचलेन सुवर्णपर्वतेन । सार्धं । स्पर्धेते सुवर्णपर्वतं जेतुं इच्छां कुरुतः । किल निश्चयेन । तव कुचौ जम्बीरपरिमाणात्कुम्भपरिमाणौ भूत्वाधुना पर्वताकारौ जातावुत्तरोत्तर-

 

सुत्कर्षमनुभवत इति भावः । सारालङ्कारः । सारालङ्कारोदाहरणे रसगङ्गाधरे ( पृ० ४६५ ) पठ्यते पद्यमिदम् । तल्लक्षणं च तत्रैव—" सैव संसर्गस्योत्कृष्टापकृष्टभावरूपत्वे सारः " इति । प्रहर्षिणीवृत्तम् । " म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् " इतिलक्षणम् ॥ ९१ ॥

अङ्गानि दत्त्वा हेमाङ्गि प्राणान् क्रीणासि चेन्नृणाम् ।
युक्तमेतन्नतु पुनः[1] कोणं नयनपद्मयोः ॥ ९२ ॥

१. र.-पुनर्लोचनाम्बुरुहद्वयम् ।

अङ्गानीति ॥ हे हेमाङ्गि सुवर्णवर्णावयवे । अङ्गानि आलिङ्गनेन सर्वाणि गात्राणि । दत्त्वा । नृणां प्राणान् क्रीणासि चेत् यदि । तर्हि । एतत् युक्तं समीचीनम् । पुनः किंतु । नयनपद्मयोः नेत्रकमलयोः । कोणं एकदेशं अपाङ्गमित्यर्थः । दत्त्वा यत् त्वं नृणां प्राणान् क्रीणासि तत् न युक्तम् । सर्वेषामङ्गानां दानेन मनुष्याणां प्राणान् यत्त्वं क्रीणासि तद्विनिमयस्य समत्वादुचितम् । किं तु यदा नेत्रकटाक्षमात्रेण नराणां प्राणान् गृह्णासि तन्न युक्तमिति भावः । परिवृत्तिरलङ्कारः । तदुदाहरणे च पठ्यते पद्यमिदं रसगङ्गाधरे ( पृ० ४८१ ) तल्लक्षणं च तत्रैव—" परकीययत्किंचिद्वस्त्वादानविशिष्टं परस्मै स्वकीययत्किंचिद्वस्तुसमर्पणं परिवृत्तिः " इति ॥ अनुष्टुब्वृत्तम् ॥ ९२ ॥

जितमौक्तिकसम्पदां[2] रदानां
सहवासेन परां मुदं दधानम् ।
विरसादधरीकरोति[3] नासा—
मधुना साहसशालि मौक्तिकं ते ॥ ९३ ॥

१. बा०, नि०—जितरत्नरुचाम् . २. नि०—अधरीकुरुते शुभाङ्गि ।

जितेति ॥ नायकस्य नायिकां प्रति चाटूक्तिरियम् । जितमौक्तिकसम्पदां जिता मौक्तिकानां मुक्ताफलानां सम्पत् शोभा यैः तेषाम् । रदानां दन्तानाम् । सहवासेन सङ्गेन । परां महतीम् । मुदं हर्षम् । दधानां धारयन्तीम् । ते नासां नासिकाम् । अधुना । साहसशालि अशक्ये कर्मणि प्रयतमानम् । मौक्तिकं नासिकास्थितमित्यर्थः । विरसात् विरसत्वात् । भावप्रधानो निर्देशः । अधरीकरोति नीचीकरोति । दन्तैर्मौक्तिकानि जितानि तेषां दन्तानां सहवासेन नासिकाया महान्हर्षोऽभूत् । सैव च नासिकाधुना-

न्येन मौक्तिकेन जीयत इति भावः। अत्र स्वजातीयानां पराभवं कुर्वतां दन्तानां कमप्यपकारं कर्तुमसमर्थं नासामौक्तिकं दन्तसम्बन्धिन्या नासिकायाः पराभवं कुरुत इति वर्णनात्प्रत्यनीकालङ्कारोऽयम्। पठ्यते च पद्यमिदमेतदलङ्कारोदाहरणप्रसङ्गे रसगङ्गाधरे (पृ० ४९४)। तल्लक्षणं च तत्रैव– "प्रतिपक्षसम्बन्धिनस्तिरस्कृतिः प्रत्यनीकम्" इति। मालभारिणी वृत्तम्॥ ९३॥

निभाल्य भूयो निजगौरिमाणं
मा नाम मानं सहसैव यायाः।
गृहे गृहे पश्य तवाङ्गवर्णा
मुग्धे सुवर्णावलयो लुठन्ति॥ ९४॥

१. र०—हृदये विधासीः। प०—शे०—सहसैव यासीः।

निभाल्येति॥ हे मुग्धे बाले। निजगौरिमाणं आत्मनः गौरत्वम्-भूयः पुनः पुनः। निभाल्य दृष्ट्वा। सहसा अविचार्य। एव। मानं अभिमानम्। नाम खलु। मा यायाः मा गच्छ। गृहे गृहे प्रतिगृहम्। तवाङ्गवर्णाः तव अङ्गानां गात्राणां वर्णः इव वर्णः यासां ताः। सुवर्णावलयः सुवर्णस्य अवलयः पङ्क्तयः। लुठन्ति अनादृताः एव पतन्ति। इति पश्य। वारं वारं स्वशरीरगौरतामवलोक्य, हे बाले, मा वृथाभिमानं कुरु, ननु त्वच्छरीरतुल्यवर्णाः काञ्चनपङ्क्तयोऽत्र प्रतिगृहं लुठन्तीति भावः। प्रतीपालङ्कारः। पठ्यते चैतत्पद्यं रसगङ्गाधरे (पृ. ४९६) अस्यैवालङ्कारस्योदाहरणत्वेन। तल्लक्षणं च तत्रैव– "उपमानोपमेययोरन्यतरस्य किंचिद्गुणप्रयुक्तमद्वितीयतोत्कर्षं परिहर्तुं द्वितीय प्रदर्शनेनोल्लास्यमानं सादृश्यमपरं द्विविधम्" इति॥ उपेन्द्रवज्रावृत्तम्॥९४॥

करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः।
कथमालि शृणोषि सादरं विपरीतार्थविदो हि योषितः॥ ९५॥

करीति॥ हे आलि सखि। विशृङ्खलैः अनर्गलैः। कविभिः। क्रियमाणां। उरोजयोः कुचयोः। करिकुम्भतुलां करिणः गजस्य कुम्भयोः गण्डयोः तुलां समानताम्। सादरं आदरपूर्वकम्। कथं शृणोषि। सादरश्रवणमयुक्तं, यतो द्वयोः साम्यमेव नास्ति। त्वं च यच्छृणोषि तस्य हेतुः कः? तमेव चतुर्थचरणेन सम्पादयति। हि यतः। योषितः स्त्रियः। विपरीतार्थ-

विदः विपरीतं अयथार्थं अर्थं ज्ञानं विदन्ति जानन्ति इति। गजगण्डयोः कुचाभ्यां साम्यमिति श्रवणस्यानौचित्यम्, तच्च भ्रान्तत्वं विना न सम्भवति। यतः स्त्रियः स्वभावेन भ्रान्ता इति भावः। अत्र 'स्त्रियः स्वभावेन विपरीतार्थविदः' इति सामान्येन नायिकागतभ्रान्तत्वरूपो विशेषः समर्थ्यते। अतोऽर्थान्तरन्यासोऽलङ्कारः। 'कथं शृणोषि' इत्यनेन तुलैव न सम्भवतीति गम्यते–अयं च प्रतीपालङ्कारः। स चार्थान्तरन्यासेन पुष्यते। पद्यमिदं रसगङ्गाधरे (पृ. ४७१, ४९६) प्रतीपार्थान्तरन्यासालङ्कारयोरुदाहरणत्वेन पठ्यते। सुन्दरीवृत्तम् ॥ ९५ ॥

तिरस्कृतो रोषवशात्परिष्वज[1]—
न्प्रियो मृगाक्ष्या शयितः पराङ्मुखः।
किं दुःखितो[2]ऽसाविति कांदिशीकया
कयाचिदाचुम्ब्य चिराय सस्वजे ॥ ९६ ॥

१. बा० वे०–परिष्वजन् रोषवशात्तिरस्कृतः। २. र०–मूर्च्छितो।

तिरस्कृत इति ॥ परिष्वजन् आलिङ्गन्। मृगाक्ष्या हरिणाक्ष्या। रोषवशात् प्रणयकोपहेतोः। तिरस्कृतः भर्त्सितः। प्रियः कान्तः। पराङ्मुखः। शयितः। 'किं असौ दुःखितः' मम व्यवहारेण खिन्नः—इति कांदिशीकया भयद्रुतया। कयाचिन्नायिकया। आचुम्ब्य चिराय चिरकालम्। सस्वजे आलिङ्गितः। रुष्टा काचिन्नायिका परिष्वजन्तं प्रियं प्रत्याख्यातवती—असौ वराको मुखं परावृत्य शयितः—मद्व्यवहारेण खिन्नोऽयमिति भीता नायिका स्वयमेव तं परिचुम्ब्य परिरब्धवतीति भावः। अत्र विनापि यत्नं नायकस्याभीष्टप्राप्तेः प्रहर्षणाख्योऽलङ्कारः। पठितं च पद्यमेतत्तदलङ्कारप्रसङ्गे। रसगङ्गाधरे (पृ० ५०४) वंशस्थं वृत्तम् ॥ ९६ ॥

चेलाञ्चलेनाननशीतरश्मिं
संवृण्वतीनां हरिदम्बरीणाम्।
व्रजाङ्गनानां[1] स्मरजातकम्पा—
दकाण्डसम्पातमियाय नीवी ॥ ९७ ॥

१. र०–गोपाङ्गनानां।

चेलेति ॥ हरिदृश्वरीणां हरिं कृष्णं दृष्टवत्य इति हरिदृश्वर्यः, तासाम्। अत एव—लज्जया। चेलाञ्चलेन चेलस्य वसनस्य अञ्चलेन प्रान्तेन। आननशीतरश्मि मुखचन्द्रम्। संवृण्वतीनां छादयन्तीनाम्। व्रजाङ्गनानां गोपीनाम्। नीवी वस्त्रग्रन्थिः। स्मरजातकम्पात् स्मरेण मदनेन हेतुना जातः यः कम्पः तस्मात्। सात्त्विकभावोदये कम्पो जायते। अकाण्डपातं अकाण्डे सहसा पातं पतनम्। इयाय प्राप। श्रीकृष्णं दृष्ट्वा गोपीभिर्मुखान्याच्छादितानि, किन्तु मदनजनितेन कम्पेन तासां वसनग्रन्थिः सहसैवापतदिति भावः। विषादनाख्योऽलङ्कारः। उक्तं च रसगङ्गाधरे (पृ० ५०६)—"अत्रेष्टस्याननगोपनस्य विरुद्धोऽर्थो नीवीस्खलनम्। कारणीभूतत्रपापरिपन्थित्वात्। तच्च सात्त्विककम्परूपात्स्वकारणादेवोत्पन्नम्, न तु गोपनानुकूलयत्नात्। नापीष्टसाधनत्वेन प्रयुक्तात्कारणादिष्टानुत्पत्तिरत्रास्ति। चेलाञ्चलावरणेनाननगोपनरूपस्येष्टस्योत्पत्तेः। अतो विषादनमेवात्र न विषमम्" इति। उपजातिवृत्तम् ॥ ९७ ॥

अधरेण समागमाद्रदानामरुणिम्ना पिहितोऽपि शुक्लभावः।
हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः ॥९८॥

अधरेणेति ॥ अधरेण अधरोष्ठेन। समागमात् सम्पर्कात्। अरुणिम्ना अरुणस्य रक्तवर्णस्य भावः अरुणिमा तेन। पक्ष्मलाक्ष्याः पक्ष्मले चारुणी अक्षिणी यस्याः सा तस्याः। रदानां दन्तानाम्। शुक्लभावः श्वेतवर्णः। पिहितः आच्छादितः। अपि। सितेन श्वेतेन। हसितेन। जातपक्षः जातः पक्षः सहायः यस्य। पुनः उल्लासं अवाप प्रादुर्बभूव। रक्तवर्णाधरोष्ठसहवासाद् दन्तानां श्वेतवर्णः पिहितोऽपि नायिकायाः शुक्लवर्णहसितसाहाय्यं प्राप्य पुनः प्रादुर्बभूवेति भावः। अत्र दन्तैः शुभ्रत्वरूपः स्वगुणः परित्यक्तः, अधरस्य च रक्तो गुणो गृहीत इति कृत्वा तद्गुणाख्योऽयमलङ्कारः। पठितं चैतत्पद्यं रसगङ्गाधरे (पृ० ५१३) अस्यालङ्कारस्योदाहरणत्वेन। अलङ्कारलक्षणं च तत्रैव—"स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसम्बन्धिगुणग्रहणं तद्गुणः" इति। मालभारिणीवृत्तम् ॥ ९८ ॥

सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव।
वद वदने मणिरदने ताम्बूलं केन लक्षयेम वरम् ॥ ९९ ॥

सरसीति ॥ प्रियेण 'ताम्बूलं कुतो न गृह्णासि' इत्युक्ते 'एतावन्तं कालं ताम्बूलानि भुक्त्वैव समागतास्मि' इत्युक्तवतीं प्रति तस्येयमुक्तिः। हे मृगाक्षि। **सरसिरुहोदरसुरभौ** सरसि रोहतीति सरसिरुहं तस्य उदरं मध्यभाग इव सुरभौ सुगन्धयुक्ते। **अधरितबिम्बाधरे** अधरितं तुच्छीकृतं बिम्बं बिम्बफलं येन तादृशः अधरः अधरोष्ठः यस्मिन् तस्मिन्। **मणिरदने** मणयः इव रदनाः दन्ताः यस्मिन् तस्मिन्। **तव वदने** मुखे। **वयं ताम्बूलं** ताम्बूलभक्षणम्। **केन** लिङ्गेन। **लक्षयेम** तर्कयेम। हे मृगलोचने कमलवत्सुगन्धिनि रक्ताधरे मणिसदृशदन्ते च ते मुखे ताम्बूलभक्षणं लक्षयितुं न पारयामो वयम्। मुखस्य स्वाभाविकरक्तत्वात् स्वाभाविकसुगन्धवत्त्वाच्च ताम्बूलगुणास्तत्र निवसन्तीति भावः। मीलितालङ्कारः। पद्यते चैतत्पद्यमेतदलङ्कारप्रसङ्गे रसगङ्गाधरे (पृ० ५१५)। अलङ्कारलक्षणं च तत्रैव—"स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्यादभिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम्" इति। गीतिवृत्तम्॥९९॥

**शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।**
**दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥ १०० ॥**

शयितेति ॥ **सविधे** पार्श्वे। **अपि**। पत्युरिति शेषः। **शयिता** सुप्ता। **मनोरथान्** आलिङ्गनचुम्बनादीन् स्वाभिलाषान् **सफलीकर्तुं** पूरयितुम्। **अनीश्वरा** असमर्था, लज्जावशादित्यर्थः। **दयिता** प्रिया नायिका। **दरमीलन्नयना** दरं ईषत् मीलती संकुचिते नयने यस्याः सा। **दयिताननाम्बुजं** दयितस्य प्रियस्य मुखकमलम्। **निरीक्षते** अवलोकयति। पार्श्वे सुप्तापि नायिका मुग्धभावेन लज्जया च स्वदयितस्यालिङ्गनादिकं कर्तुमसमर्था सती केवलमीषदाकुञ्चितनेत्राभ्यां तद्वदनमवलोकयतीति भावः। अत्र दरमीलन्नयनेति पदेन लज्जा व्यज्यते, निरीक्षत इति पदेन च नायके रतिः। शृङ्गारध्वनिरयम्। पद्यमिदं रसगङ्गाधरे (पृ० १०) उत्तमकाव्योदाहरणत्वेन पठ्यते। सुन्दरीवृत्तम् ॥ १०० ॥

**किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः।**
**कथय तथापि मुदे मम कथयिष्यति पथिक तव जाया ॥१०१॥**

**किमिति** ॥ कस्याश्चित्प्रोषितभर्तृकायाः पान्थेन सह संवादोऽयम्। हे **कृशोदरि** तनुमध्ये। **किमिति** कस्मात् कारणात्। **कृशा** क्षीणा। **असि**।

सोत्तरं ददाति–परकीयवृतान्तैः तव किं प्रयोजनम् । पुनः पान्थः पृच्छति-तथा अपि मे मुदे हर्षाय । कथय । नायिकोत्तरं ददाति—तव जाया भार्या । कथयिष्यति । पद्यमिदं रसगङ्गाधरे ( पृ० ५२० ) उत्तरालङ्कारोदाहरणे पठ्यते । उक्तं च तत्र ग्रन्थकृतैतद्व्याख्यानावसरे—" अत्राद्यप्रश्नस्य हेतुं चेद्वदसि तदा प्रतिकरिष्यामीति व्यङ्ग्यम् । उत्तरस्य तु न मया पतिव्रतया हेतुर्वक्तुं परपुरुषं प्रति योग्यः, न च त्वया प्रतिकर्तुं शक्य इति । द्वितीयप्रश्नस्य त्वलं पातिव्रत्येनाविदग्धजनहठमात्रविलसितेन । स्वपरसंतोष एव संसारसार इति । द्वितीयोत्तरस्य तु या मम दशा सैव तव जायाया अपि दशास्ति । सैव प्रतिक्रियताम् । न हि स्वकीयं सदनं दह्यमानमुपेक्ष्य कश्चित्परसदनाग्निं प्रतिकरोति । अथ यदि परोपकारः स्वकीयां क्षतिमपि सोढ्वा करणीय इत्यस्ति मनीषा तदा तवैवंविधोपकारे प्रवृत्तस्य जायायाः केनचिदन्येन भवादृशेनोपकारः करणीय इति त्वयैव तस्या ममेव परपुरुषपराङ्मुख्या विरहो दूरी कर्तव्य इति " । अलङ्कारलक्षणं च तत्र–" प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम् " इति । आर्यावृत्तम् ॥ १०१ ॥

**वदनारविन्दसौरभलोभादिन्दिन्दिरेषु[1] निपतत्सु ।**
**मय्यधरार्थिनि सुदृशो दृशो जयन्त्यतिरुषा परुषाः ॥ १०२ ॥**

१. नि०—दिन्दिवरेषु

२ इति श्रीपण्डितराजजगन्नाथविरचिते भामिनीविलासे शृङ्गारविलासः ॥

**वदनेति ॥ वदनारविन्दसौरभलोभात्** वदनारविन्दस्य मुखकमलस्य सौरभस्य परिमलस्य लोभात् । **इन्दिन्दिरेषु** भ्रमरेषु । **निपतत्सु** । एतेन नायिकायाः पद्मिनीत्वं ध्वन्यते । **अधरार्थिनि** अधरपानं प्रार्थितवति । **मयि** । **सुदृशः** शोभननेत्रायाः । **अतिरुषा** अतिकोपेन । **परुषाः** निष्ठुराः । **दृशः** कटाक्षाः । **जयन्ति** सर्वोत्कर्षेण वर्तन्ते । कश्चिन्नायकः सखायं ब्रूते—तस्या नायिकाया मुखकमलगन्धमाघ्राय समन्ततो भ्रमरा निपेतुस्तथाहं च तस्मिन्नेव काले तदधरपानं प्रार्थितवान् । एतदवस्थायां महानभूत्तस्या रोषः, प्राक्षिपच्चासौ मां प्रति निष्ठुरकटाक्षान्—किन्तु सा तद्दशा तच्छोभां नितरामवर्धयदितिभावः । आर्यावृत्तम् ॥ १०२ ॥

॥ इति चषकटीकायां शृङ्गारविलासः ॥

॥ श्रीः ॥

श्रीपण्डितराजराजतिलकजगन्नाथप्रणीते

# भामिनीविलासे

## ३ करुणविलासः ॥

दैवे पराग्वदनशालिनि हन्त जाते
याते च संप्रति दिवं प्रति बन्धुरत्ने ।
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ १ ॥

दैव इति ॥ प्रमीतां स्वप्रियामुद्दिश्य कस्यचिच्छोकोक्तिरस्मिन्विलासे ग्रथिता । हन्त इति खेदे । दैवे विधौ । पराग्वदनशालिनि पराग्वदनं वैमुख्यं तेन शालते शोभते इति तस्मिन्, पराङ्मुखे इत्यर्थः । जाते सति । संप्रति इदानीम् । बन्धुरत्ने बन्धुरत्र प्रिया सा एव रत्नं तस्मिन् । च । दिवं स्वर्गं याते गते सति । हे मनः कस्मै निजां अवस्थां शोचनीयां दशाम् । कथयितासि वर्णयितासि । कः च जनः । शीतलैः वचनैः तव आधिं मनोव्यथाम् । शमयिता शमयिष्यति । भाग्यस्य प्रातिकूल्यात्, प्रियाया मरणाच्च न कोऽप्यद्यावशिष्टो यस्मै दुःखवृत्तान्तो निवेद्येत यश्च शीतलवचनैर्मम शोकाग्निं निर्वापयेदिति भावः । विलासेऽस्मिन् विहायाष्टादशं श्लोकं सर्वत्र वसन्ततिलकावृत्तम् ॥ १ ॥

प्रत्युद्गता सविनयं सहसा पुरेव[१]
स्मेरैः स्मरस्य सचिवैः सरसावलोकैः ।
मामद्य मञ्जुरचनैर्वचनैश्च बाले
हा लेशतोऽपि न कथं शिशिरीकरोषि[२] ॥ २ ॥

१. र०—सखीभिः । २. र०—वद मुत्करोषि ।

प्रत्युद्गतेति ॥ हे बाले मुग्धे । पुरा इव पूर्वं इव । सहसा अकस्मात् । सविनयं नम्रतया सहितं यथा स्यात्तथा । प्रत्युद्गता अभिमुखं आगता ।

**स्मरस्य** कामस्य । **सचिवैः** सहायैः । कामोद्दीपनसमर्थैरिति यावत् । **स्मेरैः** ईषद्धास्ययुक्तैः । **सरसावलोकैः** सरसैः प्रेमयुक्तैः अवलोकैः वीक्षणैः । **मञ्जुरचनैः** मञ्जु मधुरा रचना पदविन्यासः येषां तैः । **वचनैः** आलापैः । **लेशतः** अपि ईषद् अपि । **मां अद्य कथं न शिशिरीकरोषि** शीतलयसि । हे मुग्धे यथा त्वं पूर्व सहसैव मत्संमुखमागत्य मधुरनिरीक्षणैर्मधुरालापैश्च मामरञ्जयस्तथाद्य मनागपि कथं न करोषीति भावः । अत्र नायकस्य नायिकायां या रतिः सा तस्या निधनेन प्रवृद्धस्य नायकशोकस्याङ्गमिति रसगङ्गाधरे ( पृ० ४८ ) स्फुटीकृतम् ॥ २ ॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्यापि खेदकलिता[1] विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥ ३ ॥

१. नि०, बा०–खेदगलिता ।

**सर्वेऽपीति** ॥ **सर्वे अपि विषयाः** स्रक्चन्दनवनितादयः इन्द्रियार्थाः । **विस्मृतिपथं** विस्मृतेः विस्मरणस्य पन्थानं मार्गं । **प्रयाताः** गताः । **खेदकलिता** खेदेन परिश्रमेण कलिता प्राप्ता । **विद्या अपि विमुखीबभूव** पराङ्मुखा संजाता । **केवलं सा । हरिणशावकलोचना** हरिणशिशोः लोचने इव लोचने यस्याः सा । **अधिदेवता** अधिष्ठात्री देवी । **इव । मे हृदयात्** चित्तात् । **न एव अपयाति** गच्छति । सर्वेऽपि विषया विस्मृताः, कष्टेनाधिगता विद्यापि विस्मृता, केवलं सा मृगनयना न विस्मृतिपथं गच्छतीति भावः । पद्यमेतद्रसगङ्गाधरे भावध्वनौ ( पृ. १०२ ) उदाहृतम् । उक्तं च तत्र पण्डितराजेन "गुरुकुले विद्याभ्याससमये तदीयकन्यालावण्यगृहीतमानसस्यान्यस्य वा कस्यचिदतिप्रतिषिद्धगमनां स्मरतो देशान्तरं गतस्येयमुक्तिः । अत्र च स्वात्मत्यागात्यागाभ्यां स्रक्चन्दनादिषु विषयेषु चिरसेवितायां विद्यायां च कृतघ्नत्वम्, अस्यां च लोकोत्तरत्वमभिव्यज्यमानं व्यतिरेकवपुः स्मृतिमेव पुष्णातीति सैव प्रधानम् । ( अस्यार्थः–विषयैः परित्यक्तो नायकः, अतस्ते कृतघ्नाः । विद्ययापि परित्यक्तः, अतः सापि कृतघ्नैव । किन्तु नायिकया न परित्यक्तः, अतस्तस्यामलौकिकत्वम् । एवं नायिकाया विद्याविषयेभ्यो

व्यतिरेकः । स च नायकहृदयस्थां नायिकाविषयां स्मृतिं पोषयति ) एवं त्यागाभावगतं सार्वदिकत्वं व्यञ्जयन्त्यधिदेवतोपमापि । ( अर्थात्–यथाधिदेवता सर्वदा वर्तमाना तथैवेयं नायिकेत्युपमाध्वनिरपि स्मृतिपोषं करोति )। एषा चानुचितविषयकत्वादनुभयनिष्ठत्वाच्च भावाभासः ( अर्थात्–अनुचिताया नायिकायाः स्मृतिस्तथा च सा केवलं नायकहृदये निवसति न तु नायिकाया अपि ) । यदि पुनरियं परिणेतुरेवोक्तिस्तदा भावध्वनिरेव " इति ॥ ३ ॥

निर्वाणमङ्गलपदं त्वरया विशन्त्या[1]
मुक्ता दयावति दयापि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभात–
नीलारविन्दमदभङ्गिमदैः[2] कटाक्षैः ॥ ४ ॥

१. नि०–व्रजन्त्या । २. नि०–°मदभङ्गकरैः ।

निर्वाणेति ॥ हे दयावति दयाशीले । त्वरया शीघ्रम् । निर्वाणमङ्गलपदं निर्वाणं मोक्षः एव मङ्गलस्य श्रेयसः पदं स्थानम् । विशन्त्या गच्छन्त्या । त्वया असौ मया अनुभूतपूर्वा । दया करुणा । अपि मुक्ता किल । यत् यस्मात् । हे भामिनि । प्रभातनीलारविन्दमदभङ्गिमदैः प्रभाते प्रातःकाले यानि नीलारविन्दानि इन्दीवराणि । एतेन तेषां विकासोन्मुखत्वं तात्कालिक-पवनचापल्यं च सूचितमित्यच्युतरायः । तेषां यो मदः सौन्दर्याभिमानः तस्य भङ्गी भञ्जकः मदः येषां तैः । कटाक्षैः मां न । निभालयसि पश्यसि । सद्योमृतां भार्यां प्रति नायकस्योक्तिरियम्––हे प्रिये यत्त्वं नीलारविन्दादप्यति-सुन्दरैः कटाक्षैर्मां न पश्यसि तस्मात् प्रतीयते यदद्भुतरूपं मोक्षं संप्राप्य मयि कृपापि त्यक्ता । न केवलमहं त्यक्तः किन्तु मयि दयापि त्यक्तेति भावः ॥ ४ ॥

धृत्वा पदस्खलनभीतिवशात्करं मे
यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्या—
मारोहसीति हृदयं शतधा प्रयाति ॥ ५ ॥

धृत्वेति । ' आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून् सहस्व पृतनायतः ॥ ' इति मन्त्रेण विवाहकाले वधूर्वरहस्तमवलम्ब्य पाषाण-खण्डमारोहति । एतदेव मनसि कृत्वा कविना पद्यमिदं रचितम् । हे विला-

सिनि विभ्रमवति । या त्वं विवाहे । पदस्खलनभीतिवशात् पदस्खलनात् चरणच्युतेः भीतिः भयं तद्वशात् । मे करं धृत्वा अवलम्ब्य । शिलाशकलं गौरीप्रतिष्ठाख्यं पाषाणखण्डम् । आरूढवती असि । सा त्वं अद्य मां विहाय त्यक्त्वा । कथं द्यां स्वर्गम् । आरोहासि इति मे हृदयं शतधा प्रयाति विदीर्यते । हे प्रिये विवाहकाले पाषाणखण्डारोहणसमये पतनभयात्त्वं मम हस्तावलम्बनमकरोः, कथमद्य स्वर्गारोहणसमये पुनस्त्वं मम हस्तावलम्बनं परित्यक्तवसीति हृदयं विदीर्यत इति भावः ॥ ५ ॥

निर्दूषणा गुणवती रसभावपूर्णा
सालंकृतिः श्रवणकोमलवर्णराजिः ।
सा मामकीनकवितेव मनोऽभिरामा
रामा कदापि हृदयान्मम नापयाति ॥ ६ ॥

निर्दूषणेति ॥ अस्मिन्पद्ये प्रिया कवितयोपमीयते । विशेषणानि च श्लिष्टानि । निर्दूषणा दुःशीलत्वादिदोषरहिता । कवितापक्षे—श्रुतिकटुत्वादिदोषशून्या । गुणवती दयादाक्षिण्यादिगुणयुक्ता । कवितापक्षे-माधुर्यादिगुणयुक्ता । रसभावपूर्णा रसेन प्रीत्या भावैर्विलासादिभिः च पूर्णा । कवितापक्षे—रसैः शृङ्गारादिभिः भावैः चिन्तानिर्वेदादिभिः व्यभिचारिभावैः पूर्णा । सालंकृतिः कटककेयूरादिभिः अलंकारैः युक्ता । कवितापक्षे—उपमादिभिः अलंकारैः युक्ता । श्रवणकोमलवर्णराजिः श्रवणयोः कर्णयोः कोमला मधुरः —श्रुतिमनोहरेत्यर्थः । वर्णराजिः शब्दपंक्तिः यस्याः सा । कवितापक्षे—श्रवणकोमला काव्यनिष्पादकानां वर्णानां पंक्तिः यस्याः सा । मनोऽभिरामा मनोहरा । सा मे । रामा प्रिया । मामकीनकविता मत्कविता । इव । मम हृदयात् कदा अपि न अपयाति निर्गच्छति । उपमालङ्कारोऽर्थश्लेषश्च । अत्र मम्मटाचार्यविरचितं काव्यलक्षणमनुसन्धेयम् । तद्यथा—" तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि " इति ॥ ६ ॥

चिन्ता शशाम सकलापि सरोरुहाणा—
मिन्दोश्च विम्बमसमां सुषमामयासीत् ।
अभ्युद्गतः कलकलः किल कोकिलानां
प्राणप्रिये यदवधि त्वमितो गतासि ॥ ७ ॥

चिन्तेति ॥ हे प्राणप्रिये। यदवधि यत आरभ्य। त्वं इतः अस्मात् लोकात् स्वर्गलोकं गता असि। तदवधि। सरोरुहाणां कमलानाम्। सकला अपि। चिन्ता पराभवभीतिः। शशाम शान्ता। इन्दोः चन्द्रस्य। च। बिम्बं मण्डलम्। असमां अतुलाम्। सुषमां शोभाम्। अयासीत्। कोकिलानां च कलकलः रवः। किल। अभ्युद्गतः उत्थितः। हे प्राणप्रिये यावद्गासोस्त्वं जीविता तावत्त्वन्मुखसौन्दर्यनिर्जितानि कमलानि चिन्ताकुलान्यासन्, चन्द्रबिम्बमपि सद्वितीयमासीत्, त्वत्कण्ठमाधुर्यनिर्जिताश्च कोकिला मूका अभूवन्। इदानीं त्वयि गतायामभावं—कमलानां चिन्ताऽभावं गता, चन्द्रस्य बिम्बमनुपमसौन्दर्यं जातं, कोकिलानां च मूकत्वमप्यभावं प्रापेति भावः। काव्यलिङ्गध्वनिः ॥ ७ ॥

सौदामिनीविलसितप्रतिमानकाण्डे
दत्वा कियन्त्यपि दिनानि महेन्द्रभोगान्।
मन्त्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी—
र्भाग्यच्युतस्य करतो मम निर्गतासि ॥ ८ ॥

सौदामिनीति ॥ हे प्रिये। सौदामिनीविलसितप्रतिमान् सौदामिनी विद्युत् तस्याः विलसितानि स्फुरणानि तत्प्रतिमान् तत्सदृशान्। अति क्षणिकानित्यर्थः। महेन्द्रभोगान् महेन्द्रयोग्यान् भोगान् सुखानीति यावत्। कियन्ति अपि स्वल्पानि एव। दिनानि दत्वा समर्प्य। मन्त्रोज्झितस्य मन्त्रेण सन्धिविग्रहादिकेन उज्झितस्य त्यक्तस्य। नृपतेः राज्ञः। करतः हस्तात्। राज्यलक्ष्मीः राज्यसम्पत्। इव। भाग्यच्युतस्य भाग्यहीनस्य। मम करतः हस्तात्। अकाण्डे सहसा निर्गता असि। सन्धिविग्रहादिमन्त्ररहितस्य राज्ञो हस्ताद्यथा विद्युदिव चपला लक्ष्मीरपयाति, तथा महेन्द्रसदृशभोगानल्पकालं दत्वा भाग्यहीनस्य मम हस्तात्त्वं भ्रष्टासीति भावः। उपमालङ्कारः ॥ ८ ॥

केनापि मे विलसितेन समुद्गतस्य
कोपस्य किं नु करभोरु वशंवदाभूः।
यन्मां विहाय सहसैव पतिव्रतापि
यातासि मुक्तिरमणीसदनं विदूरम् ॥ ९ ॥

**केनापीति** । हे करभोरु 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभः हस्तबहिर्भागः इव ऊरू यस्याःसा, तत्सम्बुद्धौ । **केन अपि** अनुचितेन । **मे** । **विलसितेन** चेष्टितेन । **समुद्गतस्य** उत्पन्नस्य । **कोपस्य** । **वशंवदा** अधीना । अभूः जाता असि । **किं नु** । कुतो ज्ञातमित्याकांक्षाया-मुच्यते । **यत्** यस्मात् । **पतिव्रता अपि** । अत्रापिशब्देन पतित्यागोऽती-वानुचित इति सूचितम् । **मां विहाय** । **विदूरं** अतिदूरस्थम् । **मुक्तिरमणी-सदनं** मुक्तिः एव रमणी सखी तस्याः सदनं गृहम् । मोक्षपदमित्यर्थः । **सहसा एव** । **याता** गता । असि । सर्वदा पत्यनुगामिनी सत्यपि मां परि-त्यज्य यत्त्वं मोक्षपदं प्रविष्टासि तद् ध्रुवं केनापि ममानुचितेन व्यवहारेण कुपितासीति तर्कयामीति भावः ॥ ९ ॥

> काव्यात्मना मनसि पर्यणमन्पुरा[1] मे
> पीयूषसाररसरसास्तव ये विलासाः ।
> तानन्तरेण रमणी रमणीयशीले
> चेतोहरा सुकविता भविता कथं नः ॥ १० ॥

१. नि०–पर्यगमन्पुरा ।

**काव्येति** ॥ हे प्रिये । **पीयूषसाररसरसाः** पीयूषः अमृतं तस्य सारं तत्त्वं तद्वत् सरसाः रसपूर्णाः । **तव ये । विलासाः** विभ्रमाः । **मे मनसि पुरा** पूर्वम् । **काव्यात्मना** कवितारूपेण । **पर्यणमन्** परिणताः अभूवन् । हे **रम-णीयशीले** रमणीयं सुन्दरं शीलं चरितं यस्याः, तत्सम्बुद्धौ । **तान् विला-सान्** । **अन्तरेण** विना । **नः** अस्माकम् । **सुकविता** शोभनकाव्यरचना । **कथं** केन प्रकारेण । **रमणी** सुन्दरा । **चेतोहरा** मनोहरा च । **भविता** । हे प्रिये त्वयि जीवन्त्यां पीयूषरसपरिपूर्णास्ते विभ्रमाः काव्यरूपतां प्रापुः, अधुना त्वयि दिव गतायां तेषां विलासानामभावात् सुन्दरकवितारचने कथं समर्थो भविष्यामीति भावः । अत्र रमणीतिपदस्य द्विरावृत्तेर्यमका-लङ्कारः॥ १० ॥

> या तावकीनमधुरस्मितकान्तिकान्ते[1]
> भूमण्डले विफलतां कविषु व्यतानीत् ।

१. नि०–कान्तिकान्ता ।

सा कातराक्षि विलयं त्वयि यातवत्यां
राकाधुना वहति वैभवमिन्दिरायाः॥ ११॥

येति। हे कातराक्षि कातरे भीते तरले इत्यर्थः, अक्षिणी यस्याः सा तत्स-म्बुद्धौ। या राका पूर्णिमा। तावकीनमधुरस्मितकान्तिकान्ते तावकीनं त्वदीयं यत् मधुरं स्मितं मनोहरं हसितं तस्य कान्तिः शोभा तया कान्ते रमणीये। भूमण्डले पृथ्वीमण्डले, जाते सति इति शेषः। कविषु शुभ्रवस्तु-वर्णनपरेषु कविषु। विफलतां निष्फलताम्। व्यतानीत् अकरोत्। सा राका। त्वयि विलयं मृत्युम्। गतायां प्राप्तायाम्। अधुना इन्दिरायाः लक्ष्म्याः। वैभवं सौन्दर्यम्। वहति धारयति। हे प्रिये त्वयि जीवन्त्यां तव मधुरस्मितेन सिते च भूमण्डले, शुभ्रवस्तुवर्णनप्रस्तावे कवयः पूर्णिमां निष्प्र-योजनाममन्यन्त। अधुना त्वदभावे, सा पूर्णिमा निःसपत्नत्वादतितरां शोभत इति भावः॥ ११॥

मन्दस्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिशं समीजे।
सा नित्यमङ्गलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति॥ १२॥

मन्देति॥ या मे प्रिया। मन्दस्मितेन तद्रूपया सुधया अमृतेन। मां परिषिच्य स्नपयित्वा। विकसितैः फुल्लैः। नेत्रोत्पलैः नेत्राणि कटाक्षाः एव उत्पलानि कमलानि तैः। अनिशं सर्वदा। समीजे पूजितवती। सा नित्यमङ्गलमयी सततमङ्गलरूपा। गृहदेवता गृहाधिष्ठात्री देवता। कामेश्वरी कामानां ईश्वरी पूरणे समर्था। दयिता प्रिया। मे हृदयतः न याति सर्वदा स्मर्यते इत्यर्थः। यथा कश्चित्स्नपयित्वा पुष्पैरर्चयति तथा मत्प्रिया मन्द-स्मितरूपेणामृतेन मां स्नपयित्वा कटाक्षरूपैरुत्पलैर्मां पूजितवती। एता-दृशी नित्यकल्याणरूपिणी गृहाधिष्ठात्री कामपूरणे समर्था च मत्प्रिया मे हृद-यान्न दूरीभवति कर्हिचित्—इति भावः॥ १२॥

भूमौ स्थिता रमण नाथ मनोहरेति
सम्बोधनैर्यमधिरोपितवत्यसि द्याम्।
स्वर्गं गता कथमिव क्षिपसि त्वमेण—
शावाक्षि तं धरणिधूलिषु मामिदानीम्॥ १३॥

भूमाविति ॥ हे एणशावाक्षि एणस्य मृगस्य शावस्य अर्भकस्य अक्षिणी इव अक्षिणी यस्याः सा, तत्सम्बुद्धौ । भूमौ पृथिव्याम् । स्थिता जीवन्ती इत्यर्थः । या त्वं रमण नाथ मनोहर इति । सम्बोधनैः आमन्त्रणैः । यं माम् । द्यां स्वर्गम् । अधिरोपितवती उन्नमितवती । असि । सा त्वं स्वर्गं गता सती तं माम् । इदानीं धरणिधूलिषु पृथ्वीपांसुषु । कथं इव क्षिपसि । त्वयि जीवन्त्यां त्वदीयैः रमण, नाथ, मनोहरेत्याद्यामन्त्रणैरहं स्वर्गसुखमन्वभूवम् । अधुना त्वयि स्वर्गं गतायां त्वच्छोकनिमग्नो भूमौ लुठामीति भावः । पृथ्वीस्थितया त्वयाहं स्वर्गमारोपितः, किन्तु स्वर्गं गतया भूमौ प्रक्षिप्त इति महदनौचित्यं तवेति ध्वन्यते ॥ १३ ॥

लावण्यमुज्ज्वलमपास्ततुलं[1] च शीलं
लोकोत्तरं विनयमर्थमयं नयं[2] च ।
एतान्गुणानशरणानथ मां च[3] हित्वा
हा हन्त सुन्दरि कथं त्रिदिवं गतासि ॥ १४ ॥

१. प०–D. अपास्य कुलं । २. बा०–वचः । ३. बा०–गुणान् शरणकान् कतमांश्च ।

लावण्येति ॥ हे सुन्दरि । उज्ज्वलं दीप्तम् । लावण्यं सौन्दर्यम् । अपास्ततुलं अपास्ता निरस्ता तुला उपमा यस्य तत्—निरुपममित्यर्थः । शीलं चरित्रम् । लोकोत्तरं अलौकिकम् । विनयं नम्रत्वम् । अर्थमयं सार्थकम् । नयं व्यवहारचातुर्यम् । च एतान् अशरणान् आश्रयरहितान् । गुणान् मां च अशरणमिति शेषः । हित्वा त्यक्त्वा । हा हन्त इति खेदे । त्वं कथं त्रिदिवं स्वर्गं गता असि । हे प्रिये त्वदीयस्वर्गगमनेन न केवलमहं किन्तु लावण्यादयो गुणा अपि निराश्रया जाता इति भावः । त्वं लावण्यादीनां सर्वेषामाधार आसीरित्यर्थः ॥ १४ ॥

कान्त्या सुवर्णवरया परया च शुद्ध्या
नित्यं स्विकाः खलु शिखाः परितः क्षिपन्तीम् ।
चेतोहरामपि कुशेशयलोचने त्वां
जानामि कोपकलुषो दहनो ददाह ॥ १५ ॥

कान्त्येति ॥ हे कुशेशयलोचने कमलनेत्रे । चेतोहरां मनोहारिणीम् । अपि । सुवर्णवरया सुवर्णात् कनकात् वरया श्रेष्ठया । कान्त्या शोभया । परया श्रेष्ठया । शुद्ध्या निर्मलतया । च । स्विकाः । स्वीयाः । दहनस्येत्यर्थः । शिखाः ज्वालाः । क्षिपन्तीं अभिभवन्तीम् । कोपकलुषः क्रोधपरवशः । मम कान्तिः शुद्धिश्चानया नायिकया जिते इति संक्रुद्धः । दहनः अग्निः । त्वां ददाह इति । जानामि मन्ये । नूनं परोत्कर्षासहिष्णुरग्निः स्वकान्तिशुद्धिभ्यां त्वया जितत्वात्संप्राप्तरोषः संस्त्वां ददाहेति मन्य इति भावः । उत्प्रेक्षालङ्कारः ॥ १५ ॥

कर्पूरवर्तिरिव लोचनतापहन्त्री
फुल्लाम्बुजस्रगिव कण्ठसुखैकहेतुः ।
चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥ १६ ॥

कर्पूरेति ॥ कर्पूरवर्तिः कर्पूरशलाका । इव । लोचनतापहन्त्री नेत्रतापहारिणी । यथा कर्पूरशलाका नेत्रयोरञ्जिता तापं दूरीकृत्य शैत्यं ददाति, तथा सापि नेत्रानन्दजननी। फुल्लाम्बुजस्रक् फुल्लानि विकसितानि अम्बुजानि कमलानि तेषां स्रक् माला । इव । कण्ठसुखैकहेतुः कण्ठे धृता सुखस्य एकहेतुः अनुपमः उपायः । कमलमाला यथा तापहरणे समर्था, तथा सापि कण्ठालिङ्गनेन कामानलदाहहरणे समर्था । रम्या मनोहरा । कविता इव । चेतश्चमत्कृतिपदं चेतसः मनसः चमत्कृतेः आश्चर्यस्य पदं स्थानम् । यथा मनोहरा कविता मनस्याश्चर्यमुत्पादयति, तथा सापि निजसौन्दर्येण मनस्याश्चर्यं समुदपादयत् । एतादृशी सा प्रिया । नरीभिः नरजातिस्त्रीभिः । नरशब्दात् "जातेरस्त्रीविषयादयोपधात्" इति सूत्रेण जातौ वाच्यायां ङीप् प्रत्ययः । नम्या प्रणामयोग्या । अमरी देवी । इव । विरेजे शोभिता अभूत् । मालोपमालङ्कारः ॥ १६ ॥

स्वप्नान्तरेऽपि खलु भामिनि पत्युरन्यं
या दृष्टवत्यसि न कंचन साभिलाषम् ।
सा सम्प्रति प्रचलितासि गुणैर्विहीनं
प्राप्तुं कथं कथय हन्त परं पुमांसम् ॥ १७ ॥

स्वप्नेति ॥ हे भामिनि । स्वप्नान्तरे स्वप्नावस्थायाम् । अपि या त्वं पत्युः अन्यं इतरम् । परपुरुषमित्यर्थः । साभिलाषं अभिलाषेण सह । कं चन न दृष्टवती असि । सा त्वं सम्प्रति अधुना । गुणैः विनयादिभिः, पक्षे सत्त्वरजस्तमोभिः । विहीनं शून्यम् । परं अन्यं, पुरुषं पुमांसम् । पक्षे परमेश्वरम् । प्राप्तुं लब्धुम् । कथं प्रचलिता असि इति हन्त कथय । अत्र ' गुणैर्विहीनं परं पुमांसं " इति पदेष्वर्थश्लेषवशात् " विनयादिशून्यं परपुरुषं " " निर्गुणं परमेश्वरं " इत्यर्थद्वयमुपलभ्यते । तन्मूलकश्च 'पतिव्रता, अथ च परपुरुषं गच्छतीति " विरोधाभासोऽलङ्कारः ॥ १७ ॥

दयितस्य गुणाननुस्मरन्ती
शयने सम्प्रति या विलोकितासीत् ।
अधुना खलु हन्त सा कृशाङ्गी
गिरमङ्गीकुरुते न भाषितापि ॥ १८ ॥

दयितेति ॥ दयितस्य प्रियस्य । ममेत्यर्थः । गुणान् अनुस्मरन्ती या सम्प्रति अधुना मरणसमयेऽपीत्यर्थः । विलोकिता दृष्टा आसीत् । अधुना सा कृशाङ्गी खलु । भाषिता उक्ता । अपि । हन्त । गिरं न अङ्गीकुरुते उत्तरं न ददाति । या मरणकालेऽपि प्रियगुणानन्वदत, साधुना तेनैव प्रियेणोक्तस्योत्तरं न ददातीति महद्दुःखमिति भावः । अत्र ' सम्प्रति ' इति पदेनान्तकालेऽपि प्रियगुणविस्मरणं नाभूदिति व्यज्यते । उदाहृतं चैतत्पद्यं रसगङ्गाधरे ( पृ० ९१ ) मरणाख्यस्य व्यभिचारिभावस्य व्याख्यानावसरे । मरणलक्षणं च तत्रैव—" रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम् " मालभारिणी वृत्तम् ॥ १८ ॥

रीतिं गिरामसृतवृष्टिकरीं तदीयां[1]
तां चाकृतिं कृतिवरैरभिनन्दनीयाम्[2] ।
लोकोत्तरामथ कृतिं करुणारसार्द्रां[3]
स्तोतुं न कस्य समुदेति[4] मनःप्रसारः[5] ॥ १९ ॥

1. र०–°वृष्टिकरीं त्वदीयां । 2. वे०, शे०–कविवरै° । 3. नि०, प०, चा०–कृतिं च सुधारसार्द्रां । 4. र०–ज्ञातुं न कस्यचिदुदेति । 5. वे०, शे०–मनःप्रसादः ।

इति श्रीपण्डितराजजगन्नाथविरचिते भामिनीविलासे करुणविलासः

रीतिमिति ॥ तदीयां तत्सम्बन्धिनीम् । अमृतवृष्टिकरीं गिरां वाचाम् । रीतिं पद्धतिम् । कृतिवरैः कुशलश्रेष्ठैः । अभिनन्दनीयां प्रशंसनीयाम् । तां आकृतिं तत्स्वरूपं च । अथ करुणारसार्द्रां करुणापूर्णाम् । कृतिं कृत्यपरिपाटीम् । स्तोतुं प्रशंसितुम् । कस्य । मनःप्रसारः मनसः व्यापारः । न समुदेति उत्पद्यते । को नामैतादृशः पुरुषो यस्तस्या मत्प्रियायाः सुधाप्लावनकरीं वचनचातुरीं, कविभिः प्रशंस्यामाकृतिं, करुणारसपूर्णां तत्कृतिं च प्रशंसितुं नोत्सुकः स्यादिति भावः । अत्र कविना भङ्ग्यन्तरेण स्वकविताविकटाक्षिता । पद्यमेतत्पाठान्तरेणाक्षेपालङ्कारोदाहरणे पठ्यते रसगङ्गाधरे ( पृ० ४२२ ) ॥ १९ ॥

इति चषकटीकायां करुणविलासः

# ERRATA

## ERRATA OF शृंगारविलास

| Page | Line | Read |
|---|---|---|
| 7 | 1 | वैश्रणस्य |
| ,, | 23 | उपालपन्ति |
| 12 | 17 | 21 |
| 13 | 4 | 22 |
| 16 | 20 | श्रियम् |
| 19 | 19 | परिपतुः |
| 20 | 27 | नि० त्विदानीं। |
| 21 | 19 | गाढमाश्लिष्टा |
| 22 | 12 | त्वामतः। |
| 24 | 3 | सुवर्णवर्णामिति। |
| 29 | 13 | वा०-°रुचं। |
| 30 | 27 | माङ्गलिकीं। |
| 42 | 23 | नन्दन्त्य |
| 47 | 25 | वसुभारार्ति |
| 51 | 20 | मवयवतर |
| 53 | 3 | त्रौ |
| ,, | ,, | गस्त्रि |
| ,, | 14 | दधानाम्। |
| 54 | 8 | यायाः[1] |
| ,, | 19 | द्वितीय— |
| ,, | 22 | विपरीतार्थविदो |

## ERRATA OF करुणविलास

| | | |
|---|---|---|
| 1 | 23 | सत्करोपि। |
| 6 | 21 | रमणी |

PANDIT JAGANNATH'S

# BHĀMINĪVILĀSA

(*A Collection of Stray Verses in Sanskrit*)

## ENGLISH TRANSLATION

## II ŚṚṄGĀRAVILĀSA

1. O beautiful lady, there is not even the slightest fear about the anger of Rāhu (for the moon in the form of your face), nor is there (any possibility of) a contact with a stain or paleness; (but on the contrary) some indescribable lustre of your face, is ever increasing only on all sides.

2. When the tenderness of your limbs (is being spoken of), then a row of lotuses is extremely rough; the lotus stalks are not tender enough for consideration; and (lastly) what mention should be made of the foliage?

3. The inexpressibly charming state of my beloved endowed with fascinating eyes, produces delight in my mind when remembered; the state, which deserves to be praised (lit. saluted) on account of the ear-rings dangling over the surface of the cheeks adorned with a network and drops of perspiration.

4. O friend, having applied a *tilaka* mark of musk (to your forehead), mount the top of the turret with a smiling face in the evening; and so let night-lotuses have a good deal of delight and let the quarters gladden their faces all around.

5. Alas! that sweet and gentle smile, those sighs and that spotless and charming beauty of the face of the lady whose eyes appeared like an evening lotus (i.e. closed) still madden my heart.

# ERRATA

## ERRATA OF शृंगारविलास

| Page | Line | Read |
| --- | --- | --- |
| 7 | 1 | वैश्रणस्य |
| ,, | 23 | उपालपन्ति |
| 12 | 17 | 21 |
| 13 | 4 | 22 |
| 16 | 20 | श्रियम् |
| 19 | 19 | परिपतु: |
| 20 | 27 | नि० त्विदानीं। |
| 21 | 19 | गाढमाश्लिष्टा |
| 22 | 12 | त्वामतः। |
| 24 | 3 | सुवर्णवर्णामिति। |
| 29 | 13 | वा०-°रुचं। |
| 30 | 27 | माङ्गलिकीं। |
| 42 | 23 | नन्दन्त्य |
| 47 | 25 | वसुभारार्ति |
| 51 | 20 | मवयवतर |
| 53 | 3 | ज्ञौ |
| ,, | ,, | गस्त्रि |
| ,, | 14 | दधानाम्। |
| 54 | 8 | यायाः[1] |
| ,, | 19 | द्वितीय— |
| ,, | 22 | विपरीतार्थविदो |

---

## ERRATA OF करुणविलास

| Page | Line | Read |
| --- | --- | --- |
| 1 | 23 | सत्करोषि। |
| 6 | 21 | रमणी |

PANDIT JAGANNATH'S

# BHĀMINĪVILĀSA

(*A Collection of Stray Verses in Sanskrit*)

## ENGLISH TRANSLATION

## II ŚṚṄGĀRAVILĀSA

1. O beautiful lady, there is not even the slightest fear about the anger of Rāhu (for the moon in the form of your face), nor is there (any possibility of) a contact with a stain or paleness; (but on the contrary) some indescribable lustre of your face, is ever increasing only on all sides.

2. When the tenderness of your limbs (is being spoken of), then a row of lotuses is extremely rough; the lotus stalks are not tender enough for consideration; and (lastly) what mention should be made of the foliage?

3. The inexpressibly charming state of my beloved endowed with fascinating eyes, produces delight in my mind when remembered; the state, which deserves to be praised (lit. saluted) on account of the ear-rings dangling over the surface of the cheeks adorned with a network and drops of perspiration.

4. O friend, having applied a *tilaka* mark of musk (to your forehead), mount the top of the turret with a smiling face in the evening; and so let night-lotuses have a good deal of delight and let the quarters gladden their faces all around.

5. Alas! that sweet and gentle smile, those sighs and that spotless and charming beauty of the face of the lady whose eyes appeared like an evening lotus (i.e. closed) still madden my heart.

6. Having heard the pleasant words 'Be endowed with a son' uttered by the elderly persons when a salutation was offered to them early in the morning, the beloved fixed her glances on her lover, that was standing near, with respect accompanied by extreme delight.

7. Oh! I can never forget the eye, beautiful like a slightly open lotus, of the deer-eyed one, feeling a confusion, in consequence of the fear of the elderly persons, in the act of her looking at me.

8. Having in succession imitated (lit. taken away) the excellent beauty of a Badara (jujube), an Āmalaka (myrobolan), a mango, and a pomegranate, your breasts, O dear one, are now striving for surpassing the beauty of the temple of a young elephant.

9. O you, slender-bodied and blessed with beauty, your cheek is, I think, the quarter called the North, since in that place, where there are charming hair (where there is the charming city of Alakā), there surely shines the attractive beauty of the ear (there shines the attractive wealth of Kubera).

10. Never at any time disappears from my mind the grace of the navel—resembling the interior of a lotus—of the lotus-eyed one, (seen at the time) when she, seeing the light of the morning, wished to leave the bed after tying the knot of her garment.

11. The young lady, often imitating my words to her friends under the impulse of sport, assumed the beauty of the lightning (i.e. disappeared immediately) on hearing my voice from a distance.

12. When I talked to her with a feigned anger by ascribing a false charge to her that I may (find an opportunity to) go away, she whose body was bent down, with eyes trembling and filled with tears, had

recourse to every possible word (that she thought necessary to appease my anger).

13. The discretion, resulting from a deep meditation of hundreds of Purāṇas, Śāstras and Smṛtis, is safe so long as the dalliance of the eyes of the fawn-eyed one does not find place in the mind.

14. Coming to the threshold in a startled manner on hearing the words of her friends "the husband is come," when will the deer-eyed one cool my eyes like the moon-light?

15. The beautiful lady, who had directed her eyes towards the gate of the house in the evening which was the appointed time (of my arrival), had her face delighted on seeing me come.

16. When her lover, having touched with his hand the end of her breast, went away, the young lady stood silent, only gazing steadfastly at his lotus-like face with her eyes, the corners of which had become red.

17. Although surrounded by the elderly persons, the young lady cast a glance towards me (by creating an opportunity to do so) under the charming pretext of scratching her cheek, slightly displaying (in doing so) her golden arm resembling a lotus-stalk.

18. The lady, whose limbs were stooping, being gently struck by me with the bud of a lotus while she was in the midst of elders, became confused when she saw me with her ear-rings slightly shaking and her creeper-like eyebrows bent down.

19. When I show submission to you, there spreads a redness in your eyes (owing to anger): if I prostrate before you, there flows down, alas! continuous stream of tears; and if I go away, there is fear of your life (thus) I do not know, O deer-eyed one, in what way you should be propitiated.

20. O happy sleep, who indeed but you can win over to me the slender-bodied one who has cast off her ornaments, who is continuously shedding tears, and who reproaches me with the words 'O you, ruthless and ocean of false words, leave off the end of my garment; I have well seen what your love is."

21. Seeing the smiling face of the young woman on the bank and an opening lotus in the water (of a lake), the line of young bees greedy for honey, being confused, runs in both the directions.

22. Having observed on the bosom of her lover a mark of the necklace of a rival woman, the young lady at once withdrew her creeper-like arm that was placed round his shoulder.

23. I long remember the (sexual) intercourse of my beloved, wherein her neck was a little bent down, her lotus-like and affectionate eyes were slightly closed, and her limbs were languid on account of a number of heavy breathings.

24. When I, who had gone away in a fit of anger, came to the door after the lapse of two *yāmas* (six hours) and announced a false name, she, having known me positively, came out slowly from the apartment like the goddess of wealth.

25. Placing moss on her bosom, and often tossing her limbs here and there, this lady directs extremely helpless glance on the face of her friends when they utter the name of her lover.

26. I call to mind the lotus-like smiling face with the neck turned back and with the eyebrows bent down of the lady who, surrounded by her elders, proceeded to her house from this very place.

27. How indeed, tell me, can there be produced any hope for my life; since the winds, emitted by

snakes of the Malaya mountain, blow, (killing) like the god of death ; and even this bee, humming sweetly on the top of a mango tree, takes away (lit. drinks up) my consciousness ?

28. When I placed before the cooing pigeon his mate that was going away by stopping her forcibly, she (my beloved) slowly bent down her smiling lotus-like face towards me.

29. O lady, with eyes as beautiful as those of a Cakora bird, the lustres of your face dispel the darkness stationed in the quarters, remove the heat of those that are afflicted by it, and obscure the beauties of a lotus.

30. The young lady, with her body all horripilated, looking at the marks of my nails between her two jar-like breasts, at once entered the house, with limbs expressing fear and bent down, when she saw me with my face placed in a window (looking at her).

31. On that occasion the slender-bodied one, lying on my bosom placed her cheek in a favourable position with regard to my face (so that I may find no difficulty in kissing it), and thus obscured the incomparable beauty of the sovereignty of Indra (in my estimation).

32. Even a cloud became merciless towards me just at the time when I was touching the chin of the fair-eyed one, that was presented to me in the last quarter of the night (in a dream) by Sleep that was frequently requested to do so.

33. Alas ! even a hundred Śrutis or the Bhārata, studied oftentimes, do not effect an alleviation of the pain to that extent to which it is immediately done even by this charming denial proceeding from the

lotus-like face of the beloved fatigued with the sport (of sexual intercourse).

34. While your cheek was easily surpassing (lit. devouring) the Lavalī plant by its lovely lustre, great distress fell all around on the collection of white lotuses (lest they also might be similarly devoured, i.e. surpassed).

35. The beauties of the lotus-like eyes of Jānakī while falling on Rāma contract on account of shyness due to the advent of his youth and expand on account of being tempted by his good nature, valour, strength and charm.

36. Will this youth after fixing a string to the bow of Śiva and (thus) removing the anxiety of his friends marry the daughter of the King of Mithilā without any obstacle or not ? (Such were the thoughts of the people of Mithilā).

37. A newly wedded bride caught in the fold of arms by her husband in private, trembles exceedingly like a young hind caught into a net all of a sudden.

38. The Upaniṣads have been studied ; and even the Gītā has, alas ! been made a subject of meditation. Still, Oh ! the moon-faced one does not go out of the abode of mind.

39. Mad (on account of separation), she, holding the hand of a friend of hers, thus speaks to her (mistaking her to be her lover): O cruel-hearted lover, I shall never let you go henceforth.

40. A great sapphire (i. e. Kṛṣṇa) was found in the middle of the street by a cowherd girl wandering till night for selling butter-milk with the desire of (getting some) cowries.

41. Alas! (in the mind) of the fair-eyed one there arose a dislike for the whole world including even her own body, while she was tasting the beauty of the face of Kṛṣṇa with a view to remove her dislike for beauty.

42. O wretched one, how do you say foolishly that your body is of the colour of gold? For the latter can be compared with you only when it falls into the fire.

43. Victorious is the delight of the eyes of a newly married couple united together for the first time, (eyes) which meet together out of eagerness and are again contracted through shame.

44. A salutation to you, the indiscriminate fortitude of the youthful, that receive smallness (levity) from the breast of lotus-eyed women by giving it greatness (gravity)!

45. While the childhood was passing away, and the youth was budding forth, the voice, gait, and dalliance of the fair-eyed one assumed an extreme sweetness.

46. The two eyes which have the good fortune of possessing an endless beauty of the woman with her limbs bent down, are tremulous in consequence, as it were, of the absence of the delight of seeing each other.

47. The deer-eyed one prevented me, who intended to strike her in the midst of her elders with pieces of a clod of earth, (from doing so) by holding the tip of her tongue between (the two rows of) her teeth and by rolling her eyes.

48. She, who could never before bear even the contact of a glance remained silent even though embraced by her lover who intended to go away (to some distant place).

49. Although the beloved has (purposely) turned away her face (from her lover) through anger, still she, pretending to be asleep, places her cheek on his lotus-like hand in such a manner that the arm was raised up and the neck dropped through lassitude.

50. This bee, whose sole mind is rendered unsteady by a desire (to lick the honey) of the two fully opened lotuses in the form of your eyes, (being fixed up between the two) shines on your fore-head under the pretext of the musk mark.

51. The lotus-eyed one, made somehow or other to lie down during the night by the side of her lover by elderly women, thinks with apprehension "What should follow ?"

52. The god of love has his mind vacant with anxiety (i. e. does not know what to do to influence your mind); your friends have lost their splendour (since they cannot persuade you); and the lord of your life is distressed on account of his love; but let all this consideration be set aside. This, however, I tell you, if you think my advice to be beneficial, that you should not, O foolish one, be head-strong, otherwise the husband of Rākā (the moon) will vanquish (surpass) this face of yours.

53. O beautiful ear-ring, victorious is your all-praiseworthy birth, since you taste (the pleasure of) the movements, which are the fruit of your good actions, of the lotus-like hands of the deer-eyed one who, to adorn her ears, incessantly experiences fresh pain and turns her face aside with a hissing sound.

54. The night has come; the space between the quarters is pervaded by the rays of the lord of the night (moon); and other women are adorning their

bodies with numbers of ornaments in their houses; still you, O foolish one, do not lessen your haughtiness even in the slightest degree. (And), alas! your body, much more slender than even a young lotus-stalk, is distressed by your anger.

55. Alas! the young lady looks at the lord of her life with tremulous eyes, with her breasts wet with the falling tears, and with her lower lip faded with sighs, by placing her lotus-like face at a window in her private apartment, while other persons (of the house) are uttering auspicious words at the time of his departure (to some distant place).

56. O you, whose body is of a golden colour, if you expand the lotus-like face of yours (i.e. if you smile), this moon will seem poor, the full-moon night will fade away, dullness will of its own accord spread all over the forest of night-lotuses, the space between the quarters will be illumined, and the assembly of your friends will be delighted.

57. There blow winds that are afflicting, as if because they proceed from the mouths of the best of serpents (dwelling) on sandal trees; these red mango trees burn the eye; and here the cuckoos scatter poison in the form of their cooing. (Under such circumstances) how should the young lady, whose body is tender like the young lotus stalks, hold on her life?

58. The disk of the moon, as charming as the umbrella of king Cupid arose just while the lotus-eyed one was engaged in the thoughts as to how her pride would fearlessly hold its position in her heart at a time when the night, which rendered the mind of deer-eyed women void of sleep (i.e. full of love), had actually come.

59. The beloved, wanting to conceal from her lover the morning twilight, closed sportively through affection his eyes with her hand. But he came to know of the sunrise still better by means of those breezes which were fraught with the fragrance of lotuses.

60. The eyes of my fawn-eyed beloved were steady with wonder ( when she saw me ) at a distance; they became tremulous after a partial recognition; afterwards their lustre grew on all sides; and when I soon approached the assembly of the elders, their pupil began to roll through shyness.

61. How is it possible to repeat the words, (sweet) like a flood of juice coming out of ( ripe ) grapes breaking open, of the lotus-eyed one, whose lotus-like face, resembling a bunch of flowers, had the beauty of a smile inside, when I slightly kissed her cheeks that became horripilated ?

62. O moon, the Creator, that made you *Rājā* thoughtlessly ( king, also a synonym of the moon ), has lost all his power owing to his old age ; ( and ) now the god of love, the new creator, means to give the sole sovereignty of this world to the ever beautiful face of the lady whose eyes are like those of an intoxicated Khañjarīṭa bird.

63. A long sigh from the mouth, pallor on the cheek, and a vacant mood of the mind were experienced by high-born ladies from the time that they saw the inexpressible beauty of the son of Nanda, that dropped honey (i. e. was sweet like honey) and knew the magic of attracting all eyes.

64. A high-born lady who had her cheeks perspiring and horripilated by hearing the greatness of Kṛṣṇa in the midst of the cowherd elders at the time

when Kāliya's death by him was narrated, at once described with wonder the mode of the dancing (of Kṛṣṇa) on the hood of the lord of serpents, emitting flames of poison.

65. When the childhood of the slender one was gradually waning away from her body, and the husband of Rati (Cupid), the lord of all, was about to come (to reside) there, there at once appeared by his (Cupid's) order an identity with the full moon in the face, with lotuses in the eyes and a real absence of difference between nectar and an oblique smile.

66. She, who, like the digit of the new moon, has only her beauty still remaining, lying on a bed of moss, receives her lover, although he comes near, only with her sweet glances.

67. The young lady whose heart was afflicted with separation and who was crying out 'my dear lover,' 'my dear lover,' looks at him, even when he comes near, like one that has no acquaintance with him.

68. The grace of the lower lip obscuring (the redness of) the tenderness of sprouts, the beauty of the face surpassing that of the moon, and the incomparable body of her whose eyebrows are beautiful—all this does not speak of the creation of this creator (i. e. this must have been the creation of some other creator).

69. Alas! the lord of Laṅkā, tormented with the pain of separation from Vaidehī (Jānakī), now talks incoherently and now assumes silence, now casts a vacant glance towards all things, fetches a long sigh and has not even the slightest strength in his limbs.

70. No sooner did the orb of the moon rise than the multitude of separated persons began to weep at

once and the god of love, whose command is borne like the crest-jewel by all women, became delighted.

71. 'Look at this matchless lake filled with lotuses.' 'Friend' (replies the other), 'do not say this; the eyes of women burn me.'

72. The red hue of the corners of the lotus-like eyes of the beautlful-eyed one was removed (lit. drunk up) by the words of her lover to this effect: Bhāmini, the line of clouds has arisen, and still you do not leave off your anger!

73. O beautful one, seeing your smiling face, bees are extremely delighted on account of their mistaking it for a lotus; and, O dark-eyed one, Cakora birds move about their beaks for a long time on account of taking it to be the deer-marked moon.

74. This is not a smile, but the blossoming (of flowers) which is naturally attractive. And who says that this is a face? (For) this is a flower from which fragrance is issuing forth. It is false that this is a pair of breasts; since this is a couple of fruits possessing the lustre of gold. (And) this is a charming creeper, worthy of being bent down by clusters of bees, and not a woman.

75. Here rises up the sun, swallowing this earth with his rays, hot like embers; through a hole, produced in his centre by several lords of the earth killed face to face on a battlefield, there appears the blue colour of the sky. What fool in this world has set him down for the hare-marked moon?

76. What appears as black and white in the eyes of the fair-eyed one is not their real form; but it is obviously poison and nectar. (For) if it be not so, how is it that youths fall into a swoon or get delighted to

a great extent as soon as they (eyes) are cast (towards them)?

77. Is this a lotus, or the moon, or the face of the deer-eyed one, where something like a bee, or a deer, or an eye is shining?

78. O dear one, these are the filaments (of a lotus) that shoot here under the pretext of the lustres of your teeth, and these are the bees, longing for the honey, that shine here under the form of (your) hair.

79. How should we compare a lotus, from which its beauty disappears during the night, even with a part of your face, which is full of delight on account of its charm which is ever pleasing to the eye?

80. (It is) she who takes away the beauty of flowers by her softer limbs, while as it is my life that the flower-arrowed god (of love) overpowers with rows of his arrows.

81. She, whose feet are tender, is wearied by the burden of her hips, while passing by the road; (and) alas! I am afflicted being unnerved on account of seeing her form on all sides.

82. The full-moon night appeared like the fire at the universal destruction, and the space in the house (became) like an ocean to the women of Gokula, that suffered the pain caused by a burden of their lives, when the enemy of Mura (Kṛṣṇa) was about to go to Mathurā.

83. When I came to the private apartment, and, aftery slowly dismissing the maid-servants by means of signs, began to fan the lotus-eyed one who was lying in bed in anger, she recognised me but pretending not to know; and therefore feigning to close her

eyes, placed my hand on her bosom with the words, 'O friend, you are tired.'

84. The gait of that fawn-eyed one obtained slowness ( became slow, came almost to an end ) with childhood , the Bimba-like lower lip became red ( full of love ) with the mind , and more than all her hips became extended ( greater ) along with cupid.

85. Her breathing is to be known by an inference, the limbs are cold ; and the sight motionless ; O, friend, let this story about her be set aside ; you speak of something else.

86. The hand of the daughter of the earth ( Sītā ), full of perspiration and tremour, when held in his hand by Rāma, assumed the beauty of a morning lotus shaken by drops of snow and gentle breeze.

87. By reason of an excess of sweetness your lower lip, O young one, exceedingly surpasses a coral plant, although it is red, and the foliage, although it is softer.

88. The two eyes may here indeed bear the multiform beauty of the glances of Khañjana birds ; but how should the beautiful face of the fair-eyed one be compared with a lotus whose beauty is transient ?

89. The line of the drops of perspiration produced in the course of the sexual intercourse, which (line) surpassed a collection of jewels ( in beauty ), and the golden-coloured forehead of the fair-eyed one heightened mutual beauty to an inexpressible extent.

90. Afraid of a stroke of the thunderbolt in the form of glances of persons other than her husband, Sītā entered the heart of her dear ( husband ), and he too entered hers at once through the fear of a female serpent in the form of another woman.

91. O you, whose eyes are beautiful like a blue lotus, your breasts, after easily exceeding the beauty of a citron, and throwing into the background beautiful golden jars, are now indeed competing with the golden mountain (Meru).

92. O golden-bodied one, if you buy the lives of men by giving (them) your limbs it is but proper (*i. e.* justifiable); but it is not at all proper if you do so by giving them only the corner (a glance from the corner) of your lotus-like eyes.

93. At present this audacious pearl in your nose subdues (lit. lowers down) through enmity your nose that feels great delight by its company with the teeth that have vanquished the beauty of pearls.

94. Do not, I say, be at once puffed up with pride by often looking at your own fairness; (for), O foolish one, do you not see that heaps of gold, of the same colour with your body, are rolling in every house?

95. O friend, how do you respectfully listen to a comparison of your breasts, made by unrestrained poets, with the temples of an elephant? Surely, women take a wrong view of things.

96. A certain lover, treated with contempt in anger by the deer-eyed one when he was going to embrace her and therefore sleeping with his face turned away from her was embraced for a long time after kissing him by her, being distracted that he was perhaps offended.

97. At the sight of Hari, the women of Vraja covered their moon-like faces with the ends of their upper garments, but the knot of the garments round their waists was loosened all of a sudden on account of tremour caused by love.

98. The whiteness of the teeth, concealed by the redness ( produced ) from a contact with lower lip, became again visible, being helped out by a white smile of the lady who had beautiful eyelashes.

99. Tell ( us ), O deer-eyed one, by what means we should detect a *tāmbūla* in your mouth, which is fragrant like the interior of a lotus, of which the lower lip surpasses a Bimba fruit ( in redness ), and of which the teeth are like jewels.

100. Oh ! the beloved, unable to satisfy her desires, although lying down near her lover, looks at his lotus-like face with her eyes slightly closed ( on account of bashfulness ).

101. ' O slender-waisted one, why are you emaciated ? ' ' What have you to do with the affairs of others ? ' ' Still do tell it for my delight. ' ' O traveller, your wife will tell that to you. '

102. Victorious are the glances of the fair-eyed one, which were harsh owing to extreme anger towards me, for my having asked for (a kiss of) her lower lip, while bees were clustering there through a desire for the fragrance of her lotus-like face.

---

# ENGLISH TRANSLATION
## OF
## III KARUṆAVILĀSA

1. Alas! to whom will you, O mind, disclose your condition and who will remove your pain now by soothing words that the fate is adverse (lit. has its face turned away from me) and the jewel of friends (wife) gone to heaven?

2. Alas! how is it that you, O love, do not, suddenly coming forth with modesty (to receive me) as before, gladden (lit. cool) me even in the slightest degree by means of your smiling and affectionate looks and your sweet words, which are the ministers of love?

3. Even all the objects of senses have been forgotten, and learning too, acquired by exertion, has turned away its face from me (has left me); only the fawn-eyed lady, never disappears from my mind like a deity presiding over it.

4. Indeed, while hastily entering the auspicious state of salvation you have, O kind one, left off even that kindness (which I knew you to be possessed of); since, O lady, you do not look at me with your glances, whose beauty could break down the pride of a blue lotus (opening) in the morning.

5. My heart breaks into hundred pieces, when I think how you, O beautiful one, should now have ascended the heaven without me, you who at the time of the marriage ascended a piece of stone by holding my hand for support through the fear about the slipping of your feet.

6. Never does that lady disappear from my mind who, like my poetry, was free from faults, possessed of qualities (*mādhurya* etc.), filled with sentiments and affection (*rasas* and *bhāvas*), adorned with ornaments (figures of speech), endowed with a voice (rich in a flow of words) soft to the ear, and charming to the mind.

7. O you, dear as my life, the entire anxiety of lotuses has subsided, the orb of the moon has attained an unrivalled grace, and indeed the noise of cuckoos has arisen, since the time you went away from this place.

8. Having given (me to enjoy) for some days the pleasures worthy of the great Indra, resembling (in their transitory nature) the flashes of lightning, you have suddenly gone away from the hand of me, an unfortunate one, like sovereignty (from the hand) of a king, abandoned by policy.

9. O lady, whose thighs resemble the back of the hand from the wrist to the root of the smallest finger, were you influenced by anger, caused by some (improper) action of mine, that you suddenly went away to the distant house of your friend *mukti* (final beatitude), and abandoned me although you were a devoted wife ?

10. O you of a pleasing character, how will my good poetry be charming and attractive to the mind in the absence of those sports of yours, which, sweet like the essence of nectar, once transformed themselves into verses in my mind ?

11. O tremulous-eyed one, now that you are dead, the full-moon night attains the perfection of beauty, which (night) was useless for (the purpose of)

poets, so long as the earth was adorned with the lustre of your sweet smiles.

12. That beloved of mine, able to satisfy all desires, the deity presiding over my house, ever united with auspicious things, who constantly worshipped me with blooming lotuses in the form of her eyes (glances) after sprinkling me with nectar in the shape of a soft smile, never disappears from my mind.

13. O fawn-eyed lady, having ascended the heaven how, indeed, do you now throw the dust of the earth on me, whom you, while living in this world, raised to heaven (i. e. gave me to enjoy the pleasures of heaven) by calling me 'O pleasant one,' 'O lord,' 'O charming one'?

14. A brilliant beauty, an unparallelled nature, an uncommon modesty, and a beneficial conduct—having abandoned these qualities and also me, that are (consequently) rendered helpless, how have you, alas! O beautiful one, gone to the next world?

15. O lotus-eyed one, although you were attractive, I am sure, the (funeral) fire has burned you, on account of its being influenced by anger, because you always threw into the back-ground its flames everywhere by means of your lustre, superior to that of gold, and your extreme purity.

16. She was the remover of the pain of the eyes like a pencil of camphor, the principal source of delight to the neck like a garland of blooming lotuses, an object of delight to the mind like a beautiful verse, and fit to be honoured by (other) women like a goddess.

17. How, tell me, O love, have you, who did not look affectionately at any other person than your hus-

band even in dream, now set out, alas! for obtaining another man (the highest Brahman) that is void of qualities (*sattva*, *rajas*, and *tamas*).

18. Alas! the slender-bodied one, who was just seen to be recollecting the qualities of her lover even on her death-bed, does not now utter a word, although questioned.

19. In whose mind will not an eagerness arise to praise her mode of speech pouring down nectar, her form deserving to be praised by the best men, and her uncommon actions full of compassion?

---

# BHĀMINĪVILĀSA

## NOTES

### VILĀSA II

### ŚṚṄGĀRAVILĀSA

1. In this verse we have the *dhvani* of *vyatirekālaṅkāra*. The poet here establishes the superiority of face (the *upameya*) over the moon (the *upamāna*). The moon is afraid of Rāhu, has got a spot and paleness and wanes during the dark half of a month. The face of the lady, however, has no such blemishes and its beauty is always on the increase. Here, the contrast is not *expressed* by giving inferior epithets to the *upamāna*. Cf. यत्र तूपमानतद्विशेषणोपादानमन्तरेणैवोपमेयविशेषणैः 'सुन्दरो देवदत्तः' इत्यादाविव वस्तुस्थितिप्रकाशनेन कृतार्थैरप्याकृतविशेषेण स्वविलक्षणविशेषणविशिष्टधर्म्यन्तरापेक्षया वर्ण्यस्योत्कर्षः प्रतीयते स व्यञ्जनाविषयः। (R.G.)

2. Supply the words अनुभूयते or प्रस्तूयते and तदा or तर्हि after the third line, and read it before the first and second lines. When even सरोजमाला and मृणाल cannot bear comparison with the delicacy of a lady's limbs, then even the mention of sprouts is inappropriate. The poet has given this verse as an example of माधुर्यगुण (शब्दगत) which is defined as—संयोगपरह्रस्वातिरिक्तवर्णघटितत्वे सति पृथक्पदत्वं माधुर्यम्।

3. In the third line, Acyutarāya reads स्मरणे न and construes मदिरेक्षणायाः कापि (अनिर्वचनीया) मे मनसि स्मरणे (जायमाने सति) आनन्दं न अङ्कुरयति।—स्मरणे जायमाने मन्मनसि मनसिजपरिताप एव भूरितरं भवतीति भावः। He criticises the reading स्मरणेन in the instrumental:-- यथाश्रुतभट्टास्तु यथाश्रुतमेव स्मरणपदं तृतीयान्तं कृत्वा योजयन्ति। तेषां स्मरणस्य परोक्षैकविषयत्वेनावश्यं वियोगकालिकत्वस्य वाच्यत्वात्तदानीं निरुक्तस्मरणस्य

'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इति । पद्यमिदं रसगंगाधरे (पृ०२५७) ससंदेहालंकृतावुदाहृतम् । पुष्पिताग्रावृत्तम् ॥

तरणितनया किं स्यादेषा न तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः ।
इति रघुपतेः कायच्छायाविलोकनकौतुकै-
र्वनवसतिभिः[1] कैः कैरादौ न संदिदिहे जनैः ॥ २३ ॥

[1]. वै०—कायच्छायाविलोकनतत्परैरुदितकुतुकैः ।

तरणितनयेति ॥ वनवसतिभिः वने वसतिः निवासः येषां तैः । कैः कैः जनैः । रघुपतेः श्रीरामचन्द्रस्य । कायच्छायाविलोकनकौतुकैः कायस्य शरीरस्य छाया कान्तिः तस्या विलोकने कौतुकं विस्मयः येषां तैः । इति वक्ष्यमाणप्रकारेण । आदौ पूर्वं । न संदिदिहे संदेहः कृतः । तं संदेहप्रकारं वक्ति— । एषा अग्रतो दृश्यमाना । तरणितनया तरणेः सूर्यस्य तनया कन्या यमुनेत्यर्थः । स्यात् भवेत्–इति संशये निश्चयो जायते–न । यतः सा यमुना । तोयमयी जलमयी । राममूर्तिस्तु न तथा । मरकतमणिज्योत्स्ना मरकतमणेः हरिन्मणेः ज्योत्स्ना कान्तिः । वा स्यात्–पुनर्निश्चयो भवति– न । यतः सा मधुरा कुतः । राममूर्तिस्तु मधुरा । अत्र वर्णसादृश्यात् वनवासिभिः द्विः संदिदिहे–पूर्वं यमुनाभ्रान्तिः, पुनर्जलाभावदर्शनात् तदभावनिश्चयः—पुनः मरकतमणिज्योत्स्नासंदेहः, पुनस्तत्रमाधुर्याभावदर्शनात् तदभावनिश्चयः । अतःनिश्चयगर्भससंदेहालङ्कारोऽत्र । उदाहृतं चैतद्रसगंगाधरे ( पृ० २५७ ) अस्मिन्नेवालंकारे । हरिणी वृत्तम् । तल्लक्षणं–" रसयुगहयैः न्सौम्रौस्लौगो यदा हरिणी तदा " इति ॥ २३ ॥

**चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः ।**
**गुरुनिःश्वासितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥२४॥**

**चपलेति** ॥ इयं **जलदात्** मेघात् । **च्युता** पतिता । **चपला** विद्युत् । **वा** अथवा । **तरुमुख्यात्** वृक्षमुख्यात् कल्पवृक्षादित्यर्थः । च्युता **लता** कल्पवल्ली । **इति संशये निमग्नः** । **कपिः** हनूमान् । **मनीषी** बुद्धिमान् । **अथ** । **गुरुनिःश्वासितैः** गुरुभिः दीर्घैः श्वासैः । **ताम्** सीतां । **वियोगिनी** रामचन्द्रात्

विरहिता । इति निरणैषीत् निश्चितवान् । अत्र सीतायाः कनकवर्णत्वेन कृशत्वेन च तां दृष्ट्वा हनुमतो मनसि चपलायाः कल्पवल्ल्याश्च संदेह उद्‌भूत स च तस्या दीर्घश्वासदर्शनानन्तरं सा सीतैवेति निश्चयेन तिरोहितः । अतः निश्चयान्तः ससंदेहालङ्कारोऽयम् । एतदुदाहरणे च पठ्यते रसगंगाधरे ( पृ० २५८ ) पुष्पिताग्रा वृत्तम् ॥ २४ ॥

भूतिर्नीचगृहेषु विप्रसदने दारिद्र्यकोलाहलो
नाशो हन्त सतामसत्पथजुषामायुः शतानां[1] शतम् ।
दुर्नीतिं तव वीक्ष्य कोपदहनज्वालाजटालोऽपि स-
न्किं कुर्वे जगदीश यत्पुनरहं दीनो भवानीश्वरः ॥ २५ ॥

[1] प०, वै०, शे०, बा०--समानां

भूतिरिति ॥ नीचगृहेषु अधमगृहेषु । भूतिः संपत्तिः । विप्रसदने विप्राणां ब्राह्मणानां सदने गृहे । दारिद्र्यकोलाहलः दारिद्र्येण निर्धनत्वेन कोलाहलः बालानां रोदनरवः । हन्त इति खेदे । सतां सन्मार्गावलम्बिनां पुरुषाणाम् । नाशः अकालमृत्युः । असत्पथजुषां असत्पथं असन्मार्गं दुर्मार्गमिति यावत् जुषन्ते सेवन्ते तेषाम् । शतानां शतं सहस्रं वर्षाणि । आयुः जीवनम् । एतादृशीं तव दुर्नीतिं अन्यायम् । वीक्ष्य दृष्ट्वा । हे जगदीश । कोपदहनज्वालाजटालः अपि सन् कोपः एव दहनः अग्निः तस्य ज्वालाभिः शिखाभिः जटालः पूर्णः, क्रोधाग्निपूर्ण इत्यर्थः । किं कुर्वे किं करोमि, न किमपि कर्तुं शक्तः अस्मि । कथमिति चेत्--यत् यस्मात् कारणात् । अहं दीनः अशक्तः । भवान् च ईश्वरः सर्वशक्तिमान् । हे भगवन् एष तवान्यायो यत् नीचानां संपत्तिः किन्तु ब्राह्मणानां गृहे अशितव्यमपि नास्ति, सज्जनाः शीघ्रं म्रियन्ते, दुर्जनाः पुनश्चिरजीविनो भवन्ति, दृष्ट्वेममन्यायं महान् मे क्रोध उत्पद्यते किन्तु असमर्थत्वात्, ईश्वरस्य तव कार्यप्रतीकारं कर्तुं न शक्नोमि--इति भावार्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशंकं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां[1]
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥२६॥

१. बा० °भाग्यभाजां नृपाणाम्.

आ मूलादिति ॥ अधुना ग्रन्थोपसंहारश्लोकाः । रत्नसानोः उत्तरदिशास्थस्य मेरुपर्वतस्य । मूलात् आ मूलपर्यन्तं । मलयवलयितात् मलयाख्येन दक्षिणदिशास्थेन पर्वतेन वलयितात् वेष्टितात्। पयोधेः समुद्रस्य कूलात् आ तीरपर्यन्तं । उत्तरतः दक्षिणपर्यन्तं अखिले भारतवर्षे इत्यभिप्रायः । यावन्तः । काव्यप्रणयनपटवः काव्यानां प्रणयने रचने पटवः चतुराः । सन्ति । ते सर्वे । विशंकं निर्भयं, निष्पक्षपातमिति यावत् । वदन्तु कथयन्तु । मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां मृद्वीका द्राक्षा तस्याः मध्यात् निर्यन् निर्गच्छन् मसृणः कोमलः रसः तस्य झरी प्रवाहः तस्य माधुरी मधुरता तस्याः भाग्यं सौष्ठवं, ऐश्वर्यं वा, तत् भजन्ति सेवन्ते इति तासां । वाचां वाणीनां । आचार्यतायाः गुरुतायाः । पदं स्थानं । अनुभवितुं उपभोक्तुं । मदन्यः मत्तः पंडितराजात् अन्यः । कः धन्यः भाग्यशाली । अस्ति इति । अहमेवाखिले भारतवर्षे काव्यरचनाचतुर इति जगन्नाथस्य गर्वोक्तिः । उदाहृतं च पद्यमेतत् रसगंगाधरे ( पृ० ८४ ) गर्वाख्यस्य भावस्य वर्णने । लक्षणं चास्य भावस्य तत्रैव– ‘ रूपधनविद्यादिप्रयुक्तात्मोत्कर्षज्ञानाधीनपरावहेलनं गर्वः ’ इति ॥ स्रग्धरावृत्तम् ॥ २६ ॥

गिरां देवी वीणागुणरणन[1]हीनादरकरा[2]
यदीयानां वाचामसृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते–
रधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥ २७ ॥

[1]. वा० °गुणरसन°. [2]. वा० °कला.

गिरामिति ॥ गिरां वाणीनां । देवी अधिष्ठात्री–भगवती सरस्वतीत्यर्थः । वीणागुणरणनहीनादरकरा वीणायाः गुणाः तन्त्रीनामकानि लौहसूत्राणि तेषां रणने वादने हीनादरः शून्याभिलाषः करः हस्तः यस्याः सा । यदीयानां यस्य पंडितराजस्य संबन्धिनीनाम् । वाचां वाणीनाम् । अमृतमयं रसम् । आचामति आस्वादयति । तस्य पंडितपतेः जगन्नाथस्य । श्रवणसुभगं श्रवणयोः कर्णयोः सुभगं मधुरम् । वचः आकर्ण्य श्रुत्वा । मूर्धानं शिरः । अधुन्वन् अकंपयन् । ‘ महारम्यतममिदमिति संतोषेण शिरःकम्पनं हि लोके

तत्सूचकचेष्टात्वेन सुप्रसिद्धमेव ' इत्यच्युतरायः । यः अस्ति सः । अयं नृपशुः ना मनुष्यः पशुरेव । अथवा । पशुपतिः शंकरः । मदीयकविता-माधुर्यं पातुं सरस्वत्यपि बद्धादरा स्ववीणावादनकर्म त्यजति, एतादृशीं मत्कवितां श्रुत्वा यः कश्चिद्धर्षविस्मयाभ्यां शिरो न कंपयति, सोऽरसज्ञत्वात् पशुतुल्यो नरः, अथवा रागद्वेषादिशून्यो मुक्तः साक्षात् शंकरो ज्ञेय इति भावार्थः ॥ अतिशयोक्तिरलङ्कारः । शिखरिणीवृत्तम् ॥ २७ ॥

**मद्वाणि मा कुरु विषादमनादरेण[1] ।**
**मात्सर्यमग्नमनसां[2] सहसा[3] खलानाम् ।**
**काव्यारविन्दमकरन्दमधुव्रताना-**
**मास्येषु धास्यसितमां[4] कियतो[5] विलासान् ॥ २८ ॥**

१. बा.०–मद्वाचमङ्कुशविषादमनादरेण २. र०–॰मन्दमनसां । बा०–०भुग्न-मनसां । ३. बा०–तरसा. ४. बा०–धास्यतितमाम् । र०–यास्यसि सताम् ५. नि०–कति नो । र०–विपुलं विलासम् ।

**मद्वाणीति** ॥ हे **मद्वाणि** । **मात्सर्यमग्नमनसां** मात्सर्ये असूयायाम् । परोत्कर्षासहिष्णुत्वे इत्यर्थः, मग्नं मनो येषां तेषाम् । **खलानां** दुष्टानाम् । **अनादरेण** दुष्टैः कृतेनेति तात्पर्यम् । **सहसा विषादं** दुःखम् । **मा कुरु** । यतः । **काव्यारविन्दमकरन्दमधुव्रतानां** काव्यमेव अरविन्दं कमलं तस्य यो मकरन्दः रसः तस्य पायिनां मधुव्रतानां भ्रमराणां—काव्यास्वादनतत्पराणा-मित्यर्थः । **आस्येषु** मुखेषु । **कियतः** बहूनित्यर्थः । **विलासान्** विभ्रमान् । **धास्यसितमां** अतिशयेन धारयिष्यसि । ईर्ष्यालुभिरनादृतासीति मा दुःखिता भूः, सहृदयास्त्वां ध्रुवमास्वादयिष्यन्तीति स्ववाणीं प्रति पंडितराजस्योक्तिः । अत्र खलान् प्रत्यवज्ञा सूच्यते । उदाहृतं चैतत्पद्यं रसगंगाधरे ( पृ ५०९ ) अवज्ञालङ्कारे । वसंततिलकावृत्तम् ॥ २८ ॥

**मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा**
**कदाचित्केषांचिन्न खलु विदधीरन्नपि मुदम् ।**
**ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो**
**न येषामानन्दं जनयति जगन्नाथभणितिः ॥ २९ ॥[1]**

1. Some editions read this verse after the 27th.

मक्षिकेति ॥ मधु, द्राक्षा, साक्षात् अमृतं, अथ वामाधरसुधा योषिदधरामृतं–यद्यपि सर्वाण्येतानि सर्वेषां सदा हर्षमुत्पादयन्ति, किन्तु कदाचित् केषांचित् खलु–अर्थात् कस्मिन्नपि विशिष्टे काले, मनसो विरक्तभावे वा । मुदं हर्षम् । न विदधीरन् न जनयेयुः । अपि । ते मन्दमतयः मन्दबुद्धयः । अहहेति खेदे । जीवन्तः अपि ध्रुवं मृतका एव । येषां जगन्नाथभणितिः जगन्नाथवाणी । आनन्दं न जनयति । अत्र स्वकवितायाः मध्वादिभ्यः सर्वेभ्य आधिक्यं दर्शितम् । व्यतिरेकालङ्कारोऽयम् । शिखरिणीवृत्तम् ॥ २९ ॥

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रव-
न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ।
काव्यं तर्हि सखे सुखेन कथय[1] त्वं संमुखे मादृशां
नो चेद्दुष्कृतमात्मना कृतमिव स्वान्ताद्बहिर्मा कृथाः ॥ ३० ॥

[1]. प०–D. रचय ।

निर्माण इति ॥ हे सखे । यदि । अत्यन्तपाकद्रवन्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां अत्यंतपाकेन द्रवत् क्षरत् यत् मृद्वीकायाः द्राक्षाया मधु क्षौद्रं तस्य या माधुरी मधुरता तस्याः यो मदः गर्वः तस्य परीहारे अपहरणे उद्धुराणां अग्रेसराणां गिरां वाणीनाम् । निर्माणे रचने । नितरां अत्यन्तं । मार्मिकः तत्त्वज्ञः । असि । तर्हि त्वं मादृशां संमुखे काव्यं सुखेन कथय । नो चेत् । आत्मना स्वयं । कृतं आचरितं । दुष्कृतं पापम् । स्वान्तात् मनसः । बहिः मा । कृथाः कुरु । यद्यलौकिककाव्यनिर्माणे कुशलोऽसि तर्हि निर्भयं मादृशां संमुखे काव्यं पठ, अन्यथा तत् स्वमनस्येव मुद्रयित्वा तूष्णीं तिष्ठेति भावार्थः । इयं कविगर्वोक्तिः । पद्यमिदं रसगंगाधरे ( पृ० ६३ ) पठ्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

धुर्यैरपि माधुर्यै[1]र्द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम्[2]
वन्द्यैव[3] माधुरीयं पंडितराजस्य कवितायाः ॥ ३१ ॥

[1]. बा०–माधुर्ये । [2]. बा०–°माक्षिकादीनां. । [3] प०–D. अन्यैषा. प. remarks that E. puts this verse at the end of Vilāsa.

घुर्यैरिति ॥ द्राक्षाक्षीरेक्षुमाक्षिकसुधानां द्राक्षा मृद्वीका, क्षीरं पयः, इक्षु, माक्षिकं मधु, सुधा अमृतं तेषाम्। माधुर्यैः। धुर्यैः प्रशस्यैः सद्भिः। अपि। इयं पंडितराजस्य कवितायाः माधुरी वन्द्या प्रशस्यतरैवेत्यर्थः। अत्र पंडितराजकवितामाधुर्याः सर्वेभ्योऽपि उत्कर्षवर्णनं, अतो व्यतिरेकालङ्कारः। गीतिवृत्तम् ॥ ३१ ॥

शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि संभाविता
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः।
संप्रत्युज्झितवासनं मधुपुरीमध्ये हरिः सेव्यते
सर्वं पंडितराजराजितिलकेनाकारि लोकाधिकम्[1] ॥ ३२ ॥

1. नि० and the Ms. D. omit this verse.

शास्त्राणीति ॥ शास्त्राणि दर्शनव्याकरणादीनि। आकलितानि आलोचितानि, सम्यगधीतानीत्यर्थः। सर्वे अपि। नित्यविधयः संध्यावंदनादयः। संभाविताः कृताः। दिल्लीवल्लभपाणिपल्लवतले दिल्लीवल्लभः दिल्लीपतिः शाहजहानाभिधः तस्य पाणिपल्लवं करकिसलयं तस्य तले तदाश्रयेणेत्यर्थः। नवीनं। वयः आयुः, यौवनमिति यावत्। नीतं क्षपितं। संप्रति वृद्धावस्थायामित्यर्थः। उज्झितवासनं उज्झिताः त्यक्ताः। वासनाः इच्छा यथा स्यात्तथा। मधुपुरीमध्ये मथुरायां। हरिः विष्णुः। सेव्यते। पंडितराजराजितिलकेन पंडितराजानां राजिः श्रेणी तस्याः तिलकेन मुख्येन श्रेष्ठेनेति यावत्। सर्वं कर्म। लोकाधिकं अलौकिकं। अकारि कृतम्। 'ई' नामके आदर्शपुस्तके तु तृतीयचरणमेवं पठ्यते—'संप्रत्यन्धकशासनस्य नगरे तत्त्वं परं चिन्त्यते'। तस्यायमर्थः—अन्धकशासनस्य अन्धकरिपोर्महादेवस्य। नगरे काश्यामित्यर्थः। परं तत्त्वं ब्रह्माख्यं। चिन्त्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शंकया।
मदीयपद्यरत्नानां मंजूषैषा[1] कृता मया[2] ॥ ३३ ॥

1. बा०—मंजूषेयं। 2. बा०—कृतिर्मम।

इति पंडितराजश्रीजगन्नाथविरचिते भामिनीविलासे शान्तविलासश्चतुर्थः॥

दुर्वृत्ता इति ॥ दुर्वृत्ताः दुष्टं वृत्तं आचारः येषां ते। जारजन्मानः जारेभ्यः उपपतिभ्यः जन्म येषां ते। मदीयपद्यानि। हरिष्यन्ति स्वकीयत्वेन

ख्यापयिष्यन्ति । इति शंकया भयेन । मदीयपद्यरत्नानां मदीयपद्यान्येव रत्नानि तेषाम् । एषा । मंजूषा पेटिका । मया कृता । यथा मंजूषास्थितानि रत्नानि चोरा अपहर्तुं न शक्नुवन्ति तथा स्वविरचितानि पद्यानि मयात्र भामिनीविलासाख्ये ग्रन्थे एकीकृत्य सुरक्षितानि कृतानि । अनुष्टुप्वृत्तम् ॥३३॥

॥ इति चषकव्याख्याने शान्तविलासः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

# BHĀMINĪVILĀSA

*(A Collection of Stray Verses in Sanskrit)*

## ENGLISH TRANSLATION

## IV. ŚĀNTA VILĀSA

1. Let this mind of mine, which is distressed by a number of spreading flames of a wild fire taking its rise in the circle of a great forest in the form of pleasures of senses, act like a Cakora towards the moon in the form of the face of मुकुंद which is the abode of all sweetness and in which beauty is ever on the increase.

2. O you, who are a support to the lotuses in form of the eyes of लक्ष्मी the daughter of the ocean, quickly cool me, who am apt to break under the force of the excess of mental pains more troublesome than raging fire, by glances pleasing to the three worlds and removing the pride of the greatness of the blowing morning lotuses.

3. Let the wonderful line of clouds, resting on the trees on the banks of (यमुना) the daughter of Kalinda mountain, encircled by hundreds of lightnings of permanent lustre and removing the fresh troubles of men through compassion even when only remembered, be the subject of my contemplation (lit. kiss my mind).

4. Let the तमाल tree which illumines the region of the forest on the skirts of (यमुना) the daughter of Kalinda mountain, taking away the burden of the fatigue of frequent going and coming in the journey (birth and death in this संसार) of living beings encircled by rows of creepers (the गोपीs) and endowed with sweet splendour, soon remove my troubles entirely.

5. O lord! I, a shameless creature, being filled with pride, do not, even in dream remember the advice (contained in the उपनिषद्s etc.) which you imparted to

me by pure words sweet like nectar. Even though I have thus committed hundreds of faults, you still count me as one of your own. O lord of Yadus! there is no store of mercy greater than yourself, nor is there a person more arrogant than myself.

6. Go to पाताल or to the capital of gods or to the top of the Meru mountain: cross the line of several oceans yet your desires will never come to an end: if you, who are overwhelmed with mental and physical troubles and old age, desire for eternal happiness, then do you accustom your tongue to the medicine *viz.* the word "Śrī Kṛṣṇa." What is the use of other useless labours?

7. Grapes have been tasted, candied sugar eaten and pure water has been drunk; nectar even has been tasted by going to heaven, and the lower lip of रंभा bitten several times (by you): but, O soul of mine, tell me truly, if the sweetness issuing from the two letters कृष्ण has ever been observed by you while wandering in this wordly existence again and again?

8. Glory to the two letters कृष्ण which are the thunder-bolts to the mountains of sin, which act as a specific medicine to the prolonged illness of the worldly existence, which are the sunrise to the deep darkness of the night of false knowledge, which are like a fire encircled by terrible flames to the trees of the ԿHarassing afflictions (क्लेशs) and which are the entrance-gate to the palace of final beatitude.

9. O mind, I tell you this for your own benefit. You should not form friendship with a certain person (कृष्ण) who feeds herds of cows in the वृंदावन forest and who resembles a new cloud (in complexion): for, enticing you by his faint smiles emitting on all sides the nectar of his beauty, he will soon lead you and your dear objects to destruction.

10. O tongue! if you are an appreciator of sweetness, accustom yourself to the name कृष्ण which emits sweetness better than that of grapes even, which, when it occupies the interior of the heart produces some indescribably great love (towards him) and which, when it lies in the throat, entirely drives away the internal ignorance.

11. There are many beautiful birds in this world: but of them all I am greatly attached to the चातक; for it is through him that, by being reminded of the cloud, his friend, the indescribable ब्रह्म which goes by the name of कृष्ण finds its way into my mind.

12. Alas! who can describe the impropriety of those, who, not knowing their own hearts, inquire of others about that Viṣṇu by whose brilliance, pervading the Universe, the whole world shines and who is the substratum of all knowledge in the shape of ego.

13. Oh mind, my friend, if you are desirous of serving, serve the Lord of लक्ष्मी; if you are eager for contemplation, meditate upon him who has disc for his weapon ( विष्णु ); if you have set your heart upon singing, chant the hymns (in praise) of the enemy of Cupid (शिव) or if you wish for sleep, enjoy the sleep, which brings on rapture of absorption into Brahman.

14. Pious men (like elephants) who have their bodies heated by the great summer heat of the worldly existence and who have broken, through force, the chain of great ignorance and who have removed their sins, bathe into this pure lake of nectar in the form of the Soul which is cool on account of the absence of all desires.

15. The acts of persons, who are puzzled by this worldly existence are all blunders; (for instance) in order to get free from the worldly ties, they resort to

religious performances such as sacrifices and others, which themselves are ties; in order to secure inward peace, they vex their mind by pondering over the conflicting opinions of hundreds of sages and while wishing to get to the other end of the impure ocean, they bathe into the sacred waters of rivers.

16. Let my devoted mind having first kissed the feet and then embracing the legs, knees, thighs, naval and the heart, sport finally in the charms of the lotus-like face of Viṣṇu.

17. O soul of mine, why do you feel uneasy, if you do not see any means of salvation? Will not the son of नंद ever cross the range of your thoughts in future?

18. Let me not possess even for a moment the wealth, which becomes pleasant on account of the sweet humming of the rows of bees hovering over the rut (flowing) from the temples of intoxicated elephants. (For) the delight of worshipping the feet of Viṣṇu is lost to those who are plunged deep in that wealth and whose minds are overpowered by the pleasures brought about by it.

19. O soul, why do you sleep giving up all sense of care in this old age? Death is drawing near. Or rather, enjoy sleep at your ease; (for) the mother Ganges is awake by your side.

20. Why do I harass my mind by struggling after everything in this world. There is one to watch always over me and it is the son of नंद, the supreme Lord.

21. Oh my mind, why do you hurl me down into the pit of worldly existence—me who am constantly bowing down at the lotus-like feet of the destroyer of the mind-born (*i. e.* Śiva, the destroyer of Cupid). By doing this, the grief for the loss of your son will not cease.

22. There (in the Daṇḍaka forest) at the sight of the lord of Raghus from a distance the sages were seized with doubt as to whether it was a tree of emeralds or a young Tamāla tree.

23. Is it the river यमुना? No. For that (river) is full of water. Or is it the lustre of emeralds? No. For how can that (lustre) be so sweet? By whom, residing in the forest, and having a curiosity of looking at the lustre of Rāma's body, were not such doubts entertained in the beginning?

24. While plunged in doubt as to whether it was lightning dropped down from a cloud or a creeper come down from its supporting tree, the intelligent monkey (Hanumān) at last determined from the heavy sighs that it was a woman (सीता), separated from her husband (राम).

25. Prosperity reigns in the houses of the mean; while loud cries, indicating poverty, are heard in the houses of the Brāhmins. Alas! destruction awaits the good, while a life of hundred years is in store for those who betake themselves to the wrong path. Although I become surrounded by flames of fire in the form of anger, when I see this injustice of yours, still, O Lord, what can I do? I am helpless while you are all-powerful.

26. Let all those persons, skilful in composing poems, from the foot of the Meru Mountain down to the shores of the ocean surrounded by the Malaya mountain, declare openly if there is any other person besides me, who is fortunate enough to enjoy the position of being the master of the Speech which has the good luck of possessing the sweetness of the flow of the sweet juice, coming out of the interior of the grapes.

27. He must either be Śiva or a beast in the form of man who does not nod his head on hearing the poems sweet to the ear of the best of poets, the nectar-like sweetness of whose poetical composition is tasted by the Goddess of Speech, suffering her hands to disregard the playing upon the chords of her lute.

28. O my muse, don't at all be sorry for the disregard on the part of the wicked persons, whose minds are engrossed by jealousy; for, you will have numerous sports in the mouths of (those people who are like) bees, drinking the honey from the lotuses in the shape of poetry.

29. Honey, grapes, the very nectar, or the nectar-like lower lip of a lovely woman may not give delight to some and on certain occasions. (But) alas, those dull-headed persons, though living, are really dead, to whom the words of Jagannātha do not give any delight.

30. If you have the best skill in composing poems, capable of surpassing the excessive sweetness of the juice dripping from very ripe grapes, then alone should you, Oh friend, repeat your poem fearlessly before persons like myself. Otherwise do not bring it out of your heart as you would not a sin committed by yourself.

31. This sweetness of the poetry of the best of Paṇḍitas (myself) deserves to be saluted even by the best sweetness of grapes, milk, sugarcane, honey and nectar.

32. The Śāstras have been learnt, all the daily duties have been performed; the prime of life was passed under the patronage of the king of Delhi; now, having given up all desires, Viṣṇu is being worshipped by me in the city of Mathurā; (thus) in every respect the best among the Paṇḍitas has done everything in extra-ordinary manner.

33. I have prepared this casket for jewels in the shape of my verses fearing that vile bastards will plagiarise them (lit. steal them away).

# BHĀMINĪVILĀSA

## NOTES

### VILĀSA IV

*S'ānta*

1. This chapter is called शान्तविलास as it is full of feelings of निर्वेद, indifference to this world. The prevailing sentiment is शान्तरस.

Note the alliteration in this verse. The idea of चकोर drinking in moon-light is a favourite theme with Sanskrit poets. Cf. 'चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि।' 'ज्योत्स्नापानमदालसेन वपुषा मत्ताश्चकोरांगनाः' (विद्धशालभंजिका)। The word चंदिर for चन्द्र is rare and has been employed by the poet to rhyme with इन्दिरे and मन्दिरे. The reading °मलय seems to be a misprint in the नि०,- as the commentator takes the word वलय and not मलय. The reading विगलितं is not so good. It will mean—my mind which has been melted by, etc.

2. The reading—प्रभातजलदोन्नमद्गरिम, etc. is not a happy one, for there is really no गरिमा or greatness in a morning cloud, unless we take it in the sense of beauty of redness which is surpassed by the redness in the eyes of कृष्ण. °सर्वंकषे is wrong. The meaning of जगत्त्रितय-लोचनैः will be—(the eyes) which are the eyes of the three worlds.

3. "The कादम्बिनी is to be identified with Kṛṣṇa, and it is superior to an ordinary line of clouds inasmuch as the latter removes heat only by means of its showers and not by its remembrance, is accompanied only with one lightning and not hundreds of them, and that one lightning too has only a momentary lustre

and not a permanent one, and is seen only in the sky and not on the trees of Yamunā. The *alaṅkāra* is consequently व्यतिरेक. Nāgeśabhatta takes विद्युताम् to mean तत्त्वेनाध्यवसितानां गोपांगनानाम्."

4. The adjectives in the first three lines go to support the hyperbole contained in the 4th line, where the तमाल tree is completely identified with Kṛṣṇa's body. The reading मुदा, meaning happily, does not bring the force of सदा; for this तमालद्रुम removes the fatigue "always," unlike the ordinary tree which can remove the fatigue only at times. The reading गतागतैः does not give any sense. क्लमभरं is as good as श्रमभरं. The reading अतितरां is less forceful than अतितमां which is in superlative degree. This verse is given in R. G. as an instance of सावयवातिशयोक्ति.

5. संस्पृशामि—I touth. It is not so direct in its sense as संस्मरामि—I remember; for, one remembers 'advice.' To touch advice will mean to act upto it. संस्पृहामि is quite wrong, as the root स्पृह belongs to tenth conjugation and the correct form would be संस्पृहयामि. निस्पृहः would mean that he is free from desires; it does not fit into the context, as अहंभावावृतः cannot be निस्पृहः. The reading दयापरः, although means the same as दयानिधिः, is better as it rhymes with मत्तोऽपरः. The advice or teaching imparted means the spiritual teaching based on the Upniṣads, etc.

6. The word रसायन means a medicine which prevents old age and prolongs life; hence it is very appropriate for a person who is आधिव्याधिजरापहृत. The reading वासवपुरीं is as good as वा सुरपुरीं, only it loses the force of alternative which is brought about by वा. नि॰— reads °परंपराः in plural, and in keeping with it शान्ताः also in plural. महादेव explains आधिव्याधिजरापराहातमातिक्षेमं निजं

वाञ्छति.........रसपरे......भ्रमैः, as follows—तस्मात् भ्रमैः अन्यैः कृष्णव्यतिरिक्तविषयैः सरसपुरुषे किं प्रयोजनं, कीदृशे रसपरे आधिव्याधिजराणां परं अधिका आहतिर्दुःखं तत् विद्यते यस्य तस्मिन् पुनः कीदृशे निजं क्षेमं वाञ्छति तस्मिन् फलानुगामि श्रीकृष्ण इत्येव रसायनं रसस्थानं सर्वमन्यं (?) नीरसं कृष्णव्यतिरिक्तपदार्थं दुःखरूपमित्यर्थः ।

7. "Here it is to be supposed that the soul has got the power of remembering incidents of the past births by the efficacy of the utterance of the name of Kṛṣṇa, otherwise it would have been absurd to put a question regarding other births (स्वर्यातेन सुधाप्यधायि etc.) to one that knew nothing about them." The reading समस्तसरितः is not a good one; समस्तायाः सरितः—of the entire river—does not improve the sense. Moreover, it is impossible to drink the water of the entire river. The reading स्वर्यातोन कदाप्यधायि is grammatically incorrect. महादेव's explanation is also wrong; cf. हे मदीय जीव त्वं स्वर्यातः स्वर्गं गत्वापि रंभाप्सरास्तस्याधरः (?) दशनच्छदखण्डः सञ्जातो यस्य इन्द्र (दन्त?) घट्टनात् सः अपि रसालः न कदापि कतिधा केनापि वधु (?) प्रकारेण न अधायि न अधरामृतं पीतं पीतमपि तादृशस्वादो न ।

The reading सुधाधिकरसः has the disadvantage of eliminating अपि. Otherwise, it goes with रम्भाधरः (which is sweeter than nectar).

8. वज्र, Indra's thunderbolt, had destroyed the mountains by clipping their wings. पापभृतां सतां will have to be construed as वज्रं पापभृतां and सतां भवगदोद्रेकस्य. It is not so good as the one adopted in the text, as the force of वज्र's utility is lost here. भयगदोद्रेकस्य is explained by महादेव —भय (यं) एव गदो रोगः मृत्युरूपः etc. The क्लेशs are those described in 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' योगसूत्र II. 3. The उरुभरज्वालाजटालः is to be explained as उरुः भरो यासां ताः ज्वालाः, ताभिः जटालः ।

9. With regard to the purport of this verse the Acyutarāya observes thus: विरोधिलक्षणया स्वचेतः प्रत्येव

भगवद्ध्यानमाक्षेपालङ्कारेणोपदिशति. The विषयs, viz. the objects of ten इन्द्रियs are called the 'dear ones' of the mind, as it is really the mind which enjoys all the objects ultimately. The reading असित: = black, will have to be construed as कोऽपि असित: कृष्णवर्ण:, but it is rendered redundant by नवाम्बुदनिभ: hence it is to be dropped. महादेव gives a queer explanation of सौन्दर्यामृतमुद्गिरद्भिरभित: संयोज्य मन्दस्मितैः—सौन्दर्यमेवामृतं उद्गिरद्भि: क्षिपन्तीभिर्गोपीभि: सह मन्दस्मितै: संयोज्य. Not only is it absurd, but grammatically wrong, as उद्गिरद्भि: is masculine and cannot go along with गोपीभि:.

10. "There is a pun on the word रसज्ञा. For it is also a synonym of the tongue. Thus यद्यसि त्वं रसज्ञा means 'if you are really a रसज्ञा' and 'if you can make distinction between the flavours of different things and choose the best for yourself." बा० reads लग्नां and °मग्नां, which is wrong: for °मग्नां may well stand in opposition with प्रीतिं but how can लग्नां go with ध्वान्तजालम् ? व्याधि means 'disease', but it is not an improvement on ध्वान्त. अच्युतराय explains द्राक्षौघ: as मृद्वीकादियावत्तदुत्तमजातीनां य ओघा: संघास्तैरित्यर्थः। अनेन लोकोत्तरमाधुर्यवत्त्वं तेषु ध्वन्यते। The reading द्राक्षार्थै: is explained by महादेव—द्राक्षामौल्यै: which is wrong.

11. अच्युतराय takes ऊर्ध्वाक्षै: for ऊर्ध्वनेत्रै:. That is, the चातक birds remind of clouds when they have their eyes fixed at heaven. This is a better reading than अध्यक्षै:, for चातकs would remind of clouds more readily when their eyes are raised than when they are simply seen. निजसुखं is not a happy one; it will have to be explained as निजं च तत् सुखं सुखस्वरूपं. नीरजं is quite wrong; चातकs have nothing to do with कमलs. The reading स्मृत्यारूढं of रसगंगाधर gives rise to tautology as it is immediately preceded by स्मारयद्भि:.

12. "विष्वगञ्चतीति विष्वद्रीची तया. सर्वासामपि etc. The Vedantins hold that the individual soul is identical

with the Supreme one. But apparently the one is different from the other. And therefore whenever the individual soul in the *saṁsāra* condition speaks of itself as अहम्, the real thing, to which this अहम् points, is not the individual soul itself, but the Supreme one on account of an identity, existing between the two. विष्णु is here spoken of as identical with the Brahman." (१०) अच्युतराय reads विष्वगुच्चा and also sees that it is open to the fault of repetition as we have the word भासा further. He, therefore, explains it as follows—विष्वक् समन्ततः सर्वदेशकालाद्यवच्छेदेनेत्यर्थः। रुचिः सर्वजीवानां प्रीतिर्यस्यां सा तथा तयेत्यर्थः। तत्तद्वस्तुविषयकज्ञानेऽभिलाषो हि सर्वेषां जीवानामवश्यं वाच्यः। अन्यथोपादेये स्वेष्टविषये प्रवृत्तिरनुपादेये स्वानिष्टविषये निवृत्तिश्च तत्तज्ज्ञानमन्तरा कथं भूयात्। तस्मादुक्तव्याख्यानं युक्तमेव। एवं दीप्तिवाचिभ्यां रुचिभाःपदाभ्यां द्विरुक्तिरपि प्रत्युक्ता। एतादृश्या भासा स्वरूपभूतस्वप्रकाशचितेत्यर्थः। रसगंगाधर reads विष्वद्रीचा......धाम्ना, which is as good as the present text, and सर्वेषामप्यहमयामिति. The latter will mean सर्वेषां अहं तथा अयं इति ज्ञानानामपि यः प्रत्ययालम्बनम्। The word अहं stands for one's self and अयं for everything different from it. Cf.—युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः, etc. (शांकरभाष्य). "अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा। विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत्" (quoted by अच्युतराय). गूढमालंबनं is explained by Vaidya as गूढं विवेकेनापि निर्णेतुमशक्यम्. अच्युतराय explains स्वहृदयतल as स्वहृदयानि स्वान्तःकरणानि...बुद्धिमनोरूपाणीति यावत्। तेषां यत्तलं वास्तविकं रूपं आधारो वा अद्वैतात्मप्रकाशः।

13. Mr. Paranjape rightly observes "The poet finds that his mind is naturally inclined to serve others, to be anxious for trifles, to talk at random, and to sleep away the time idly. And seeing the impossibility of changing the natural inclinations he advises it to change the object of service etc. स्मररिपोर्गाथा. On this Mr. Vaidya says गाथा भगवद्गीतादिरूपा, which is found also in the Ānandāśrama commentary. Now it is too well known that the Bhagavadgītā is a गाथा not of Śiva,

the enemy of Cupid, but of Viṣṇu; and consequently the above explanation is wrong. On this point the commentator of G., who has the same reading, observes thus: स्मररिपोर्मदनान्तकस्य श्रीशंकरस्यैवेत्यर्थः। गाथा व्यासादिग्रथितकथेत्यर्थः...अत्र स्मररिपुपदेन वक्तुरभेदभक्तत्वं व्यज्यते। Now whoever will think for a little while on the last sentence will perceive why the commentator thought it necessary to add it. He must have surely felt the want of some synonym of Viṣṇu in the third line also in keeping with the contents of the preceding two lines; and not finding it, he must have next thought of identifying Śiva with Viṣṇu. And thus from the commentator's own words it follows that his reading is defective, and that any other reading supplying a synonym of Viṣṇu will suit better. Now although I have not got such a reading in my text, but have the same which I have taken so much trouble for giving reasons to reject, still it is owing to no such reading being found in the copies that I have collated. The Rasagaṅgādhara, however, supplies us with such a variant, which runs thus: आलापं यदि कांक्षसे मधुरिपोर्गाथा तदालप्यताम्. The commentator of H. also gives स्मरगुरो: as another reading in the present case, but he adds स (पाठ:) तु शिवैषैकाणाम्। अस्माकं तु विष्णुशिवयोरेकत्वरूपभ्रान्ति ( ? ) स्तस्मात्स्मरस्य रिपुः शिवः. But from the usual worthlessness of this commentary one need not attach any importance to its remarks. And even if according to its opinion the reading स्मररिपो: is retained, it incurs a fault which is shown above. And hence the reading of R. G. or स्मरगुरो: may be adopted." आलाप्यतां is as good as आलप्यताम्. कथ्यतां is also no improvement. The B. Ms. of Paranjape's text reads स्वीयं..... निरर्गलसखं which means if you want 'your own unrestrained friend', i. e. if you want to make him your own without any restraint. महादेव explains निरालसमुखे as नी(नि)रालसं

नेत्रतन्द्रानिरस्तं सुखं यस्य तस्मिन्निर्जरे इत्यर्थः. सुखं of अच्युतराय is to be taken as क्रियाविशेषण of सुप्यताम्.

14. " The simple meaning of the verse is that, being tormented with the sufferings of this world, wise men break the tie produced by ignorance, no longer entertain any worldly hopes, and devote their time to a realisation of the identity of their souls with the Brahman, in doing which all their sins are destroyed. " (प.) If we adopt the reading करटिनः, then the idea of elephants will not be inferred but expressed. The अलंकार then would be समस्तवस्तुविषय सावयवरूपक.

15. The reading अशुजलनिधेः is wrong. महादेव explains सर्वं कामादिकमिह etc., as—सर्वं कामं धर्मार्थादित्रयं. पारमार्तुं सकामाः is as good as पारमारोढुकामाः

16. अच्युतराय reads नाभिचक्राणि and remarks नाभिहृदयानीति पाठस्तु सरल एव. आश्लिष्य is as good as आलिंग्य. But आलक्ष्य does not fit in here.

17. " The remembrance of Kṛṣṇa is the very remedy that is wanted, and hence if the soul is devoted to Kṛṣṇa, there is no longer any cause for it to be distressed. " महादेव explains चेतः शरणावस्थां किं नाम कदापि पुरुषस्य as शरणावस्थं शरणागतं पुरुषस्य चेतः अन्तःकरणं कीदृशं न कं दापि ददात्येवेत्यर्थः । एकदेशविकृतमनन्यवत् ज्ञेयम्.

18. ' अत्र हरिचरणभजनच्युतिभयाद्राज्यसुखस्य तिरस्कारः. R. G. ' मा भासन्तु—May not shine upon me. संगीतसुभगाः as good as झंकारसुभगाः. The reading of Vaidya is द्रविणमदिराघूर्णितदृशां which he explains as संपत्तिमद्यसेवनेन भ्रांतदृशाम्.

19. " वयसः शेषे, strictly speaking, means ' in the remaining part of the life. ' The reading in R. G. where this verse is given as an instance of आक्षेप according to the opinion of some, is शेषे वयसि त्वमागतः &c. " The construction will be त्वं शेषे वयसि । किं निःशंकं शेषे, मृत्युः आगतः. निःशंकः will go with त्वं, if we adopt it.

20. अच्युतराय explains the reading संपादयामि ..यदयम् as—अहं धरातले धावं धावं पुन: पुनर्धावनं विधाय किं संपादयामि किं वाग्रे संपादयिष्यामि । सुखादेर्दैवमात्राधयत्तत्वाद् व्यर्थ एव तदर्थमायास इत्याशय: । The reading धावन् धावन् is not so appropriate as that of our text, as there will be प्रथमासामानाधिकरण्य in the शतृप्रत्यय.

21. "The *alaṅkāra* is प्रत्यनीक, since the mind, unable to do any injury to the god Śiva who is its real enemy on account of his having destroyed Cupid, the mind-born god ( and hence its son ), satisfies its thirst of revenge by doing some harm to a person who is devoted to Śiva. But the simple fact contained in the verse is that the mind, while it is being directed towards God, is often attracted by worldly objects.' For another instance of the प्रत्यनीकालंकार cf. II. 93. supra. अच्युतराय reads आमनन्तं and explains it as वेदत: स्मरन्तं.

22. अच्युतराय explains मेदिनीधर as mountain, but it is more appropriate to take it with Mr. Vaidya in the sense of tree, for Rāma could not have been mistaken for a mountain.

23. Mr. Vaidya reads रघुपते: कायच्छाया विलोकनतत्परैरुदितकुतुकै: and explains it as उदितकुतुकै: प्राप्तकुतूहलै: ( विलोकनतत्परै: दर्शनोत्सुकै: ) रघुपते: कायच्छाया देहकान्ति: ।

24. जलदच्युता is as good as जलदात् च्युता, the former being a Compound. Sītā being of golden colour is mistaken for 'lightning' or 'a creeper of the celestial tree.'

25. समानां = years, is a better reading.

26. आमूलात्...पयोधे: From north to south. महादेव reads ०भाग्यभाजां नृपाणां and explains in his usual curious way as—भाग्यं सुखं भजतां सेवतां पुरुषाणां मध्ये नृपाणां महमदक्षोणिपतीनां सभायामित्यर्थ: ।

27. अच्युतराय quotes a parallel verse—सुभाषितेन गीतेन युवतीनां च लीलया । यस्य नो द्रवते चित्तं स वै मुक्तोऽथवा पशु: । The metre

is शिखरिणी. °रसनं = °शब्दः, but is less appropriate than रणन which means playing. °कला is wrong. The word नृपशु is again curiously explained by महादेव as क्षितीशो महम्मदः.

28. Wirh the first two lines cf. बोद्धारो मत्सरग्रस्ताः etc. Bh. II. महादेव gives the reading मद्वाचमंकुशविषादमनादरेण and indulges into the following fanciful and wrong explanation मद्वाचं अंकुशवद्विषादं दुःखं यथास्यात्तथा हस्तिनां अंकुशं यथा तथैव पंडितानां मम वाणी विषादकरी तत् यथा स्यात्तथाऽनादरेण. If we adopt मद्वाचं as द्वितीयान्त, then whose object will it be ? र० reads मात्सर्यमन्दमनसां which means-whose minds are dull on account of envy. °भुग्नमनसां would mean—whose minds are depressed. तरसा and सहसा are equally good. धास्यतितमां is wrong, second person of the verb is required here. यास्यसि सतां is equally good. कति नो is better reading, as it means—how many विलासs would you not have?—more emphatic. र० reads विपुलं विलासं, singular, where it will have to be taken in the Collective sense.

29. अच्युतराय remarks thus with regard to the persons to whom and the times at which मधु etc. do not give delight:—तत्र मधुद्राक्षे पित्तोपहतरसनस्य सर्वस्य, अमृतवामाधरसुधे तु मिलिते चेज्जीवन्मुक्तानामेव, केवलवामाधरसुधा तु तादृशवृद्धस्यैवानादरविष इति विभागो बोध्यः । "The poet means to say that the delight resulting from his poetry is not, like that of मधु etc., rastricted to any particular persons or times, but that it is universal."

31. महादेव's readings is—द्राक्षाक्षीरेक्षुमाक्षिकादीनां माधुर्यै र्धुर्यैः अपि and it is an improvement on the text where we have to understand सद्भिः अपि. अन्यैषा, again, is better than वन्यैव, as the former suggests what the latter expresses.

32. "नित्य duties are thus defined: नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि. Vedāntasāra. But I do not see what लोकाधिकत्व lies in things like संध्यावन्दन and others.

The King of Delhi referred to in the second line must have been Shah Jahan. पाणिपल्लवतले वयो नीतम् etc. shows the great ease and happiness with which he passed his youth at the court of Delhi. The reading given in the foot-note for the third line means, 'the highest truth (about Brahman) is now being meditated upon in the city of S'iva, the destroyer of the demon, Andhaka.' The city meant is Benares. From the constant references to Kṛṣṇa, the Yamunā, and Vṛndāvana, in the verses of the fourth Vilāsa it seems to be certain that the poet must have originally lived in Mathurā, as the reading of the text says. And on the strength of the other reading and the popular traditions this also may be conjectured that he must have subsequently gone to reside also in Benares at least for some period. लोकाधिकम् may be taken either as an adjective or as an adverb."

33. On हरिष्यन्ति etc. अच्युतराय remarks : केचिद् दुर्जनास्तावन्मदीयोऽयं श्लोको मदीयोऽयं श्लोक इति विद्वत्सदःसु श्लाघनेनापहारं करिष्यन्तीति तन्निराकरणार्थमेवेति द्योत्यते. "When मया is present in the verse, मदीय looks awkward. स्वकीय would have been better."

---

# भामिनीविलासस्थ श्लोकानां सूची।

Extra verses not contained in the text, but found in some of the Mss. and printed editions.*

# APPENDIX

## VILĀSA I

†किमहं वदामि खल दिव्यमते गुणपक्षपातमभितो भवतः ।
गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥
रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ।
अथवालं पापात्मन् कृतया कथयापि ते हतया ॥
आनन्दमृगदावाग्निः शीलशाखिमदद्विपः ।
ज्ञानदीपमहावायुरयं खलसमागमः ॥
खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥
वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा न हि जीवन्ति जना मनागमन्त्राः ॥
कृतं त्वयोन्नतं कृत्यमर्जितं चामलं यशः ।
यावज्जीवं सखे तुभ्यं दास्यामो विपुलाशिषः ॥
अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्दिरचन्द्रिका§ ॥

---

* This portion is taken from the edition of the Bhāminīvilāsa by the late Shivaram Mahadeo Paranjape.

† A. F. only have these verses, although F does not give them exactly in the same order in which A does.

§ Mr. Vaidya's edition gives the following verse after this :

एत्य कुसुमाकरो से संजीवयिता गिरं चिरं मग्नाम् ।
इति चिन्तयतो हृदये पिकस्य समधायि शौभिकेन शरः ॥

निर्गुणः शोभते नैव विपुलाडम्बरोऽपि ना ।
आपातरम्यपुष्पश्रीशोभितः शाल्मलिर्यथा ॥

पङ्कैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥

सरजस्कां पाण्डुवर्णां कण्टकप्रकरान्विताम् ।
केतकीं सेवसे हन्त कथं रोलम्ब निस्त्रप: ॥

यथा तानं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥

सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् ।
आमोदो न हि कस्तूर्याः शपथेन विभाव्यते ॥

अयि बत गुरुगर्वं मा स्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥

दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति ।
भूतेषु किंच करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति॥

अनवरतपरोपकारव्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥

व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयन्नयातिरेकान् ।
आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥

मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते ।
सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा ॥

उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥
अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम्* ॥
खण्डितानेत्रकञ्जालिमञ्जुरञ्जनपण्डिताः ।
मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥

## VILĀSA II

†यदवधि दयितो विलोचनाभ्यां सहचरि दैववशेन दूरतोऽभूत् ।
तदवधि शिथिलीकृतो मदीयैरथ करणैः प्रणयो निजक्रियासु ॥
निखिलां रजनीं प्रियेण दूरादुपयातेन विबोधिता कथाभिः ।
अधिकं न हि पारयामि वक्तुं सखि मा जल्प तवायसी रसज्ञा ॥
निपतद्बाष्पसंरोधमुक्तचाञ्चल्यतारकम् ।
कदा नयननीलाब्जमालोकेय मृगीदृशः ॥
यदि लक्ष्मण सा मृगेक्षणा न मदीक्षासरणिं समेष्यति ।
अमुना जडजीवितेन मे जगता वा विफलेन किं फलम् ॥
भवनं करुणावती विशन्ती गमनाज्ञालवलाभलालसेषु ।
तरुणेषु विलोचनाब्जमालामथ बाला पथि पातयांबभूव ॥

---

* After this Mr. Vaidya's edition gives the following verse which is not found in A.

दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुग-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥

† The following thirteen verses are found in Mr. Vaidya's edition as lying between 55 and 56 of this edition.

पापं हन्त मया हतेन विहितं सीतापि यद्यापिता
सा मामिन्दुमुखी विना बत वने किं जीवितं धास्यति ।
आलोकेय कथं मुखं सुकृतिनां किं ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये ॥

उषसि प्रतिपक्षकामिनीसदनादन्तिकमञ्चति प्रिये ।
सुदृशो नयनाब्जकोणयोरुदियाय त्वरयारुणद्युतिः ॥

क्षमापणैकपदयोः पदयोः पतति प्रिये ।
शेमुः सरोजवदनानयनारुणकान्तयः ॥

निर्वासयन्तीं धृतिमङ्गनानां शोभां हरेरेणदृशो धयन्त्याः ।
चिरापराधस्मृतिमांसलोऽपि रोषः क्षणप्राघुणिको बभूव ॥

राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥

मलयानिलमनलीयति मणिभवने काननीयति क्षणतः ।
विरहेण विकलहृदया निर्जलमीनायते महिला ॥

कालागुरुद्रवं सा हालाहलवद्विजानती नितराम् ।
अपि नीलोत्पलमालां बाला व्यालावलिं किलामनुत ॥

विधिवञ्चितया मया न यातं सखि सङ्केतनिकेतनं प्रियस्य ।
अधुना बत किं विधातुकामो मयि कामो नृपतिः पुनर्न जाने* ॥

†प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः ।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥

---

* After this Mr. Vaidya's edition has विरहेण विकलहृदया &c. But I have not given it here since it finds place in my text according to the order of all of my Mss.

† This is read in Mr. Vaidya's edition between 70 and 71 of this.

*सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः ॥
रूपजला चलनयना नाभ्यावर्ता कचावलीभुजङ्गा ।
मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिणी विषमा ॥
शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे ।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः ॥
†तया तिलोत्तमीयन्त्या मृगशावकचक्षुषा ।
ममायं मनुषो लोको नाकलोक इवाभवन् ॥
अङ्कायमानमलिके मृगनाभिपङ्कं पङ्केरुहाक्षि वदनं तव वीक्ष्य बिभ्रन् ।
उल्लासपल्लवितकोमलपक्ष्मूलाश्चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥
शिशिरेण यथा सरोरुहं दिवसेनामृतरश्मिमण्डलम् ।
न मनागपि तन्वि शोभते तव रोषेण तथेदमाननम् ॥
चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् ।
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥
शतकोटिकठिनचित्तः सोऽहं तस्याः सुधैकमयमूर्तेः ।
येनाकारिषि मित्रं स विकलहृदयो विधिर्वाच्यः ॥
श्यामलेनाङ्कितं बाले भाले केनापि लक्ष्मणा ।
मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बुजायते ॥
अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥
नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ॥
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥

---

* The following three verses are found in Mr. Vaidya's edition between 77 and 78 of this.

† The following verses are found in Mr. Vaidya's edition between 78 and 79 of this.

स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥

यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समासि ।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि ॥

इदं लताभिः स्तबकानताभिर्मनोहरं हन्त वनान्तरालम् ।
सदैव सेव्यं स्तनभारवत्यो न चेद्युवत्यो हृदयं हरेयुः ॥

सा मदागमनबृंहिततोषा जागरेण गमिताखिलदोषा ।
बोधितापि बुबुधे मधुपैर्न प्रातराननजसौरभलुब्धैः ॥

अविचिन्त्यशक्तिविभवेन सुन्दरि प्रथितस्य शम्बररिपोः प्रभावतः ।
विधुभावमञ्चिततमां तवाननं नयने सरोजदलनिर्विशेषताम् ॥

मीनवती नयनाभ्यां करचरणाभ्यां प्रफुल्लकमलवती ।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥

पान्थ मन्दमते किं वा संतापमनुविन्दसि ।
पयोधरं समाशास्व येन शान्तिमवाप्नुयाः ॥

संपश्यतां तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम् ।
सौदामिनी वा सितयामिनी वेत्येवं जनानां हृदि संशयोऽभूत् ॥

सपल्लवा किं नु विभाति वल्लरी सफुल्लपद्मा किमियं नु पद्मिनी ।
समुल्लसत्पाणिपदां स्मिताननामितीक्षमाणैः समलम्भि संशयः ॥

नेत्राभिरामं रामाया वदनं वीक्ष्य तत्क्षणम् ।
सरोजं चन्द्रबिम्बं वेत्यखिलाः समशेरत ॥

कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया ।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने ॥

वानेतेति वदन्त्येतां लोकाः सर्वे वदन्तु ते ।
यूनां परिणता सेयं तपस्येति मतं मम ॥

स्मयमानाननां तत्र तां विलोक्य विलासिनीम् ।
चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः ॥

वदनकमलेन बाले स्मितसुषमालेशमादधासि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥

कलिन्दजानीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः ।
ध्वान्तेन वैराद्विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः ॥

परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः ।
तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमेति ॥

जनमोहकरं तवालि मन्ये चिकुराकारमिदं घनान्धकारम् ।
वदनेन्दुरुचामिहाप्रचारादिव तन्वाङ्गि नितान्तकान्तिकान्तम् ॥

दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजताये किमु पक्ष्मलाक्ष्यास्तपश्चरत्यंबुजपङ्क्तिरेषा ॥

वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ।
प्रियसंगसुखायेव मुक्ताहारस्तपस्यति ॥

निधिं लावण्यानां तव खलु मुखं निर्मितवतो
महामोहं मन्ये सरसिरुहसूनोरुपचितम् ।
उपेक्ष्य त्वां यस्माद्विधुमयमकस्मादिह कृती
कलाहीनं दीनं विकल इव राजानमकरोत् ॥

स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षितुम् ॥

जगदन्तरममृतमयैरंशुभिरापूरयन्नितराम् ।
उदयति वदनव्याजात् किमु राजा हरिणशावनयनायाः ॥

तिमिरशारदचन्दिरचन्द्रिकाः कमलविद्रुमचम्पककोरकाः ।
यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे ॥

प्रिये विषादं जहिहीति वाचं प्रिये सरागं वदति प्रियायाः ।
वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥

राज्यभिषेकमाज्ञाय शम्बरासुरवैरिणः ।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः ॥

आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् ।
भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥

यान्ती गुरुजनैः साकं स्मयमानाननाम्बुजा ।
तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् * ॥

मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम् ।
वियोगदूरीकृतचेतनानां विनैव शैत्यं भवति प्रतीतिः ॥

विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।
परिपूर्णोऽनुरागेण प्रातर्जयति भास्करः ॥

आनम्य वल्गुवचनैर्विनिवारितेऽपि
रोषात्प्रयातुमुदिते मयि दूरदेशम् ।
बाला कराङ्गुलिनिदेशवशंवदेन
क्रीडाबिडालशिशुनाशु रुरोध मार्गम् ॥

अभूदप्रत्यूहः कुसुमशरकोदण्डमहिमा
विलीनो लोकानां सह नयनतापोऽपि तिमिरैः ।
तवास्मिन् पीयूषं किरति परितस्तन्वि वदने
कुतो हेतोः श्वेतो विधुरयमुदेति प्रतिदिनम् ॥

विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः ।
अनल्पमायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः ॥

---

* After this Mr. Vaidya's edition reads नयनानि वहन्तु &c. But I do not give it here, since it finds place in my text according to the order of all of my Mss.

यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥
न मिश्रयति लोचने सहसितं न संभाषते
कथासु तव किं च सा विरचयत्यरालां भ्रुवम्।
विपक्षसुदृशः कथामिति निवेदयन्त्या पुरः
प्रियस्य शिथिलीकृतः स्वविषयेऽनुरागग्रहः ॥
वडवानलकालकूटवन्मणरव्यालगणैः सहैधितः।
रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम् ॥
लभ्येत पुण्यैर्गृहिणी मनोज्ञा तया सुपुत्राः परितः पवित्राः।
स्फीतं यशस्तैः समुदेति नित्यं तेनास्य नित्यः खलु नाकलोकः ॥
प्रभुरपि याचितुकामो भजते वामोरु लाघवं सहसा।
यदहं त्वयाधरार्थी सपदि विमुख्या निराशतां नीतः ॥
जलकुम्भमुम्भितरसं सपदि सरस्याः समानयन्त्यास्ते।
तटकुञ्जगूढसुरतं भगवानेको मनोभवो वेद ॥
त्वमिव पथिकः प्रियो मे विटपिस्तोमेषु गमयति क्लेशान्।
किमितोऽन्यत् कुशलं मे संप्रति यत्पान्थ जीवामि* ॥
तुलामनालोक्य निजामखर्वं गौराङ्गि गर्वं न कदापि कुर्याः।
लसन्ति नानाफलभारवत्यो लताः कियत्यो गहानान्तरेषु ॥
इयमुल्लसिता मुखस्य शोभा परिफुल्लं नयनाम्बुजद्वयं ते।
जलदालिमयं जगद्वितन्वन् कलितः क्वापि किमालि नीलमेघः ॥
आसायं सलिलान्तः सवितारमुपास्य सादरं तपसा।
अधुनाब्जेन मनाक् तव मानिनि तुलना मुखस्यापि ॥

---

* In Mr. Vaidya's edition किमिति कृशासि कृशोदरी &c. is found after this. But I do not give it here, since it occurs in my text.

अयि मन्दस्मितमधुरं वदनं तन्वङ्गि यदि मनाक् कुरुषे ।
अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम् ॥
मधुरतरं स्मयमानः स्वस्मिन्नेवालपञ्छनैः किमपि ।
कोकनदयंस्त्रिलोकीमालम्बशून्यमीक्षते क्षीबः ॥
मधुरसान्मधुरं हि तवाधरं तरुणि मद्वदने विनिवेशय ।
मम गृहाण करेण कराम्बुजं प प पतामि ह हा भ भ भूतले ॥
शतेनोपायानां कथमपि गतः सौधशिखरं
सुधाफेनस्वच्छे रहसि शयितां पुष्पशयने ।
विबोध्य क्षामांगीं चकितनयनां स्मेरवदनां
सनिःश्वासं श्लिष्यत्यहह सुकृती राजरमणीम् ॥
गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम् ।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः ॥
यथा तथा तामरसेक्षणा मया पुनः सरागं नितरां निषेविता ।
तथा तथा तत्त्वकथेव सर्वतो विकृष्य मामेकरसं चकार सा ॥
हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्वसंपद्भिरपि तद्भवनं वनम् ॥
लीलालकावलिचलन्नयनारविन्दलीलावशंवदितलोकविलोचनायाः ।
सायाह्नि प्राणयिनो भवनं व्रजन्त्याश्चेतो न कस्य हरते गतिरङ्गनायाः॥
दन्तांशुकान्तमरविन्दरमापहारि सान्द्रामृतं वदनमेणविलोचनायाः ।
वेधा विधाय पुनरुक्तमिवेन्दुबिम्बं दूरीकरोति न कथं विदुषां वरेण्यः ॥
सानुकम्पाः सानुरागाश्चतुराः शीलशीतलाः ।
हरन्ति हृदयं हन्त कान्तायाः स्वान्तवृत्तयः ॥
*विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम् ।
आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥

* In Mr. Vaidya's edition this is found between 93 and 94.

VILĀSA IV

*जगज्जालं ज्योत्स्नामयनवसुधाभिर्जटिलय-
ञ्जनानां संतापं त्रिविधमपि सद्यः प्रशमयन् ।
श्रितो वृन्दारण्यं नतनिखिलवृन्दारकवृतो
मम स्वान्तध्वान्तं तिरयतु नवीनो जलधरः ॥
ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः ।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥
अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्संतापं हरिनवतमालस्तिरयतु ॥
आलिङ्गितो जलधिकन्यकया सलीलं
लग्नः प्रियंगुलतयेव तरुस्तमालः ।
देहावसानसमये हृदये मदीये
देवश्चकास्तु भगवानरविन्दनाभः ॥
नयनानन्दसंदोहतुन्दिलीकरणक्षमा ।
तिरयत्वाशु संतापं कापि कादम्बिनी मम ॥
†गणिकाजामिलमुख्यानवता भवता बताहमपि ।
सीदन् भवमरुगर्ते करुणामूर्ते न सर्वथोपेक्ष्यः ॥
§मलयानिलकालकूटयो रमणीकुंतलभोगिभोगयोः ।
श्वपचात्मभुवोर्निरंतरा मम भूयात्परमात्मनि स्थितिः ॥

---

* The following five verses are found in Mr. Vaidya's edition between 4 and 5 of this.

† This is found in Mr. Vaidya's edition between 6 and 7 of this.

§ The following five verses are found in Mr. Vaidya's edition between 16 and 17 of this.

निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् ।
अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥
प्रतिपलमखिलाँल्लोकान्मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हन्त किमिति चित्तं विरमति नाद्यापि विषयेभ्यः ।
सपदि विलयमेतु राजलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः ।
अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु धर्मात् ॥
अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरंतरं धमतु ।
पातयतु वासिधारामहमणुमात्रं न किंचिदपि भाषे ॥

---

# POONA ORIENTAL SERIES



## LATEST PUBLICATIONS

**No. 53. ANCIENT KARNĀTAKA Vol. I, HISTORY OF TULUVA.** by Dr. B. A. Saletore. Crown Pp. X, 659 with 5 Plates, Map, Index etc. Cloth. 1936. **Rs. 10**

This work deals with one of the most ancient dynasties of Western India. While almost all the royal families of the South, in one way or the other, were subject to political vicissitudes, the ancient Ālupas of Tuḷuva nāḍu alone managed to preserve intact the culture and tradition of a people who played a very significant part in the history of the country. In this book which is based on all available historical materials, the author plays equal attention to the political as well as cultural history, religious life as well as foreign relations of a vital part of ancient Karnātaka, which, unlike the other provinces of the South, never suffered from Muhammedan invasions, and hence, was in a peculiar position to hand down to posterity the unique and interesting history of its people.

**No. 54. PLAYS ASCRIBED TO BHĀSA.** (भासनाटकचक्रम्). Being the Text in Devanāgari of the Thirteen Plays ascribed to Bhāsa, critically edited with new mss. by Prof. C. R. Deodhar, with Introduction in English dealing with the Bhāsa Problem, Summary in Sanskrit at the beginning of each Play, varient readings, Appendices etc. There are five Appendices dealing with (*a*) Metrical Analysis, (*b*) List of irregular constructions etc., (*c*) References to Bhāsa or his Works, (*d*) Stanzas attributed to Bhāsa, (*e*) Select Glossary. Crown Pp. VII, 583. Cloth. 1937. This is the only critical edition of the Text of the Bhāsa Plays available in one handy volume. **Rs. 6**

**No. 55. PĀLI SADDARŪPĀVALI** (पालीसद्दरूपावलि). Declension of Pāli nouns and adjectives edited in Devanāgari for the first time by Pālitīrtha N. V. Tungar. Pocket size. Pp. 45. 1937. **As. 2**

**No. 39. JHA COMMEMORATION VOLUME.** Being 46 Essays on Oriental subjects presented to MM. Dr. Ganganath Jha on the completion of his sixtieth year, by his friends, pupils and admirers in and outside India. It contains learned and original contributions on different branches of Indology and some Papers on Arabic and Persian literatures. The Papers are divided into two sections viz. Sanskrit and English. [illegible] 96. 472. Cloth. 1937. **Rs. 15** (R[illegible]

### UNIQUE PUBLICATION
### AN INSPIRING BOOK FOR EVERY ORIE[illegible]

**No. 56. PICTURESQUE ORIENTALIA.** Being a co[illegible] in an uniform size 3″ × 4″ of the eminent Indologists [illegible] the West. Compiled with a short description on eac[illegible] Sardesai. Nicely printed on Art paper in Demy siz[illegible] a loose knot so as to take out any Photo for framing pu[illegible]

**Oriental Book Agency, 15 Shukrawar,** [illegible]

KAVYAMALA. 25.

# DHVANYĀLOKA

OF

## ĀNANDAVARDHANĀCHĀRYA

With the Commentary of Abhinavaguptāchārya.

EDITED BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT DURGĀPRASĀDA

PRINCIPAL, MAHARAJA'S SANSKRIT COLLEGE, JAIPUR: MEMBER OF THE COURT AND FACULTY OF ORIENTAL LEARNING OF THE BENARES HINDU UNIVERSITY AND A MEMBER OF THE BOARD OF SANSKRIT STUDIES OF UNITED PROVINCES &c.

AND

KĀS'ĪNĀTH PĀṆDURANG PARAB.

REVISED BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Fourth Edition.

PUBLISHED BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRNAYA-SAGAR' PRESS,

BOMBAY.

1935.

Price 2 Rupees.



काव्यमाला २५.

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः ।

श्रीमदाचार्याभिनवगुप्तविरचितया व्याख्ययालङ्कृतः ।

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितदुर्गाप्रसादेन,
काशीनाथ पाण्डुरङ्ग परब इत्यनेन, मुम्बापुरवासि-
पणशीकरोपाह्वलक्ष्मणशर्मात्मजवासुदेवशर्मणा
च संशोधितः ।

(चतुर्थावृत्तिः ।)

स च
मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः,
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः ।

शाकः १८५६, खिस्ताब्दः १९३५.

मूल्यं २ रूप्यकद्वयम् ।

# ध्वन्यालोकः सलोचनः ।

अयं ध्वन्यालोको भागद्वयात्मकः. तत्रैको भागः कारिकारूपो ध्वनिसंज्ञकः, अपरस्तावृत्तिरूप आलोकसंज्ञकः. तत्र कारिकाणां वृत्तेश्च प्रणेता श्रीमदानन्दवर्धनाचार्य एवेति केषांचन मतम्. तथा च जह्लणसंकलितसूक्तिमुक्तावलौ राजशेखरनाम्ना समुद्धृतम्—

'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥'

एतत्पद्यमप्यानन्दवर्धनस्यैव ध्वनिकर्तृतां सूचयति. किंतु लोचनस्थितैः "अत एव मूलकारिका तन्निराकरणार्था न श्रूयते. वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति ।' ( ७१ पृष्ठे ), 'तेनात्र प्रथमोद्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्. द्वितीयोद्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्योते मूलविभागमवोचत् ।' ( ७२ पृष्ठे ), 'न चैतन्मयोक्तमपि तु कारिकाकाराभिप्रायेणेत्याह ।' ( ७३ पृष्ठे ), 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि संमतमेवेति भावः ।' ( ७३ पृष्ठे ), एतत्तावत्त्रिभेदत्वं न कारिकाकारेण कृतम् । वृत्तिकारेण तु दर्शितम् ।' ( १५० पृष्ठे ), इत्यादिभिर्वाक्यैः कारिकाकर्तुर्वृत्तिकारो भिन्न इति स्फुटमेव दृश्यते. तत्र कोऽयं ध्वनिकारिकाकार इत्यनिश्चितमेव. वृत्तिकारस्तु राजानकश्रीमदानन्दवर्धनाचार्यः कश्मीरेषु खिस्ताब्दीयनवमशतकोत्तरभागेऽवन्तिवर्ममहीपते राज्यसमये प्रसिद्ध आसीदिति राजतरङ्गिणीतो ज्ञायते. एतत्पितुश्च 'नोण' इति नामासीदित्येतत्प्रणीतदेवीशतकतो बुध्यते. ध्वन्यालोकः, देवीशतकम्, विषमबाणलीला ( प्राकृतम् ), अर्जुनचरितम्, विनिश्चयटीकाया धर्मोत्तमाया विवृतिः ( बौद्धग्रन्थः ), एतद्ग्रन्थपञ्चकमेतत्प्रणीतं ज्ञायते. तत्र ध्वन्यालोकः, देवीशतकं चेति ग्रन्थद्वयमेवाद्यावध्यधिगतम्. काव्यालोकः सहृदयहृदयालोक इति च ध्वन्यालोकस्यैव नामनी. अस्मिन्ध्वन्यालोके च ( १ ) अमरुकः, ( २ ) अर्जुनचरितम्, ( ३ ) आदिकविः

( वाल्मीकिः ), ( ४ ) उद्भटः, ( ५ ) कादम्बरी, ( ६ ) कालिदासः, ( ७ ) कुमारसंभवम्, ( ८ ) तापसवत्सराजः, ( ९ ) धर्मकीर्तिः, ( १० ) नागानन्दम्, ( ११ ) बाणः, ( १२ ) भरतः, ( १३ ) भामहः, ( १४ ) भारतम्, ( १५ ) मधुमथनविजयम्, ( १६ ) रत्नावली, ( १७ ) रामाभ्युदयम्, ( १८ ) रामायणम्, ( १९ ) विषमबाणलीला, ( २० ) वेणीसंहारम्, ( २१ ) व्यासः, ( २२ ) सर्वसेनः ( हरिविजयस्य प्राकृतकाव्यस्य प्रणेता ), ( २३ ) सेतुः, ( २४ ) हरिविजयम् ( प्राकृतम् ), ( २५ ) हर्षचरितम्, एतानि प्रत्नानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि समुपलभ्यन्ते.

लोचनाख्याया ध्वन्यालोकटीकायाः प्रणेतारो महामाहेश्वराचार्यश्रीमदभिनवगुप्तपादाचार्या अपि खिस्ताब्दीयदशमशतकोत्तरभाग एकादशशतकारम्भे च कश्मीरेष्वेवासन्निति तत्कृतबृहत्प्रत्यभिज्ञाविमर्षिनीसमाप्तौ 'इति नवतितमेऽस्मिन्वत्सरे[1]ऽन्त्ये युगांशे[2] तिथिशशिजलधिस्थे ( ४११५ ) मार्गशीर्षावसाने' इत्यादिपद्यात्प्रतीयते. श्रीलक्ष्मणगुप्तः, भट्टेन्दुराजः, भट्टतौतः, इति त्रयोऽप्युपाध्यायाः, वराहगुप्तः पितामहः; चुखलो नाम जनकः; मनोरथगुप्तोऽनुजः; कर्णक्षेमराजाद्याश्च शिष्याः श्रीमदाचार्याभिनवगुप्तानामासन्नित्यपि तत्प्रणीतग्रन्थेभ्यो ज्ञायते. ग्रन्थाश्चाचार्यप्रणीतग्रन्थेभ्योऽस्मदवगता एते-( १ ) अनुत्तराष्टिका, ( २ ) काव्यकौतुकस्य ( भट्टतौतकृतस्य ) विवरणम्, ( ३ ) क्रमस्तोत्रम्[3], ( ४ ) घटकर्परकुलकविवृतिः, ( ५ ) तन्त्रवटधानिका, ( ६ ) तन्त्रसारः, ( ७ ) तन्त्रालोकः, ( ८ ) देहस्थदेवताचक्रस्तोत्रम्, ( ९ ) ध्वन्यालोकलोचनम्, ( १० ) नाट्यलोचनम्, ( ११ ) परमार्थचर्चा, ( १२ ) परमार्थद्वादशिका, ( १३ ) परमार्थसारः, ( १४ ) परात्रिंशिकाविवरणम्, ( १५ ) प्रकरणस्तोत्रम्, ( १६ ) प्रत्यभिज्ञाविमर्षिनी बृहती वृत्तिः, ( १७ ) प्रत्यभिज्ञाविमर्षिनी लघुवृत्तिः, ( १८ ) बोधपञ्चदशिका, ( १९ ) भगवद्गीताटीका, ( २० ) भारतीयनाट्यशास्त्रटीका, ( २१ ) भैरवस्तोत्रम्[4], ( २२ )

---

१. तद्देशप्रसिद्धे लौकिकाब्दे. कलिगताब्देषु पञ्चविंशतिरहितेषु शतेन तष्टेषु यदवशिष्यते स एव लौकिकाब्दः. २. कलियुगे. ३. एतत्क्रमस्तोत्रं षट्षष्टिमिते लौकिकाब्दे ( ९९१ खिस्ता. ) [illegible] तत्समाप्तिश्लोकाज्ज्ञायते. ४. एतद्भैरवस्तोत्रमष्टषष्टिमिते लौकिकाब्दे विहितमिति तत्समाप्तौ स्फुटम्.

महोपदेशविंशतिः, ( २३ ) मालिनीविजयवार्तिकम्, एतेषु काव्यकौतुकविवरणं क्रमस्तोत्रं नाट्यलोचनं प्रकरणस्तोत्रं भारतीयनाट्यशास्त्रटीका चेति ग्रन्थपञ्चकम-पहाय सर्वेऽपि ग्रन्था अस्मदवलोकिताः सन्ति. ध्वन्यालोकलोचने च ( १ ) अम-रुकः, ( २ ) अर्जुनचरितम्, ( ३ ) अस्मद्गुरवः, ( ४ ) भट्ट-इन्दुराजः, ( ५ ) उत्पलाचार्याः, ( ६ ) उद्भटः, ( ७ ) ऐतिहासिकाः, ( ८ ) कादम्बरीकथासारः ( भट्टजयन्तप्रणीतः ), ( ९ ) काव्यकौतुकविवरणम्, ( १० ) कालिदासः, ( ११ ) चन्द्रिकाकारः, ( १२ ) जयन्तभट्टः, ( १३ ) तापसवत्सराजः, ( १४ ) भट्ट-तौतः, ( १५ ) दण्डी, ( १६ ) भट्ट-नायकः, ( १७ ) भट्टः ( मीमांसकः ), ( १८ ) भरतः, भरतशास्त्रम्, ( १९ ) भर्तृहरिः, ( २० ) भामहः, ( २१ ) भामहविव-रणम्, ( २२ ) मनोरथकविः ( आनन्दवर्धनाचार्यसमकालभवः ), ( २३ ) मुनिः ( भरतः ), ( २४ ) यशोवर्मा, ( २५ ) रघुवंशम्, ( २६ ) रत्नावली, ( २७ ) रामाभ्युदयम् ( यशोवर्मप्रणीतम् ), ( २८ ) वामनः, ( २९ ) विक्रमोर्वशी, ( ३० ) विनिश्चयटीकाधर्मोत्तमा विवृतिः, ( ३१ ) विवरणकृत्, ( ३२ ) विषमबाणलीला, ( ३३ ) स्वप्नवासवदत्ताख्यनाटकम्, ( ३४ ) हरिविजयम्, एतानि नामानि समु-पलभ्यन्ते. तत्र चन्द्रिकाभिधा काचन ध्वन्यालोकस्य व्याख्या लोचननिर्माणात्प्रा-गप्यासीदिति 'किं लोचनं विनालोको भाति चन्द्रिकयापि हि' इत्यादिलोचनान्त-स्थितपद्यतः, मध्ये मध्ये च तन्मतखण्डनतः प्रतीयते. स च चन्द्रिकाकारः श्री-मदाचार्याभिनवगुप्तपादानां कश्चन पूर्ववंशोद्भव इत्यपि तन्मतनिराकरणानन्तरं 'इत्यलं निजपूर्वजसगोत्रैः साकं विवादेन' ( १५१ पृष्ठे ), चन्द्रिकाकारस्तु पठित—'इत्यलं पूर्ववंश्यैः सह विवादेन' ( २३१ पृष्ठे ) इत्यादिभिर्लोचनस्थैर्वाक्यैः प्रतीयते. लोचनं तु ध्वन्यालोकोद्योतत्रयस्यैव समुपलभ्यते, चतुर्थोद्योतस्य तु मूलमात्रमेव.

अस्माभिस्तु सलोचनस्य ध्वन्यालोकस्य पुस्तकत्रयं संकलितम्. तत्र कश्मीरम-हाराजाश्रितज्योतिर्विदुपाह्वविद्वद्वरश्रीदयारामशर्मणां पुस्तकस्य प्रतिरूपकं ( १९३० ) मिते विक्रमाब्दे कश्मीरानधिवसद्भिरस्माभिर्गृहीतं प्रायः शुद्धं **क**-संज्ञकम्.

अपरं विद्वन्मूर्धन्यभाण्डारकरोपाह्वश्रीरामकृष्णशर्मभिः पुण्यपत्तनस्थराजकीय-पुस्तकालयस्थं पुस्तकं प्रहितमासीत्पूर्वतरे वर्षे. तदपि कस्यचित्काश्मीरिकपुस्तकस्य प्रतिरूपकं **ख**-संज्ञकम्.

तृतीयं मैसूरनगरस्थमरिमल्लप्पास्कूलसंस्कृताध्यापकैः आ० अनन्ताचार्यपण्डितैः कस्यचन शतद्वयवर्षप्राचीनस्य तालपत्रपुस्तकस्य प्रतिरूपकं तद्देशाक्षरसमुल्लसितं प्रहितम्. तत्तु ग-संज्ञकम्. तत्पठनं तु जयपुरस्थजैनपाठशालाध्यापकद्रविडकाशिनाथशास्त्रिणां साहाय्येन विहितम्.

इत्थं पुस्तकत्रयाधारेण कृतेऽपि मुद्रणे ग्रन्थस्यातिकाठिन्यात्पुस्तकानामनतिशुद्धत्वान्मतिमान्द्याच्चोर्वरितानवद्यान्विद्वांसः स्वयमपोहन्तु, भवन्तु च सानुकम्पा अस्मास्विति भद्रम्.

---

# काव्यमाला ।

## श्रीमदानन्दवर्धनाचार्यप्रणीतो

## ध्वन्यालोकः ।

### श्रीमदाचार्याभिनवगुप्तविरचितया लोचनाख्यया व्याख्ययानुगतः ।

प्रथम उद्योतः ।

स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः[1] ।
त्रायन्तां वो[2] मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥

---

अपूर्वं[1] यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्सारयति च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयतात् ॥

भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम् ।
यत्किंचिदप्यनुरणन्[2]स्फुटयामि काव्यालोकं सुलोचन[3]नियोजनया जनस्य ॥

स्वयमविच्छिन्नपरमेश्वरनमस्कारसंपत्तिचरितार्थोऽपि[4] व्याख्यातृश्रोतॄणामविघ्नेना[5]भीष्टव्याख्याश्रवणलक्षणफलसंपत्तये समुचिताशीःप्रकटनद्वारेण परमेश्वरसांमुख्यं करोति वृत्तिकारः—**स्वेच्छेति**[6] । मधुरिपोर्नखा वो[7] युष्मान्व्याख्यातृश्रोतॄंस्त्राय-

---

१. 'विजितेन्दवः' ग. २. 'वः प्रपन्नार्तिच्छिदो मधुरिपोर्नखाः' ग.

---

१. क-पुस्तके टीकाप्रारम्भे "उपास्महे स्वानुभवैकवेद्यं स्वच्छन्दमानन्दसमुद्रमीशम् । व्याप्तं जगच्छक्तितरत्तरङ्गैरदृष्टपारं परमेष्ठिनापि ॥' इह हि कश्चिद्विपश्चिज्जनमनोरञ्जनाय निजान्तेवासिवासनासंजननाय च दुर्हृदयोद्वेजितसहृदयसमुदायसमुत्तेजितः श्रीमदभिनवगुप्तपादोपदिष्टं शिष्टपरम्पराप्राप्तमभीष्टदेवतासमुखीकरणरूपं ध्वन्यालोचने मङ्गलं विवृणोति" इत्यधिकमस्ति. २. 'अनुरणत्' क-ख. ३. 'स्वलोचन' ख. ४. 'अपि' ग-पुस्तके नास्ति. ५. 'अविच्छिन्नाभीष्ट' ग. ६. 'स्वेच्छेत्यादिना' ग. ७. 'वो' ग-पुस्तके नास्ति.

न्ताम् । तेषाम[1]एवं संबोधनयोग्यत्वात् । संबोधनसारो हि युष्मदर्थः । त्राणं चाभी-[2]ष्टलाभं प्रति [3]साहायकाचरणम् । तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति । इयदत्र त्राणं विवक्षितम् । नित्योद्योगिनश्च भगवतः संमोहाध्यवसाय[4]प्रतियोगित्वेनोत्साहप्रतीतेर्वीररसो ध्वन्यते । नखानां प्रहरणत्वे, प्रहरणेन च रक्षणे कर्तव्ये नखानामव्यतिरिक्तत्वेन करणत्वात्सातिशय[5]शक्तिता कर्तृत्वेन सूचिता । ध्वनितश्च परमेश्वरस्य व्यतिरिक्त[6]करणापेक्षाविरहः । मधुरिपोरित्यनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः । कीदृशस्य मधुरिपोः । [7]स्वेच्छया केसरिणः । न तु कर्मपारतन्त्र्येण, नाप्यन्यदीयेच्छया । अपि तु विशिष्टदानवहननोचितात्तथाविधेच्छापरिग्रहौ[8]चित्यादेव स्वीकृतसिंहरूपस्येत्यर्थः । कीदृशा नखाः । प्रपन्नानामार्तिं ये छिन्दन्ति । नखानां छेदकत्वमुचितम् । आर्तेः पुनश्छेद्यत्वं नखान्प्रत्यसंभावनीयमपि तदीयानां नखानां स्वेच्छानिर्माणौचित्यात्[9]संभाव्यत एवेति यावत् । अथवा त्रिजगत्कण्टको हिरण्यकशिपुर्[10]विश्वस्योत्क्लेशक इति स एव वस्तुतः प्रपन्नानां [11]भगवदेकशरणस्थितीनां जनानामार्तिकारित्वान्मूर्तैवार्तिस्तं विनाशयद्भिरार्तिरेवोच्छिन्ना भवतीति परमेश्वरस्य तस्याम[12]प्यवस्थायां [13]परमकारुणिकत्वमुक्तम् । किं च ते किंगुणाः । स्वच्छेन स्वच्छतागुणेन नैर्मल्येन । स्वच्छमृदुप्रभृतयो हि मुख्यतया भाववृत्तय एव । स्वच्छायया च [14]वक्रहृद्यरूपयाकृत्यायासितः खेदित इन्दुर्यैः । अत्रार्थशक्त्यनुरणनमूलेन ध्वनिना बालचन्द्रत्वं ध्वन्यते । [15]आयासनेन तत्संनिधौ चन्द्रस्य विच्छायत्वप्रतीतिरहृद्यत्वप्रतीतिश्च ध्वन्यते । आयासकारित्वं च नखानां सुप्रसिद्धम् । नरहरिनखानां [16]तच्च लोकोत्तरेण रूपेण प्रतिपादितम् । किं च तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति । तुल्येऽपि स्वच्छकुटिलाकारयोगेऽमी प्रपन्नार्तिनिवारणकुशलाः, न त्वहमिति व्यतिरेकालंकारध्वनिः । किं चाहं पूर्वमेक एवासाधारणवैशद्यहृद्याकारयोगात्समस्तजनाभिलषणीयताभाजनमभवम्, अद्य पुनरेवंविधा [17]नखा दश बालचन्द्राकाराः संतापार्तिच्छेदकुशलाश्चेति ताने[18]व लोको

१. 'एवात्र' ग. २. 'फललाभं' ग. ३. 'साहाय्यका–' क-ख. ४. 'प्रति' ग-पुस्तके नास्ति. ५. 'शक्तता' ग. ६. 'कारणापेक्षा' ख. ७. 'स्वेच्छाकेसरिणः' ग. ८. 'हननोचिततथाविधेच्छापरिग्रहादेव' ग. ९. 'संभावित' क-ख. १०. 'विश्वक्लेशकरण एवेति' ग. ११. 'तदेक' ख. १२. 'अपि' ग-पुस्तके नास्ति. १३. 'परम' क-ख-पुस्तकयोर्नास्ति. १४. 'चक्र' ख. १५. 'आयासेन' क-ख. १६. 'तच्च' क-ख-पुस्तकयोर्नास्ति. १७. 'नखा' क-ख-पुस्तकयोर्नास्ति. १८. 'एवं' ग.

'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥'

बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरिति संज्ञितः परम्परया यः समाम्नातः समाख्यातः, तस्य सहृदयजनमनःप्रकाशमानस्याप्यभाव-

---

बालेन्दुबहुमाने न पश्यति, न तु सामिल्याकलयन्बालेन्दुरविरतमायासमनुभवतीत्युत्प्रेक्षापह्नुतिध्वनिरपि । एवं वस्त्वलंकाररसभेदेन त्रिधा ध्वनिरत्र श्लोकेऽस्मद्गुरुभिर्व्याख्यातः ॥ अथ प्राधान्येनाभिधेयस्वरूपमभिदधदप्रधानतया प्रयोजनप्रयोजनं तत्संबन्धं प्रयोजनं च सामर्थ्यात्प्रकटयन्नादिवाक्यमाह—**काव्यस्यात्मेति** । काव्यात्मशब्दसंनिधानाद्बुधशब्दोऽत्र काव्यात्मावबोधकनिमित्तक इत्यभिप्रायेण विवृणोति—**काव्यतत्त्वविद्भिरिति** । आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपरशब्दवैलक्षण्यकारित्वं च दर्शयति । इतिशब्दः स्वरूपपरत्वं ध्वनिशब्दस्याचष्टे । तदर्थस्य विवादास्पदीभूततया निश्चयाभावेऽर्थतत्त्वायोगात् । एतद्विवृणोति—**संज्ञित इति** । वस्तुतस्तु न तत्संज्ञामात्रेणोक्तम् । अपि त्वस्त्येव ध्वनिशब्दवाच्यं प्रत्युत समस्तसारभूतम् । नह्यन्यथा बुधास्तादृशमामनेयुरित्यभिप्रायेण विवृणोति—**तस्य सहृदयेत्यादिना** । एवं तु युक्ततरम् । इतिशब्दो भिन्नक्रमो वाक्यार्थपरामर्शकः । ध्वनिलक्षणोऽर्थः काव्यस्यात्मेति यः समाम्नातः । शब्दपरामर्शकत्वे हि ध्वनिसंज्ञितोऽर्थः इति का संगतिः । एवं हि[14] ध्वनिशब्दः काव्यस्यात्मेत्युक्तं भवेत् । गवित्ययमाहेति यथा । न च विप्रतिपत्तिस्थानमसदेव ।

---

१. 'अविषयं' ग. २. 'येन' ग.

---

१. 'इत्युत्प्रेक्ष्यते इत्युत्प्रेक्षापह्नुति' क-ख. २. 'रस' ग-पुस्तके नास्ति. ३. 'प्रयोजन' ग पुस्तके नास्ति. ४. 'तत्संबन्धिप्रयोजनं' ग. ५. 'बोधनिमित्त इत्यभि' ग. ६. 'तत्तदर्थस्य' ग. ७. 'निश्चयायोगात्' ग. ८. 'त्वस्यैव' ख., 'त्वन्यच्च' ग. ९. 'आमनेयुः कथयेरन्' क ख. 'त्वतादृशमामिनेयुरित्यभिप्रायेण' ग. १०. 'युक्तत्वम्' ग. ११. ध्वनिलक्षणार्थकः' ग. १२. 'पदार्थकत्वे' ग. १३. 'संज्ञको' ग. १४. 'हि' क-ख-पुस्तकयोर्नास्ति.

मन्ये जगदुः। तदभाववादिनां चामी विकल्पाः संभवन्ति। तत्र केचि-

---

प्रत्युत सत्येव धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः। इत्यलमप्रस्तुतेन भूयसा सहृदयजनोद्वेजनेन। बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम्। तेन बुधैरिति बहुवचनम्। एतदेव व्याचष्टे—परम्परयेति। अविच्छिन्नेन प्रवाहेण तैरेतदुक्तम्। विनापि विशिष्टपुस्तकेषु विवेचनादित्यभिप्रायः। नच बुधा भूयांसोऽनादरणीयं वस्त्वादरेणोपदिशेयुः। एतत्त्वादरेणोपदिष्टम्। तदाह—सम्यगय आम्नातपूर्व इति। पूर्वग्रहणेनेदंप्रथमता नात्र संभाव्यत इत्याह। व्याचष्टे च—समाख्यातः सम्यगासमन्ताख्यातः प्रकटित इत्यनेन। तस्येति। यस्याधिगमाय प्रत्युत यतनीयं का तत्रासंभवना। अतः किं कुर्मः। अपारं मौर्ख्यमभाववादिनामिति भावः। न चास्माभिरभाववादिनां विकल्पाः श्रुताः। किं तु संभाव्य दूषयिष्यन्ते। अतः परोक्षत्वम्। न च भविष्यद्वस्तु दूषयितुं शक्यम्। अनुत्पन्नत्वादेव। तदपि बुद्ध्यारोपितं दूष्यत इति चेत्, बुद्ध्यारोपितत्वादेव भविष्यत्वहानिः। अतो भूतकालोन्मेषात्परोक्षाद्विशिष्टाद्यतनत्वप्रतिभानाभावाच्च लिटा प्रयोगः कृतः—जगदुरिति। तद्व्याख्यानायैव संभाव्यदूषणं प्रकटयिष्यति। संभावनापि नेयमसंभवतो युक्ता, अपि तु संभवत एव। अन्यथा संभावनानामपर्यवसानं स्यात्, दूषणानां च। अतः संभावनानामभिधायिष्यमाणानां समर्थयितुं पूर्वं संभवन्तीत्याह। संभाव्यन्त इति तूच्यमानं पुनरुक्तार्थमेव स्यात्। न च संभवस्य संभावना। अपि तु सा वर्तमानतैव स्फुटेति वर्तमानेनैव निर्देशः। नन्वसंभवद्वस्तुमूलया संभावनया यत्संभावितं तद्दूषयितुमशक्यमित्याशङ्क्याह—विकल्पा इति। न तु वस्तु संभवति तादृक् यत इयं संभावना। अपि तु विकल्पा एव। ते च तत्त्वावबोधवन्ध्यतया स्फुरेयुरपि। अत एव

---

१. 'तत्र' क-ख-पुस्तकयोर्नास्ति.

---

१. 'तदेव ह्याचष्टे' ग. २. 'कैः' ग. ३. 'पुस्तकविनिवेशनात्' ग. ४. 'सम्यगाम्नातपूर्वः' ग. ५. 'प्रथमान्ता' ख. ६. 'व्याचष्टे च सम्यगाम्नातः प्रकटीकृतः' ग. ७. 'तत्राभावसंभावना' ग. ८. 'कृताः' क-ख. ९. 'दूषयिष्यते' ग. १०. 'प्रतिभानात्' ख. ११. 'च' क-ख-पुस्तकयोर्नास्ति. १२. 'संभवतीत्याह' ग. १३. 'संभवन्तीति संभाव्यन्त इति' क-ख. १४. 'संभवस्यापि' ख. १५. 'ननु च' ग. १६. 'न वस्तुसंभावना तादृक्क्रियत इयं' ग. १७. 'विकल्प एव' क-ख.

दाचक्षीरन्—शब्दार्थशरीरं तावत्काव्यम् । तस्य शब्दगताश्चारुत्व-

---

'आचक्षीरन्' इत्यादयोऽत्र संभावनाविषया लिङ्प्रयोगा अतीतपरमार्था[1] एव पर्यवस्यन्ति । यथा—'यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवत् । दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥' इत्यत्रार्थाद्यद्येवं काव्यस्य दृष्टता स्यात्तदैवमवलोकयेतेति भूतप्राणतैव[2] । यदि न स्यात्ततः किं स्यादित्यनेनापि[3] किं वृत्तम्, यदि न पूर्वं भवनस्य संभावनेत्ययमेवार्थः । इत्यलमप्रकृतेन बहुना । तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्ति व्यङ्ग्यम् । सदपि वा तदभिधाक्षिप्तं[4] शब्दावगतार्थबलाकृष्टत्वाद्भाक्तम्[5] । तदनाक्षिप्तमपि वा न वक्तुं शक्यम्[6], कुमारीष्विव भर्तृसुखमतद्वित्सु । अतस्त्रय एवैते[7] प्रधानविप्रतिपत्तिप्रकाराः[8] । तत्राभावविकल्पस्य त्रयः प्रकाराः । शब्दार्थगुणालंकाराणामेव शब्दार्थशोभाकारित्वाल्लोकशास्त्रातिरिक्तसुन्दरशब्दार्थमयस्य काव्यस्यानन्यशोभाहेतुः[9] कश्चिदन्योऽस्ति योऽस्माभिर्न गणित इत्येकः प्रकारः । यो वा न गणितः स शोभाकार्येव न भवतीति द्वितीयः[10] । अथ शोभाकारी भवति तर्ह्यस्मदुक्त एव गुणे वालंकारे वान्तर्भवति । नामान्तरकरणे तु कियदिदं पाण्डित्यम् । अथापि गुणेष्वलंकारेषु वान्तर्भावः[11], तथापि किंचिद्विशेषलेशमाश्रित्य[12] नामान्तरमात्रम्[13] । उपमाविच्छित्तिप्रकाराणामसंख्यत्वात् । तथापि गुणालंकारव्यतिरिक्तत्वाभाव एव[14] । तावन्मात्रेण च किं कृत्यम्[15] । अन्यस्यापि वैचित्र्यस्य शक्योत्प्रेक्ष्यत्वात्[16] । चिरंतनैर्हि भरतमुनिप्रभृतिभिर्यमकोपमे[17] शब्दार्थालंकारत्वेनेष्टे । तत्प्रपञ्चदिक्प्रदर्शनं त्वन्यैरलंकारकारैः कृतम् । तत्र यथा 'कर्मण्यण्' इत्यत्र कुम्भकाराद्युदाहरणं श्रुत्वा स्वयं नगरकारादिशब्दा उत्प्रेक्ष्यन्ते । तावता क आत्मनि बहुमानः । एवं प्रकृतेऽपीति तृतीयः प्रकारः । एवमेकस्त्रिधा विकल्पः अन्यौ च द्वौ इति पञ्च विकल्पा इति तात्पर्यार्थः । तानेव[18] क्रमेणाह—**शब्दार्थशरीरं तावदित्यादिना** । ताव-

---

१. 'अर्थात्' ग-पुस्तके नास्ति  २. 'तदेव' क-ख.  ३. 'इत्यत्रापि किं वृत्तं यदि पूर्ववन्न भवनसंभावनेत्ययमेवार्थः' ग. ४. 'अभिधावृत्त्या' ग. ५. 'शब्दानुगतार्थ' ख. ६. 'शक्यते' ख. ७. 'इति' ग. ८. 'प्रधानानि' ग. ९. 'काव्यस्य न शोभा' ग. १०. 'द्वितीयः प्रकारः' ग. ११. 'वा नान्तर्भावः' ग. १२. 'अविशेष' ग. १३. 'नामान्तरकरणम्' ग. १४. 'एव' ग-पुस्तके नास्ति. १५. 'कृतम्' ग. १६. 'उत्प्रेक्षितत्वात्' ग. १७. [illegible] ग. १८. 'तानेव च' ग.

हेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः। वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्तवृत्तयोऽपि याः

---

ग्रहणेन कस्याप्यत्र न[1] विप्रतिपत्तिरिति दर्शयति। तत्र[2] शब्दार्थौ न तावद्ध्वनिः। संज्ञामात्रे हि को गुणः। अथ[3] शब्दार्थयोश्चारुत्वं स ध्वनिः। तथापि द्विविधं चारुत्वम्—स्वरूपमात्रनिष्ठम्, संघटनाश्रितं च। तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालंकारेभ्यः। संघटनाश्रितं तु शब्दगुणेभ्यः। एवमर्थानां चारुत्वं स्वरूपमात्र[4]निष्ठमुपमादिभ्यः। संघटनापर्यवसितं त्वर्थगुणेभ्य इति न गुणालंकारव्यतिरिक्तो ध्वनिः कश्चित्। **वर्णसंघटनाधर्मा इति**। शब्दार्थयोरिति शेषः। यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवति। नित्यानित्यदोषा असाधुदुः[5]श्रवादय इव। चारुत्वहेतुश्च ध्वनिः। तन्न तद्व्यतिरिक्त इति व्यतिरेकी[6]। ननु वृत्तयो रीतयश्च यथा गुणालंकारव्यतिरिक्ताश्चारुत्वहेतवश्च तथा ध्वनिरपि तद्व्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो व्यतिरेक इत्यनेना[7]भिप्रायेणाह—**तदनतिरिक्तवृत्तय इति**। नैव वृत्तिरीतीनां तद्व्यतिरिक्तत्वं सिद्धम्। तथा ह्यनुप्रासानामेव[8] दीप्तमसृण[9]मध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसंपादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः। वर्तन्तेऽनुप्रासभेदा आस्विति। यदाह—'स्वरूपव्यञ्जनन्यासं[10] तिसृष्वेतासु वृत्तिषु। पृथक्पृथगनुप्रासमुशन्ति[11]' इति। पृथक्पृथगिति। परुषानुप्रासः[12]। उपनागरिकानुप्रासः। उपनागरिका ललिता। नागरिकया विदग्धया उपमितेति कृत्वा। मध्यमं कोमलम्। अपरुषमित्यर्थः। अत एव वैदग्ध्यविहीनस्वभावा सुकुमारा अपरुषा ग्राम्यवनितासादृश्यादियं वृत्ति[13]र्ग्राम्येति च तृतीयः कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव। न चेह वैशेषिकवद्वृत्तिर्विवक्षिता। येन जातौ जातिमतो[14] वर्तमानत्वं न स्यात्। तदनुग्रह एव हि तत्र वर्तमानत्वम्। यथाह कश्चित्—'लोकोत्तरे हि गाम्भीर्ये वर्तन्ते पृथिवी-

---

१. 'न' ग-पुस्तके नास्ति. २. 'तत्र' ग-पुस्तके नास्ति. ३. 'अतः' क-ख. ४. 'मात्र' क-ख-पुस्तकयोर्नास्ति. ५. 'दुःश्रवा इव' ख. ६. 'व्यतिरेकिहेतुः' ग. ७. 'अनेन' ग-पुस्तके नास्ति. ८. 'ह्यनुप्रासादीनां' क-ख. ९. 'मध्य' ग. १०. 'स्वरूपव्यञ्जनान्यासान्' ग. ११. 'कवयस्तथेति' ग. १२. 'परुषानुप्रासः। परुषा दीप्ता। मसृणानुप्रासः। उपनागरिका कथा विदग्धया' ग. १३. 'वृत्तिर्ग्राम्या,' कोमला च। तृतीयः कोमलपरुषानुप्रास इति' ग. १४. 'जातिमतिवर्तिनं' ग., 'वर्तमानं ख.

कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम्। रीतयश्च वैदर्भीप्रभृतयः। तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति।

अन्ये ब्रूयुः—नास्त्येव ध्वनिः। प्रसिद्धप्रस्थानव्यतिरेकिणः काव्य-

---

भुजः' इति। तस्माद्वृत्तयोऽनुप्रासेभ्योऽनतिरिक्तवृत्तयो नाभ्यधिकव्यापाराः। अत एव व्यापारभेदाभावान्न पृथगनुमेयस्वरूपा अपीति वृत्तिशब्दस्य व्यापारवाचिनोऽभिप्रायः। अनतिरिक्तत्वादेव वृत्तिव्यवहारो भामहादिभिर्न कृतः। उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह—**गताः श्रवणगोचरमिति। रीतयश्चेति।** तदनतिरिक्तवृत्तयोऽपि गताः श्रवणगोचरमिति संबन्धः। **तद्व्यतिरिक्त इति।** तच्छब्देनात्र माधुर्यादयो गुणाः। तेषां च समुचितचित्तवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां संघातरूपतागमनं दीप्तललितमध्यमवर्णनीयविषयं गौडीयवैदर्भपाञ्चालदेशहेवाकप्राचुर्यदृशा तदेव त्रिविधं रीतिरित्युक्तम्। जातिर्जातिमतो नान्या समुदायश्च समुदायिभ्यो नान्य इति वृत्तिरीतयो न गुणालंकारव्यतिरिक्ता इति स्थित एवासौ व्यतिरेकी हेतुः। तदाह—**कोऽयं ध्वनिरिति।** नैष चारुत्वस्थानम्। शब्दार्थत्वरूपत्वाभावात्। नापि चारुत्वहेतुः। गुणालंकारव्यतिरिक्तत्वात्। तेनाखण्डबुद्धिसमास्वाद्यमपि काव्यमपोद्धारबुद्ध्या यदि विभज्यते तत्रा(था)प्यत्र ध्वनिशब्दवाच्यो न कश्चिदतिरिक्तोऽर्थो लभ्यत इति नामशब्देनाह। ननु मा भूदसौ शब्दार्थस्वभावः, मा च भूच्चारुत्वहेतुः येन गुणालंकारव्यतिरिक्तोऽसौ न स्यादित्याशङ्क्य द्वितीयमभाववादप्रकारमाह—**अन्य इति।** भवत्वेवम्, तथापि नास्त्येव ध्वनिर्यादृशस्त्वत लिलक्षयिषितः काव्यस्य ह्यसौ कश्चिद्वक्तव्यः। न चासौ गीतनृत्तहास्यादि-

---

१. 'काश्चित्' ग.

---

१. 'नुप्रासादिभ्यो' क-ख. २. 'अभिधेय' ग. ३. 'तद्व्यतिरिक्त इति' ग-पुस्तके नास्ति. ४. 'गमनं च दीप्त' ख., 'गमनदीप्त' ग. ५. वैदर्भीपाञ्चालीदेशपाकप्राचुर्य' ग. ६. 'समुदायिनो' ग. ७. 'स्वरूपाभावात्' ग. ८. 'यदि' ख-पुस्तके नास्ति. ९. 'अर्थो' ग-पुस्तके नास्ति. १०. 'तेन गुणालंकारव्यतिरिक्तेन सौस्थ्यादित्या' ग. ११. 'लिलक्षयिषितः' ग. १२. 'कश्चिदस्त्यवश्यमिति' ग.

प्रकारस्य काव्यत्वहानेः । सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम् । न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्संभवति । न च तत्समयान्तःपातिनः सहृदयान्कांश्चित्परिकल्पिततत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते ।

---

स्थानीयः काव्यस्य कश्चित् । कवनीयं काव्यम् । तस्य भावः काव्यत्वम् । न च नृत्तगीतादि कवनीयमित्युच्यते । **प्रसिद्धेति** । प्रसिद्धं प्रस्थानं शब्दार्थौ तद्गुणालंकाराश्चेति । प्रतिष्ठन्ते परम्परया विहरन्ति येन मार्गेण तत्प्रस्थानम् । **काव्यप्रकारस्येति** । काव्यप्रकारत्वेन तव स मार्गोऽभिप्रेतः । 'काव्यस्यात्मा' इत्युक्तत्वात् । ननु कस्मात्तत्काव्यं न भवतीत्याह—**सहृदयेति** । **मार्गस्येति** । नृत्तगीताद्यक्षिनिकोचनादिप्रायस्येत्यर्थः । **तदिति** । सहृदयेत्यादिकाव्यलक्षणमित्यर्थः । ननु ये तादृशमपूर्वं काव्यरूपतया जानन्ति त एव सहृदयाः । तदभिमतत्वं च नाम काव्यलक्षणमुक्तप्रस्थानातिरेकिण एव भविष्यतीत्याशङ्क्याह—**न चेति** । यथा हि खङ्गलक्षणं करोमीत्युक्त्वा आतानवितानात्मा प्रावियमाणः सकलदेहाच्छादकः सुकुमारश्चित्रतन्तुविचितः संवर्तनविवर्तनसहिष्णुरच्छेदकः सुच्छेद्य उत्कृष्टः खङ्ग इति ब्रुवाणः परैः पटः खल्वेवंविधो भवति न खङ्ग इत्युक्ततया पर्यनुयुज्यमान एवं ब्रूयात्—ईदृश एव खङ्गो ममाभिमत इति तादृगेवैतत् । प्रसिद्धं हि लक्ष्यं भवति न कल्पितमिति भावः । तदाह—**सकलविद्वदिति** । विद्वांसोऽपि हि तत्समयज्ञा एव भविष्यन्तीति शङ्कां सकलशब्देन निराकरोति । एवं हि कृतेऽपि न किंचित्कृतम् । तस्मादुन्मत्तता परं प्रकटितेति भावः । यस्त्वत्राभिप्रायं व्याचष्टे—जीवितभूतो ध्वनिस्तावत्त्वयाभिमतः । जीवितं

---

१. 'अतिक्रमिणो' ग. २. 'परिकल्प्य तत्प्र–' ग. ३. 'एव लम्बते' ग.

---

१. 'काव्यस्य च' क-ख. २. 'नृत्तादे' ग. ३. 'प्रसिध्येति' क. ४. 'नृत्तगीतादिकामिनीकोपादिप्राय' ग. ५. 'तमिति' ग. ६. 'हि' क-ख-पुस्तकयोर्नास्ति. ७. 'प्रापयमाणः' ग. ८. 'तन्तुचितः' ग. ९. 'स्वच्छ' ख-ग. १०. 'न' ग-पुस्तके नास्ति. ११. 'विकल्पितं' क.. १२. 'अपि' ख-पुस्तके नास्ति. १३. 'हि' ग-पुस्तके नास्ति. १४. 'एव' क-ख-पुस्तकयोर्नास्ति. १५. 'किंचित्कृतं स्यात्' क., 'कश्चित्कृतः स्यात्' ग. १६. 'त्वयाभिमतः' क-ख.

पुनरपरे तस्याभावमन्यथा कथयेयुः—न संभवत्येव ध्वनिर्नामापूर्वः कश्चित् । कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात् । तेषामन्यतमस्यैव वा पूर्वसमाख्यामात्रप्रकरणे यत्किंचन कथनं[1] स्यात् । किं च वाग्विकल्पानामानन्त्यात्संभवत्यपि वा कस्मिंश्चित्काव्यलक्षणविधायिभिः प्रसिद्धैरदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति तदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते । तत्र हेतुं न विद्मः । सहस्रशो हि[2] महात्मभिरन्यैरलंकारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च ।

---

च नाम प्रसिद्धप्रस्थानातिरिक्तम् । अलंकारैरनुक्तत्वात्तच्च न काव्यमिति लोके प्रसिद्धमिति । तस्येदं सर्वं स्ववचनविरुद्धम् । यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना तच्चिरंतनैरनुक्तमिति प्रत्युत लक्षणानर्हमेव[1] भवति । तस्मात्प्राक्तन एवात्राभिप्रायः[2] । ननु भवत्वसौ चारुत्वहेतुः शब्दार्थगुणालंकारान्तर्भूतश्च, तथापि ध्वनिरित्यमुया भाषया जीवितमित्यसौ न केनचिदुक्त इत्यभिप्रायमाशङ्क्य तृतीयसभाववादमुपन्यस्यति—**पुनरपर इति** । कामनीयकमिति कमनीयस्य कर्म । चारुत्वहेतुतेति यावत् । ननु विच्छित्तीनामसंख्येयत्वान्न काचित्तादृशी विच्छित्तिरस्माभिर्दृष्टा या नानुप्रासादौ नापि माधुर्यादावुक्तलक्षणेऽन्तर्भवेदित्याशङ्क्याभ्युपगमपूर्वकं परिहरति—**वाग्विकल्पानामिति** । वक्तीति वाक् शब्दः । उच्यत इति वागर्थः । उच्यतेऽनयेति वागभिधाव्यापारः । तत्र शब्दार्थवैचित्र्यप्रकारोऽनन्तः । अभिधावैचित्र्यप्रकारोऽप्यसंख्येयः । **प्रकारलेश इति** । स हि चारुत्वहेतुर्गुणो वालंकारो वा स च सामान्यलक्षणेन संगृहीत एव । यदाहुः[3]—'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलंकाराः' इति[4] । ध्वनिर्ध्वनिरिति वीप्सायां संभ्रमं सूचयन्नादरं दर्शयति—**नृत्यत इति** । तल्लक्षणकृद्भिस्तद्युक्तकाव्यविधायिभिस्तच्छ्रवणोद्भूतचमत्कारैश्च[5] प्रतिपत्तृभिरिति[6] शेषः । ध्वनिशब्दे

---

१. 'कथं न' ख., 'कथितं' ग. २. 'अपि' क-ख.

---

१. 'लक्षण.ईं' ग. २. 'अत्र' ग-पुस्तके नास्ति. ३. 'यदाह' ग. ४. ग-पुस्तके 'इति' इत्यस्मादनन्तरं 'तथा व...भिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः । इति' इत्यधिकमस्ति. ५. 'विधातृभिः' क-ख. ६. 'च' क-ख-पुस्तकयोर्नास्ति.

न च तेषामेषा दशा श्रूयते । तस्मात्प्रवादमात्रं ध्वनिः । न त्वस्य क्षोदक्षमं[1] तत्त्वं किंचिदपि[2] प्रकाशयितुं शक्यम् । तथा चान्येन कृत एवात्र श्लोकः—

'यस्मिन्नस्ति न वस्तु किंचन मनःप्रह्लादि सालंकृति[3]
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत् ।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति[4] किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥'

---

कोऽत्यादर इति भावः । **एषा दशेति** । स्वयं दर्पः परैश्च स्तूयमानतेत्यर्थः । वाग्विकल्प[1] इति वाक्प्रवृत्तिहेतुप्रतिभाव्यापार[2]प्रकार इति वा । तस्मात्प्रवादमात्रमिति सर्वेषामभाववादिनां साधारण उपसंहारः[3] । यतः शोभाहेतुत्वे गुणालंकारेभ्यो न व्यतिरिक्तः । यतश्च व्यतिरिक्तत्वे न शोभाहेतुः । यतश्च शोभाहेतुत्वेऽपि[4] नादरास्पदं तस्मादित्यर्थः । न चेयमभावसंभावना निर्मूलैव दूषितेत्याह—**तथा चान्येनेति** । ग्रन्थकृत्समानकालभाविना[5] मनोरथनाम्ना कविना । यतो न सालंकृति अतो न मनःप्रह्लादि । अनेनार्थालंकाराणामभाव उक्तः । व्युत्पन्नै रचितं च नैव[6] वचनैरिति शब्दालंकाराणाम् । वक्रोक्तिरुत्कृष्टा संघटना । तच्छून्यमिति शब्दार्थगुणानाम् । वक्रोक्तिशून्य[7]शब्देन सामान्यलक्षणाभावेन सर्वालंकाराभाव उक्त इति केचित् । तैः पुनरुक्तं न परिहृतमित्यलम्[8] । **प्रीत्येति** । गतानुगतिकानुरागेणेत्यर्थः । **सुमतिनेति** । जडेन पृष्टो भ्रूभङ्गकटाक्षादिभिरेवोत्तरं[9] ददत्तत्स्वरूपं काममाचक्षीतेति भावः । एवमेतेऽभावविकल्पाः शृङ्खलाक्रमेणागताः । न त्वन्योन्यमसंबद्धा एव । तथा हि तृतीयाभावप्रकारनिरूपणोपक्रमे पुनःशब्दस्यायमेवाभिप्राय उपसंहारैक्येन[10] संगच्छते । अभाववादस्य संभावनाप्राणत्वेन भूतत्वमुक्तम् ।

---

१. 'क्षोदक्षमत्वं' ग. २. 'अस्ति' क-ख. ३. 'मालंकृति' ख, 'सोऽलंकृति' ग. ४. 'अभिदधातु' ग.

---

१. 'वाग्विकल्पा इति वाक्प्रतिपत्तिहेतु' ग. २. 'व्यापारा इति' ग ३. 'इव संभारः' ग. ४. 'अपि' ग-पुस्तके नास्ति. ५. 'भाविनैव' ग. ६. 'यन्न' ग. ७. 'शून्य' क-ख-पुस्तकयोर्नास्ति. ८. 'परिहृतमेवेत्यलम्' ग. ९. 'कटाक्षैरेव' ग. १०. 'उपसंभारैक्ये न संगच्छते' ग.

भाक्तमाहुस्तमन्ये । अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः । यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि गुणवृत्त्या काव्येषु

---

भाक्तवादस्त्वविच्छिन्नः पुस्तकेष्विल्यभिप्रायेण भाक्तमाहुरिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम् । भज्यते सेव्यते प्राज्ञेन प्रसिद्धतयोद्धोष्यत इति भक्तिर्धर्मोऽभिधेयेन सारूप्यादिः । तत आगतो भाक्तो लाक्षणिकोऽर्थः । यदाहुः—'अभिधेयेन सारूप्यात्सामीप्यात्समवायतः । वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥' इति । गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः । तत आगतो गौणोऽर्थो भाक्तः । भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः । तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च । मुख्यस्य वार्थस्य भङ्गो भक्तिरित्येवं मुख्यार्थबाधननिमित्तप्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति । **काव्यात्मानं गुणवृत्तिरिति** । सामानाधिकरण्यस्यायं भावः—यद्यप्यविवक्षितवाच्ये ध्वनिभेदे 'निःश्वासान्ध इवादर्शः' इत्यादावुपचारोऽस्ति, तथापि न तदात्मैव ध्वनिः । तद्व्यतिरेकेणापि भावात् । विवक्षितान्यपरवाच्यप्रभेदादावविवक्षिते वाच्येऽप्युपचार एव, न ध्वनिरिति वक्ष्यामः । तथा च वक्ष्यति—'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः । अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥' [इति], 'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।' इति च । गुणाः सामीप्यादयः । धर्मास्तैक्ष्ण्यादयश्च । तैरुपायैर्वृत्तिरर्थान्तरे यस्य, तैरुपायैर्वृत्तिर्वा शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा । गुणद्वारेण वा वर्तनं गुणवृत्तिरमुख्योऽभिधाव्यापारः । एतदुक्तं भवति—ध्वनतीति वा, ध्वन्यत इति वा, ध्वननमिति वा यदि ध्वनिस्तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित् । मुख्यार्थे ह्यभिधैवेति पारिशेष्यादमुख्य एव ध्वनिः । तृतीयराश्यभावात् । ननु केनैतदुक्तं ध्वनिर्गुणवृत्तिरित्याशङ्क्याह—**यद्यपि चेति । अन्यो वेति** । गुणालंकारप्रकार इति यावत् ।

---

१. 'विभाक्तं' ग. २. 'संभाव्यते पदार्थेन' क-ख. ३. 'सादृश्यात्' क-ख. ४. 'प्रभेदात्' ख. ५. 'त्वया' ख. ६. 'साम्यादयः' ख. ७. 'स्मृतिः' ग. ८. 'तैरुपायैर्वा शब्दस्य यत्र गुणवृत्तिः' ग. ९. 'वर्तमानं' क-ख. १०. 'मुख्यार्थेऽप्यभिधैव' ग.

व्यवहारं दर्शयता ध्वनिमार्गो मनाक्स्पृष्टो[1] लक्ष्यत इति परिकल्प्यैवमुक्तम्—भाक्तमाहुस्तमन्ये इति।

केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः। तेनैवंविधासु विमतिषु स्थितासु सहृदय-

---

**दर्शयतेति**। भट्टोद्भटवामनादिना। भामहोक्तं[1] 'शब्दश्छन्दोभिधानार्थः'[2] इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे—'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च' इति। वामनोऽपि 'सा सादृश्याल्लक्षणा[3] वक्रोक्तिः' इति। **मनाक्स्पृष्ट इति**। तैस्तावद्ध्वनिदिगुन्मीलिता। यथालिखितप्रतिपादकैस्तु[4] स्वरूपविवेकं कर्तुमशक्नुवद्भिस्तत्स्वरूपविवेकोद्यतः[5] प्रत्युतोपालभ्यते अभग्ननारिकेलकल्पयथाश्रुतग्रन्थनोद्ग्रन्थनमात्रेणेति[6]। अत एवाह—**परिकल्प्यैवमुक्तमिति**। यद्येवं न योज्यते[7] तदा ध्वनिमार्गः स्पृष्ट इति पूर्वपक्षेऽभिधानं[8] विरुध्यते। **शालीनबुद्धय इति**। अप्रगल्भमतय इत्यर्थः। एते च त्रय उत्तरोत्तरं भव्यबुद्धयः। प्राच्या हि विपर्यस्ता एव सर्वथा। मध्यमास्तु तद्रूपं जानाना अपि संदेहेनापह्नुवते[9]। अन्त्यास्त्वनपह्नुवाना[10] अपि लक्षयितुं न जानत इति क्रमेण विपर्याससंदेहाज्ञानप्राधान्यमेतेषाम्। **तेनेति**। एकैकोऽप्ययं विप्रतिपत्तिरूपो वाक्यार्थो निरूपणे[11] हेतुत्वं प्रतिपद्यत इत्येकवचनम्। **एवंविधासु विमतिष्विति** निर्धारणे सप्तमी। आसु मध्ये एकोऽपि[12] यो विमतिप्रकारस्तेनैव हेतुना तत्स्वरूपं ब्रूम इति ध्वनिस्वरूपमभिधेयम्। अभिधानाभिधेयलक्षणयोर्ध्वनिशास्त्रयोर्वक्तृश्रोत्रोर्व्युत्पाद्यव्युत्पादकभावः संबन्धः। विमतिनिवृत्त्या तत्स्वरूपज्ञानं प्रयोजनम्। शास्त्रप्रयोजनयोः साध्यसाधनभावः[13] संबन्ध इत्युक्तम्। अथ[14] त्रितयप्रयोजनप्रतिपादकं 'सहृदयमनःप्रीतये' इति भागं व्याख्यातु-

---

१. 'स्पृष्टोऽपि न' ख.

---

१. 'भामहेनोक्तं' ग. २. 'शब्दाश्छन्दोभिधानार्थाः' ग., 'शब्दश्छन्दोभिधानार्थं' ख. ३. 'सादृश्यात्' ग-पुस्तके नास्ति. ४. 'पाङ्क्तैस्तु' ग. ५. 'विवेकोद्योतः' ख., 'विवेको न कृतः' ग. ६. 'तद्ग्रन्थोद्ग्रहण' ग. ७. 'योक्ष्यते मनाग्ध्वनि' ग. ८. 'पक्षविधानं' ग. ९ 'निह्नुवते' ग. १०. 'निह्नुवाना' ग. ११. 'निरूपणेऽपि' ग. १२. 'एकोऽपि' ग-पुस्तके नास्ति. १३. 'साधकभाव इत्युक्तम्' क-ख. १४. 'अतः श्रोतृगतप्रयोजन' ग.

मनःप्रीतये तत्स्वरूपं ब्रूमः । तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिश्चिरंतनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् । अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते ।

---

माह—**तस्य हीति** । विमतिपदपतितस्येत्यर्थः । ध्वनेः स्वरूपं लक्षयतां संबन्धिनि मनसि आनन्दो निर्वृत्यात्मा चमत्कारापरपर्यायः प्रतिष्ठां परैर्विपर्यासाद्युपहतैरनुन्मील्यमानत्वेन स्थेमानं लभतामिति प्रयोजनं संपादयितुं तत्स्वरूपं प्रकाश्यत इति संगतिः । प्रयोजनं च नाम तत्संपादकवस्तुप्रयोक्तृताप्राणतयैव तथा भवतीत्याशयेन मनःप्रीतये तत्स्वरूपं ब्रूम इत्येकवाक्यतया व्याख्यातं तत्स्वरूपशब्दं व्याचक्षाणः संक्षेपेण तावत्पूर्वोदीरितविकल्पपञ्चकोद्धरणं प्रथयति—**सकलेत्यादिना** । सकलशब्देन सत्कविशब्देन च प्रकारलेशे कस्मिंश्चिदिति निराकरोति । अतिरमणीयमिति भाक्ताद्व्यतिरिक्तमाह । नहि 'सिंहो बटुः', 'गङ्गायां घोष' इत्यत्र रम्यता काचित् । उपनिषद्भूतशब्देन तु अपूर्वसमाख्यामात्रकरण इत्यादि निराकृतम् । अणीयसीभिरित्यादिना गुणालंकारानन्तर्भूतत्वं सूचयति । अथ चेत्यादिना तत्समयान्तःपातिन इत्यादिना यत्सामयिकत्वं शङ्कितं तन्निरवकाशीकरोति । रामायणमहाभारतप्रभृतिशब्देनादिकवेः प्रभृति सर्वैरेव मुनिभिरस्यादरः कृतः इति दर्शयति । लक्षयतामित्यनेन वाचां स्थितमविषय इति परास्यति । लक्ष्यतेऽनेनेति लक्ष्यो लक्षणम् । लक्ष्येण निरूपयन्ति लक्षयन्ति तेषाम् । लक्षणद्वारेण निरूपयतामित्यर्थः । **सहृदयानामिति** । येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते[५] हृदयसंवादभाजः सहृदयाः । यथोक्तम्—'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः । शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥' इति । **आनन्द इति** । रसस्य चर्वणात्मनः प्राधान्यं दर्शयन्रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वमिति दर्शयति । तेन यदुक्तम्—

---

१. 'अणीयसीभिरपि' ग.

---

१. 'मनसि हृदये' क-ख. २. 'पञ्चतोद्धरणं' ग. ३. 'व्यतिरेकमाह' ग. ४. 'कश्चित्' ख. ५. 'त एव' ग.

## तत्र पुन[1]र्ध्वनेर्लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—

'ध्वनिर्नामापरो योऽसौ व्यापारो व्यञ्जनात्मकः । तस्य सिद्धे[1]ऽपि भेदे स्यात्[2]काव्याङ्गत्वं न रूपिता ॥' इति तदपहस्तितं भवति । तथा ह्यभिधाभावनारसचर्वणात्मकोऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादोऽस्ति । यथोक्तं त्वयैव—'काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्' इति । तद्वस्त्वलंकारध्वन्यभिप्रायेणाङ्ग[3]मात्रत्वमिति सिद्धसाधनम् । रसध्वन्यभिप्रायेण तु स्वा[4]भ्युपगमप्रसिद्धिसंवेदनविरुद्धमिति । तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव संपाद्या । यदाह—'कीर्तिं स्वर्गफलामाहुः' इत्या[5]दि । श्रोतॄणां च व्युत्पत्ति[6]र्यद्यप्यस्ति, यथोक्तम्—'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषे[7]वणम् ॥' इति, तथापि प्रीतिरेव प्रधानम् । अन्यथा प्रभुसंमितेभ्यो वेदादि[8]भ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतो[9]र्जायासंमितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः । चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम् । आनन्द इति च ग्रन्थकृतो नाम । तेन स एवानन्दवर्धनाचार्य एतच्छास्त्रद्वारेण सहृदयहृदयेषु प्रतिष्ठां देवता[10]यतनादिवदनश्वरीं स्थितिं[11] लभताम् । सिद्धिं गच्छत्विति भावः । यथोक्तम्—'उपेयुषामपि दिवं सन्निबन्धविधायिनाम् । आस्त[12] एव निरातङ्कं कान्तं काव्यमयं वपुः ॥' इति । तथा[13] मनसि प्रतिष्ठामिति एवंविधस्य मनसः सहृदयचक्रवर्ती खल्वयं ग्रन्थकृदिति भाव[14]ः । यथा—'युद्धे प्रतिष्ठा परमार्जुनस्य' इति । स्वनामप्रकटीकरणं श्रोतॄणां प्रवृत्त्यङ्गमेव संभावनाप्रत्य[15]योत्पादकमुखेनेति ग्रन्थान्ते वक्ष्यामः । एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम् ।

न[16]नु ध्वनिस्वरूपं ब्रूम' इति प्रतिज्ञाय वाच्यप्रतीयमानाख्यौ द्वौ भेदाव[17]र्थस्येति

१. 'पुनः' ग-पुस्तके नास्ति.

१. 'असिद्धे ग. २. 'काव्येंऽशत्वं न रूपतेति । एतेनापहस्तितं' ग. ३. 'अंशमात्रत्वं' ग. ४. 'स्वार्थापगम' ग. ५ 'इत्यादौ' क-ख. ६. 'व्युत्पत्तिप्रीती यद्यपि स्तः' ग. ७. 'निबन्धनम्' क-ख. ८. 'वेदादिशास्त्रेभ्यो' क-ख. ९. 'हेतुजाया' ग. १०. 'देवायतनादि' ग. ११. 'स्थितिं लभताम्' क-ख-पुस्तकयोर्नास्ति. १२. 'आस्थयेव' ग. १३. 'यथा' ख. १४. 'यावत्' क-ख. १५. 'प्रत्ययोपादानमुखेन' ग. १६. ग-पुस्तके 'तत्रेति' इत्यादि 'इत्यर्थः' इत्यन्तं [illegible]म्, 'ननु ध्वनिस्वरूपं' इत्यादि 'करोति' इत्यन्तं चानन्तरं वर्तते. १७. 'अस्येति' ग.

**'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[1] ॥ २ ॥'**

काव्यस्य हि ललितोचितसंनिवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो यो[2]ऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

---

व्याख्याभिधाने का संगतिः कारिकाया इत्याशङ्क्य संगतिं कर्तुमवतरणिकां करोति[1]—**तत्रेति** । एवंविधेऽभिधेये प्रयोजने च स्थित इत्यर्थः । भूमिरेव[2] भूमिका । यथा पूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिरेव विरच्यते तथा ध्वनिस्वरूपे प्रतीयमानाख्ये निरूपयितव्ये[3] निर्विवादसिद्धवाच्याभिधानं भूमिः । तत्पृष्ठेऽधिकप्रतीयमानांशोल्लिङ्गनात्[4] । वाच्येन समशीर्षिकागणनं तस्याप्यनपह्नवनीयत्वं प्रतिपादयितुम् । स्मृताविल्यनेन यः समाम्नातपूर्व इति द्रढयति । शब्दार्थशरीरं काव्यमिति यदुक्तं तत्र शरीरग्रहणादेव[5] केनचिदात्मना तदनुप्राणकेन भाव्यमेव । तत्र शब्दस्तावच्छरीरभाग एव संनिविशते[6] । सर्वजनसंवेद्यधर्मत्वात्स्थूलकृशादिवत् । अर्थः पुनः सकलजनसंवेद्यो न भवति । न ह्यर्थमात्रेण काव्यव्यपदेशः[7] । लौकिकवैदिक[8]वाक्येषु तदभावात् । तदाह—**सहृदयश्लाघ्य इति** । स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्याभियुज्यते । तथाहि—तुल्येऽर्थरूपत्वे किमिति कैश्चित्[9]सहृदयः श्लाघते । तद्भवितव्यं केनचिद्विशेषेण । [10]यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसंकलना[11]विमोहितहृदयैस्तु तत्पृथग्भावो[12] विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावः[13] । अत एवार्थ इत्येक[14]तयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धारण[15]दशा तस्य द्वौ भेदावंशावित्युक्तम् । न तु द्वावप्यात्मानौ काव्यस्य[16] । काव्यात्मेति कारिकाभाग[17]गतं काव्यशब्दं व्याकर्तुमाह—**काव्यस्य हीति** । ललित[18]शब्देन गुणालंकार-

---

१. 'स्मृतः' क ख. २ 'यो' क-ख-पुस्तकयोर्नास्ति.

---

१. 'करोति ध्वनेरेवेत्यादिना' ग. २. 'इव' ग. ३. 'निरूपितव्ये' क-ख. ४. 'आलिङ्गनात्' ग. ५. 'निर्वहणादेव' ग. ६. 'संनिविंशते' ख. ७. 'व्यवहारः' ग. ८. 'विभज्यते' ग. ९. 'कस्मैचिदेव सहृदयाः श्लाघन्ते । तत्र भवितव्यं' ग. १०. 'यतो विशेषः' ग. ११. 'संवलना' ग. १२. 'भावे' ग. १३. 'भावे' ग. १४. 'इत्येक' ग-पुस्तके नास्ति. १५. 'उपोद्धारदशा' ग. १६. 'काव्यस्य' क-ख-पुस्तकयोर्नास्ति. १७. 'भाग' ग. पुस्तके नास्ति. १८. 'मिलित' ग.

**'तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।**
**बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥३॥'**

ततो[1] नेह प्रतन्यते केवलमनूद्यते पुनर्[2]यथोपयोगमिति ।

**'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति[3] लावण्यमिवाङ्गनासु ४'**

---

ग्रहण[1]माह । उचितशब्देन रसविषयमेवौचित्यं भवतीति दर्शयन्रसध्वनेर्जीवितं सूचयति[2] । तदभावे हि किमपेक्षयेदमौचित्यं नाम सर्वत्रोद्घोष्यत इति[3] भावः । योऽर्थ इति[4] यतानुवदन्[5]परेणाप्येतत्ता[6]वदभ्युपगतमिति दर्शयति—**तस्येत्यादिना ।** तदभ्युपगम एव बुध्यंशत्वे सत्युपपद्यत इति दर्शयति । तेन यदुक्तम्—'चारुत्व[7]-हेतुत्वाद्गुणालंकारव्यतिरिक्तो न ध्वनिः' इति तत्र ध्वनेरात्मस्वरूपत्वाद्धेतुरसिद्ध इति दर्शितम् । न[8] ह्यात्मा चारुत्वहेतुर्देहस्येति भवति । अथाप्येवं स्यात्तथापि वाच्ये नानैकान्तिको हेतुः । न ह्यलंकार्य एवालंकारः । गुणी एव[9] गुणः । तदर्थमपि[10] वाच्यांशोपक्षेपः । अत एव वक्ष्यति—'वाच्यः प्रसिद्धः' इति ।

**तत्रेति** । ध्वंशत्वे सत्यपीत्यर्थः । **प्रसिद्ध इति** । वनितावदनोद्यानेन्दूदयादिवल्लौकिक एवेत्यर्थः । उपमादिभिः प्रकारैः स व्याकृतो बहुधेति संगतिः । अन्यैरिति कारिकाभागं काव्येत्यादिना व्याचष्टे—**ततो नेह प्रतन्यत इति ।** विशेषप्रतिषेधेन शेषाभ्यनुज्ञेति दर्शयति—**केवलमित्यादिना** । पुनःशब्दो वाच्याद्[11]विशेषद्योतकः ।

**अन्यदेव वस्त्विति ।** तद्व्यतिरिक्तं[12] सारभूतं चेत्यर्थः । महा[13]कवीनामिति बहुवचनमशेषविषयो[14]व्यापकत्वमाह । एतदभिधास्यमा[15]नप्रतीयमानानुप्राणितकाव्य-

---

१. 'भट्टोद्भटप्रभृतिभिस्ततो' ग. २. 'पुनः' सर्वेषु पुस्तकेषु नास्ति. ३. 'आभाति' ग.

---

१. 'अनुग्रह' ग. २. 'सूत्रयति' ग. ३. 'इत्यवेति' ग. ४. 'इतीयत्ता' क., 'इतीयता' ख., 'इति यदा' ग. ५. यता यच्छब्देनेत्यर्थः. ६. 'तावत्' ग-पुस्तके नास्ति. ७. 'चारुत्वहेतुत्वाद्धेतुरसिद्ध इति दर्शितम्' क-ख. ८. 'न त्वात्मा' ग. ९. 'वा' ग. १०. 'एतदर्थमपि' ग. ११. 'वाच्यांशात्' ग. १२. 'रिक्तासारभूतं' ग. १३. 'महा' ग-पुस्तके नास्ति. १४. 'विषयव्यापकमाह' क-ख. १५. 'मानं' क-ख.

प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वावयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु । यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचना-

---

निर्माणनिपुणप्रतिभाभाजनत्वेनैव महाकविव्यपदेशो भवतीति भावः । यदेवंविधमस्ति तद्भाति । न ह्यत्यन्तासतो भानमुपपन्नम् । रजताद्यपि नात्यन्तमसद्भाति । अनेन सत्त्वप्रयुक्तं तावद्भानमिति भासनात्मत्वमवगम्यते । तेन यद्भाति तदस्ति तथेत्युक्तं भवति । तेनायं प्रयोगार्थः—प्रसिद्धं वाच्यं धर्मिप्रतीयमानेन व्यतिरिक्तेन तद्वत्तथा भासमानत्वाल्लावण्योपेताङ्गनाङ्गवत् । प्रसिद्धशब्दस्य सर्वप्रतीतत्वमलंकृतत्वं चार्थः । यत्तदिति सर्वनामसमुदायश्चमत्कारसारताप्रकटीकरणार्थमव्यपदेश्यत्वमन्योन्यसंवलनाकृतं चाव्यतिरेकिभ्रमं दृष्टान्तदार्ष्टान्तिकयोर्दर्शयति । एतच्च किमपीत्यादिना व्याचष्टे । लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेव । न चावयवानामेव निर्दोषता वा भूषणयोगो वा लावण्यम् । पृथङ्निर्वर्ण्यमानकाणादिदोषशून्यशरीरावयवयोगिन्यामप्यलंकृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि कस्यांचिल्लावण्यामृतचन्द्रिकेयमिति सहृदयानां व्यवहारात् । ननु लावण्यं तावद्व्यतिरिक्तं प्रथितम् । प्रतीयमानं किं तदित्थमेवं न जानीमः । दूरे तु व्यतिरिक्तप्रथेति तथाभासमानत्वमसिद्धो हेतुरित्याशङ्क्य स ह्यर्थ इत्यादिना स्वरूपं तस्याभिधत्ते । सर्वेषु चेत्यादिना च व्यतिरेकप्रथां साधयिष्यति । तत्र प्रतीयमानस्य तावद्द्वौ भेदौ—लौकिकः, काव्यव्यवहारगोचरश्चेति । लौकिको

---

१. 'हृदय' क-ख-पुस्तकयोर्नास्ति. २. 'चावयवेभ्यः' ख. ३. 'अपृथक्पृथङ्निर्वर्ण्यमानं' ग.

---

१. 'यद्येवं' ग. २. 'भवति' ग. ३. 'भागं' ग. ४. 'भानात्सत्त्वमवगम्यते' ग. ५. 'अतो यद्भाति' ग. ६. 'शब्दप्रतीतत्वं' क-ख. ७. 'व्यतिरेकभ्रमं' क-ख. ८. 'इत्यनेन' ग. ९. 'व्यङ्ग्य इवावयव' ग. १०. 'धर्मान्तरं' ग. ११. 'इत्येवं जानीमः' ग. १२. 'व्यतिरेक' ग. १३. 'सर्वेष्वित्यादिना' क. १४. 'तत्त' ग. १५. 'काव्यव्यापार' क-ख. १६. 'इति' क-ख-पुस्तकयोर्नास्ति. १७. 'स्वशब्दवाच्यताः कदाचिदध्यशेते' ग.

मृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते । सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम् । तथा ह्याद्यस्तावत्प्रभेदो वाच्याद्दूरं[1] विभेदवान् । स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः । यथा—

---

यः शब्दवाच्यतां[1] कदाचिदधिशेते[2] । स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनो[3]च्यते । सोऽपि द्विविधः । यः पूर्वं क्वापि वाक्यालंकारभावमुपमादिरूपतयान्वभूत्[4], इदानीं त्वनलंकाररूप एवान्यत्र गुणीभावाभावादपूर्वप्रत्यभिज्ञानबलादलंकारध्वनि[5]रिति व्यपदिश्यते[6] । ब्राह्मणश्रमणन्यायेन तद्रूपताभावेन[7] तूपलक्षितं वस्तुमात्रमुच्यते । मात्रग्रहणेन हि रूपान्तरं निराकृतम् । यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः, किं तु शब्दसमर्प्यमाण[8]हृदयसंवादसुन्दरविभावानुभावसमुदितप्राङ्निविष्ट[9]रत्यादिवासनानुरागसुकुमारस्वसंविदा[10]नन्दचर्वण[11]व्यापाररसनीयरूपो रसः । स च[12] काव्यव्यापारैकगोचरो रसध्वनिरिति । स च ध्वनिरेवेति स एव मुख्यतयात्मेति । यदूचे भट्टनायकेन[13]—'अंशत्वं न रूपिता' इति, तद्वस्त्वलंकारध्वन्योरेव यदिनामोपालम्भः[14], रसध्वनिस्तु तेनैवात्मतयाङ्गीकृतः । रसचर्वणात्मन[15]स्तृतीयस्यांशस्याभिधाभावनांशद्वयो[16]त्तीर्णत्वेन निर्णयाद्वस्त्वलंकारध्वन्यो रसध्वनिपर्यन्तमेवेति वयमेव वक्ष्यामस्तत्रे[17]त्यास्तां तावद्वाच्यसामर्थ्याक्षिप्त[18] इति भेदत्रयव्यापकं सामान्यलक्षणम् । यद्यपि हि[19] ध्वननं शब्दस्यैव व्यापारः, तथाप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायाद्वाच्यसामर्थ्याक्षिप्तत्वम् । शब्दशक्तिमूलानुरणनव्यङ्ग्येऽप्यर्थसामर्थ्या[20]त्प्रतीयमानावगतिः । शब्दशक्तिः केवलमवान्तरकरण इति वक्ष्यामः । **दूरं विभेदवानिति** । विधिनिषेधौ विरुद्धाविति न कस्यचिदपि[21] विमतिः । एतदर्थं

---

१. 'दूरप्रविभेदवान्' ग.

---

१. 'शब्दो वाच्यतां' ख. २. 'अपि शेते' ख. ३. 'वस्तुभेदेन' क-ख. ४. 'वाक्यार्थोऽलंकार' क-ख. ५. 'भावात्मपूर्व' क-ख. ६. 'अपदिश्यते' क-ख. ७. 'तद्रूपाभावेन' क-ख. ८. 'समीक्ष्यमाण' ग. ९. 'समुचितप्राग्विनिविष्ट' ग. १०. 'सुसंविदा' क-ख. ११. 'चर्वणा' ग. १२. 'च' ग-पुस्तके नास्ति. १३. 'भट्टनायकः अङ्गत्वं न रूपतेति' ग. १४. 'उपालब्धः' ख., 'उपारम्भः' ग. १५. 'आत्मना' क. १६. 'द्वयोक्तिर्न तदुन्नयाद्वस्त्वलंकार' ग. १७. 'तत्र तेभ्यस्तावत्' क. १८. 'क्षिप्तं' क-ख. १९. 'हि' क-ख-पुस्तकयोर्नास्ति. २०. 'सामर्थ्यादेव गतिः' ग. २१. 'कस्यापि' ग.

'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥'

---

प्रथमं तावदेताविवोदाहरति[१]—'भ्रम धार्मिक विश्रब्धः[२] स शुनको[३]ऽद्य मारितस्तेन । गोदावरीनदीकूल[४]लतागहनवासिना दृप्तसिंहेन ॥' कस्याश्चित्संकेतस्थानं जीवितसर्वस्वायमानं धार्मिकसंचरणान्तरायदोषात्तदवलुप्यमानपल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः । तत्र स्वतःसिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्र[५]सवात्मको निषेधाभावरूपः, न तु वियोगप्रैषादि[६]रूपोऽत्र विधिः । अतिसर्गप्राप्तकालयोर्ह्ययं लोट् । तत्र भावतदभावयोर्विरोधाद्द्वयोस्तावन्न युगपद्वाच्यता, न[७] क्रमेण । विरम्य व्यापारद्वयाभावात् । 'विशेष्यं[८] नाभिधा गच्छेत्' इत्यादिनाभिधा[९]व्यापारस्य विरम्य व्यापारासंभवाभिधानात् । ननु तात्पर्यशक्ति[१०]पर्यवसिता विवक्षया दृप्तधार्मिकतदादिपदार्थान्वयरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः । एवमनेनोक्तमिति हि व्यवहारस्तत्र[११] वाच्यातिरिक्तोऽन्योऽर्थ इति । नैतत् । त्रयो ह्यत्र [१२]व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षार्थावगमनशक्तिः, अभिधासमयश्च । तावत्येव न विशेषांशे । आनन्त्याद्व्यभिचाराच्च । एकस्य ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते । 'सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात् । तत्र च द्वितीयकक्षायां भ्रमेति विध्यतिरिक्तं न किंचित्प्रतीयते । अन्वयमात्रस्यैव प्रतिपन्नत्वात् । नहि 'गङ्गायां घोषः', 'सिंहो बटुः' इत्यत्र[१३] यथान्वय एव बुभूषन्प्रतिहन्यते । योग्यताविरहात् । तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः । तदिदानीं भ्रमणनिषेधै[१४]ककारणवैकल्याद्भ्रमणं तवोचितमि[१५]त्यन्वयस्य न काचित्क्षतिः । अत एव मुख्यार्थबाधा नात्र शङ्क्येति न विपरीतलक्षणाया अवसरः । भवतु वा[१६]सौ । तथापि द्वितीयस्थानसंक्रान्ताभावादसौ न

---

१. 'तावदेवोदाहरति' क-ख. २. 'विश्वस्तः' क-ख. ३. 'श्वाद्य' क-ख. ४. 'तीरलतागहनदृप्तसिंहेन' ग. ५. 'प्रसवार्थको न विषयाभावरूपो' ग. ६. 'रूपो विधिरिति सर्वं प्राप्तकालयोग्यम् । तत्र भावतदभाव' ग. ७. 'न' क-ख-पुस्तकयोर्नास्ति. ८. 'विशेषं' ख. ९. 'व्यापारस्यासंभवाभिधानात्' क-ख. १०. 'शक्ति' क-ख-पुस्तकयोर्नास्ति. ११. 'तत्र' ग. १२. 'व्यवहाराः' ग. १३. 'इत्यत्रापि' ग. १४. 'निषेधकारण' ग. १५. 'इत्यत्रान्वयस्य' ख. १६. 'चासौ' ग.

भवति। तथा हि मुख्यार्थबाधायां लक्षणाप्रक्लृप्तिः[1]। सा[2] च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्, सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः। न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः। प्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या। तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्यव्यापारात् इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः। नन्वेवमपि[3] 'अङ्गुल्यग्रे करिवरशतम्' इत्यत्राप्यन्वयप्रतीतिः स्यात्। किं न भवत्यन्वयप्रतीतिः दशदाडिमादिवाक्यवत्[4]। किं तु प्रमाणान्तरेण सोऽन्वयः प्रत्यक्षादिना बाधितः प्रतिपन्नोऽपि शुक्तिकायां रजतमिवेति[5] तदवगमकारिणो[6] वाक्यस्याप्रामाण्यम्। 'सिंहो माणवक' इत्यत्र द्वितीयकक्षानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकोल्लासनानन्तरमभिधातात्पर्यशक्तिद्वयव्यतिरिक्ता तावत्तृतीयैव[7] शक्तिस्तद्बाधकशक्तिविधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति। नन्वेवं 'सिंहो वटुः' इत्यत्रापि काव्यरूपता[8] स्यात्। ध्वननलक्षणस्यात्मनो[9]ऽत्रापि समनन्तरं[10] वक्ष्यमाणतया भावात्। ननु[11] घटेऽपि जीवव्यवहारः स्यात्। आत्मनो विभुत्वेन तत्रापि भावात्। शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य सत्यात्मनि जीवव्यवहारः न[12] यस्य कस्यचिदिति चेत्, गुणालंकारौचित्य[13]सुन्दरशब्दार्थशरीरस्य सति ध्वननात्मन्यात्मनि[14] काव्यरूपताव्यवहारः। न चात्मनोऽसारता काचिदिति समानम्। न चैवं भक्तिरेव ध्वनिः। भक्तिर्हि लक्षणाव्यापारस्तृतीयकक्षानिवेशी। चतुर्थ्यां तु कक्षायां ध्वननव्यापारः। तथा[15] हि त्रितयसंनिधौ लक्षणा प्रवर्तत इति तावद्भवन्त[16] एव वदन्ति। तत्र मुख्यार्थबाधता[17] तावत्प्रत्यक्षादिप्रमाणान्तरमूला। निमित्तं च यदभिधीयते सामीप्यादि तदपि प्रमाणान्तरावगम्यमेव। यत्त्विदं घोषस्यातिपवित्रत्वशीतलत्वसेव्यत्वादिकं[18] प्रयोजनमशब्दान्तरवाच्यं प्रमाणान्तराप्रति-

१. 'लक्षणायां' क. २. 'बाधा च' ग. ३. 'अपि' ग-पुस्तके नास्ति. ४. 'दशदाडिमानि, षडपूपाः, कुण्डमजाजिनम्, पललपिण्डः, अधरोरुकमेतत्कुमार्याः, स्फैयकृतस्य पिता प्रतिशीनः, इति समुदायोऽत्रानर्थकः' इति व्याकरणमहाभाष्यम् (१।२।४५). ५. 'एवेति' ग. ६. 'तदपगम' ग. ७. 'तावत्' ग-पुस्तके नास्ति. ८. 'रूपत्वं' ग. ९. 'ध्वनिलक्षण' ग. १०. 'समनन्तरमेव लक्ष्यमाण' ग. ११. 'न घटेऽपि' क. १२. 'अन्यस्य कस्यचिदिति' ग. १३. 'गुणालंकारौचित्य' ग-पुस्तके नास्ति. १४. 'ध्वन्याख्ये आत्मनि' ग. १५. 'तथाहीति' ग. १६. 'तावद्भवतां मतम्' ग. १७. 'बाधा' ग. १८. 'सेव्यत्वादिकं प्रयोजनं सशब्दान्तरावाच्यं' क., 'सेव्यत्वादिशब्दान्तरवाच्यं' ग.

पन्नम्, बटोर्वा[1] पराक्रमातिशयशालित्वं तत्र शब्दस्य तावन्न[2] व्यापारः। तथाहि तत्सामीप्यात्तद्धर्मत्वानुमानमनैकान्तिकम्[3], सिंहशब्दवाच्यत्वं च बटोरसिद्धम्। अथ यत्र यत्रैवंशब्दप्रयोगस्तत्र तत्र तद्धर्मयोग इत्यनुमानान्तरं[4] कथं, तथापि व्याप्तिग्रहणकाले मौलिकं प्रमाणान्तरं वाच्यं[5] च नास्ति। न च स्मृतिरियम्। अननुभूतेस्तद्योगानियमा[6]प्रतिपत्तेर्वक्तुरेतद[7]विवक्षितमित्यध्यवसायाभावप्रसङ्गाच्चेत्यस्ति तावदत्र शब्दस्यैव[8] व्यापारश्च नाभिधात्मा। समयाभावात्। न तात्पर्यात्मा। तस्यान्वयप्रतीतावेव परिक्षयात्। न[9] लक्षणात्मा। उक्तादेव हेतोः स्खलद्गतित्वाभावात्[10]। तत्रापि हि[11] स्खलद्गतित्वे पुनर्मुख्यार्थबाधानिमित्तं प्रयोजनमित्यनवस्था स्यात्। अत एव यत्केनचिल्लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रम्। तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तश्चतुर्थोऽसौ व्यापारो ध्वननद्योतन[12]व्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः। यद्वक्ष्यति—'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्। यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥' इति। तेन समयापेक्षा वाच्यावगमशक्तिरभिधाशक्तिः। तदन्यथानुपपत्तिसहायार्थावबोधन[13]शक्तिस्तात्पर्यशक्तिः। मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः। तच्छक्ति[14]त्रयोपजनितार्थावगममूलजाततत्प्रतिभा[15]पवित्रितप्रतिपत्तृ[16]प्रतिभा[17]सहायार्थद्योतनशक्तिर्ध्वननव्यापारः। स च प्राग्वृत्तं व्यापारत्रयं न्यक्कुर्वन्प्रधानम्[18]। अत एव काव्यात्मेत्याशयेन विधिनिषेधप्रमुखतया च प्रयोजनविषयोऽपि निषेधविषय इत्युक्तः[19]। अभ्युपगममात्रेण चैतदुक्तम्[20]। न त्वत्र लक्षणात्यन्ततिरस्कृता। अन्यसंक्रमणयोरभावात्। नह्यर्थशक्तिमूलेऽस्या व्यापारः। सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव। तथा तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः। अक्षादिसहकृतस्य[21] वा विकल्पत्वव्यापारः। एवमभिहितान्वयवादिनामियद[22]नपह्नव-

---

१. 'पदेन वा' ग. २. 'न तावन्न' ग. ३. 'अनैकान्तिकत्वं' ग. ४. 'इत्यनुमानं तस्यापि' ग. ५. 'वाच्यं' क-ख पुस्तकयोर्नास्ति. ६. 'नियम्याप्रति' ग. ७. 'वक्तुरेवं विवक्षितं' क-ख. ८. 'एव' क-ख-पुस्तकयोर्नास्ति. ९. 'न' ग-पुस्तके नास्ति. १०. 'स्खलितगतित्वा' ग. ११. 'हि' क-ख-पुस्तकयोर्नास्ति. १२. 'द्योतन' ग-पुस्तके नास्ति. १३. 'सहायार्थबोधन' क-ख. १४. 'तच्छक्तिबाधोपजनित' ग. १५. 'ज्ञाततत्प्रतिभास' ग. १६. 'प्रतिपत्तृ' क-पुस्तके नास्ति. १७. 'प्रभा' ग. १८. 'प्रधानभूतः काव्यात्मे' ग. १९. 'इत्युक्तम्' ग. २०. 'चेदमुक्तम्' ग. २१. 'सहकृत्य वा' ग. २२. 'तावदिदमनपह्नवनीय' ग.

नीयम्। योऽप्यन्विताभिधानवादी 'यत्परः शब्दः स शब्दार्थः' इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति तस्य यदि दीर्घदीर्घो व्यापारस्तदेकोऽसाविति कुतः । भिन्नविषयत्वात् । अथानेकोऽसौ तद्विषयसहकारिभेदादसजातीय एव युक्तः । सजातीये च कार्ये विरम्यव्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिर्निषिद्धः । असजातीये चास्मन्नय एव । अथ योऽसौ चतुर्थकक्षानिविष्टोऽर्थः स एव झटिति वाक्येनाभिधीयत इत्येवंविधं दीर्घदीर्घत्वं विवक्षितम् । तर्हि तत्र संकेताकरणात्कथं साक्षात्प्रतिपत्तिः । निमित्तेषु संकेतः नैमित्तिकस्त्वसावर्थ इति संकेतानपेक्ष एवेति चेत्, पश्यत श्रोत्रियस्यानुवाकहतबुद्धेरुक्तिकौशलम् । यो ह्यसौ पर्यन्तकक्षाभागार्थः प्रथमं प्रतीतिपथमवतीर्णस्तस्य पश्चात्तनाः पदार्था निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतम् । अथोच्यते— पूर्वं तत्र संकेतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीत्यमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि तदनुसारानुपयोगेन न किंचिदप्युक्तं स्यात् । न चापि प्राक्पदार्थेषु संकेतग्रहणं वृत्तम् । अन्वितानामेव सर्वदा प्रयोगात् । आवापोद्वापाभ्यां तथाभाव इति चेत्, संकेतः पदार्थमात्र एवेत्यभ्युपगमे पाश्चात्यैव विशेषप्रतीतिः । अथोच्यते—दृष्टैव झडिति तात्पर्यप्रतिपत्तिः किमत्र कुर्म इति तदिदं वयमपि न नाङ्गीकुर्मः । यद्वक्ष्यामः—'तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् । बुद्धौ तत्त्वावभासिन्यां झडित्येवावभासते ॥' इति । किं तु सातिशयानुशीलनाभ्यासात्तत्र संभाव्यमानोऽपि क्रमः सजातीयतद्विकल्पपरम्परानुदयादभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवन्न संवेद्यत इति निमित्तनैमित्तकभावश्चावश्याश्रयणीयः । अन्यथा गौणलाक्षणिकयोर्मुख्याद्भेदः 'श्रुतिलिङ्गादिप्रमाणषट्कस्य परदौर्बल्यम्' इत्यादि प्रक्रियाविघातो निमित्ततावैचित्र्येणैवास्याः सामर्थ्यान्निर्निमित्ततावैचित्र्ये चाभ्युपगते किम-

१. 'यो ह्यन्विता' ग. २. 'हृदये' ग-पुस्तके नास्ति. ३. 'एव' ग-पुस्तके नास्ति. ४. 'कार्ये' क-ख-पुस्तकयोर्नास्ति. ५. 'च' ग-पुस्तके नास्ति. ६. 'स इति झडिति' क-ख. ७. 'तत्र तर्हि' क-ख. ८. 'इति' ग-पुस्तके नास्ति. ९. 'एव' ग-पुस्तके नास्ति. १०. 'पश्य' क-ख. ११. 'भागार्थः' ग. १२. 'पदार्थावगमनिमित्त' ग. १३. 'आगच्छन्तीति' ख. १४. 'तदनुरणनोपयोगि न तदप्युक्तं' ग. १५. 'संबन्धग्रहणं' ग. १६. 'सदा' क-ख. १७. 'अत्र' ग-पुस्तके नास्ति. १८. 'अपि न' क-ख-पुस्तकयोर्नास्ति. १९. 'तत्त्वार्थदर्शिन्यां' ग. २०. 'स्मृतिं तमवन्न' ग. २१. 'प्रक्रियाविकल्पास्तामिति' ग. २२. 'समर्थितत्वात्' ग.

परमस्मास्वसूयया । यऽर्थ्याविभक्तं स्फोटं[1] वाक्यं तदर्थरूपमित्याहुस्तैरप्यविद्यापद-पतितैः सर्वैयमनुसरणीया प्रक्रिया । तदुत्तीर्णत्वे तु सर्वं[2] परमेश्वराद्वयं ब्रह्मेत्यस्म-च्छास्त्रानुसरणेन विदितं तत्त्वालोकग्रन्थं विचारयतेत्यास्ताम् । यत्तु भट्टनायकेनो-क्तम्—'इह दृप्तसिंहादि[3]पदप्रयोगेऽपि धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः । तदीय[4]भीरुधीरत्वप्रकृतिनियमावगममन्तरेणैकान्ततो निषेधगत्य-भावात्' इति, तन्न[5] । केवलार्थसामर्थ्यान्निषेधगतेर्निमित्तमिति, तत्रोच्यते—केनो-क्तमेतत्, 'वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण च निषे-धावगतिः' इति । वक्तृप्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिर्द्योतनस्य प्राणत्वेनोक्तम् । भयानकरसावेशश्च न[6] वर्ण्यस्य । भयमात्रोत्पत्त्यभ्युपगमात् । प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव । रसस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव । प्रतिपत्तुरपि रसावेशो न नियतः । नह्यसौ नियमेन भीरु[7]धार्मिकसब्रह्मचारी सहृ-दय एव । अथ तद्विशेषोऽपि सहकारी कल्प्यते तर्हि वक्तृप्रतिपत्तृप्रतिभाप्राणितो ध्वननव्यापारः किं न सह्यते । किं च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयम् । यदाह—'क्रोधोऽपि देवस्य वरेण तुल्यः' इति । अथ रसस्यैवेयत्ता[8] प्राधान्यमुक्तं तत्को[9] न सहते । अथ वस्तुमात्रध्वनेरेतदु-दाहरणं न युक्तमित्युच्यते तथापि काव्यो[10]दाहरणत्वाद्द्वावप्यत्र ध्वनी स्तः । को दोषः । अपि चोक्तनीत्या संभोगाभिलाषविभावसंकेतस्थानोचितविशिष्टकाकाद्ये[11]नु-भावशबलनोचितशृङ्गाररसानुवेधः । रसस्यालौकिकत्वात् । तावन्मात्रादेवं[12] भेदस्या-नुगमात् । प्रथमं निर्विवादसिद्धविविक्तविधिनिषेधप्रदर्शनाभिप्रायेण चैतद्वस्तु[13]ध्वनेरु-दाहरणं दत्तम् । यैस्तु[14] ध्वनिव्याख्यानोद्यतस्तात्पर्यशक्तिमेव विवक्षासूचकत्वमेव वा ध्वननमवोचत्स नास्माकं हृदयमावर्जयति । यदाहुः—'भिन्नरुचिर्हि लोकः' इति[15] । तदेतदग्रे यथायथं प्रतरिष्याम इत्यास्तां तावत् । भ्रमेति[16] अतिसृष्टो[17]ऽपि प्राप्तस्ते भ्रम-

---

१. 'स्फोटकवाक्यं तदर्थमाहुः' ग. २. 'परमेश्वराद्वयं ब्रूमहे इत्यसच्छास्त्राका-रणेन न विदितं तत्त्वालोक' ग. ३. 'पदयोगेऽपि' क-ख. ४. 'भीरुत्व' ग. ५. 'तत्र' ख. ६. 'न निवार्यते । तस्य' ग. ७. 'भीरुधार्मिकस्य सब्रह्मचारिहृदय एव' क-ख. ८. 'इयत्ता' क. ९. 'तत्केन सह्यते' क-ख. १०. 'कार्योदाहरणत्वाद्द्वावपि ध्वनी स्ताम्' क-ख. ११. 'अनुभावं स्वबलनोदित' ग. १२. 'एव चानुपगमात्' ग. १३. 'रसध्वनेः' ग. १४. 'यत्तु' ग. १५. 'इति' ख-पुस्तके नास्ति, 'इति वदताग्रे यथायथं' ग. १६. 'सूमेति' ग. १७. 'असि' ग.

क्वचिद्वाच्ये[1] प्रतिषेधरूपे विधिरूपो यथा—

'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महँण मज्जहिसि ॥'

---

णकालः । धार्मिकेति कुसुमाद्युपकरणार्थं युक्तं ते भ्रमणम् । विश्रब्ध इति शङ्काकारणवैकल्यात् । स इति यस्ते भयप्रकम्पप्रायममङ्गलमकृत । अद्येति दिष्ट्या वर्धस इत्यर्थः । मारित इति पुनरस्यानुत्थानम् । तेनेति यः पूर्वं कर्णोपकर्णिकया[1] त्वयाप्याकर्णितो गोदावरीकच्छगहने प्रतिवसतीति । पूर्वमेव हि तद्रक्षायै त्वतयोपश्रावितः[2] स चाधुना तु दृप्तत्वात्ततो गहनान्न निःसरतीति । प्रसिद्धगोदावरीतीर[3]परिसरानुसरणमपि तावत्कथाशेषीभूतं का कथा तल्लतागहनप्रवेशश[4]ङ्काया इति भावः । 'श्वश्रूरत्र निमज्जति ( शेते ) अत्राहं दिवसकं प्रलोकय । मा पथिक रात्र्यन्ध शय्यायामा[5]वयोर्माङ्क्षीः ॥ अत्र शयिष्ठा वा ।' महँण इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे न तु ममेति । एवं हि विशेषवचनमेव शङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् । क[6]श्चित्प्रोषितपतिकां तरुणीमवलोक्य प्र[7]वृद्धमदनाङ्कुरः संपन्नः पान्थोऽनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र विधिः । न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः[8] । सौ[9]भाग्याभिमानखण्डनाप्रसङ्गात् । अत एव रात्र्यन्धेति समुचितसमयसंभाव्यमानविकाराकुलितत्वं ध्वनितम् । भावतदभावयोश्च सा[10]क्षाद्विरोधाद्वाच्याद्व्य[11]ङ्ग्यस्य स्फुटमेवान्यत्वम् । यत्[12]त्वाह भट्टनायकः—'अहमित्यभिनयविशेषणात्मदशावेदनाच्छाब्दमेतदपि' इति । तत्राहमिति श[13]ब्दस्य तावन्नायं साक्षादर्थः । काकादिसहायस्य च तावति ध्वननमेव व्यापार इति ध्वनेर्भूषणमेतत् । अ[14]त्तेति प्रयत्नेनानिभृतसंभोगपरिहारः । अथ यद्यपि भवान्मदनशरासारदीर्यमाण-

---

१. 'क्वचित्प्रतिषेधे विधिरूपो' ग.

---

१. 'कर्णाकर्णिकया' ग. २. 'यस्त्वयापश्रावितोऽसावधुना' क., 'एतत्त्वया' ख. ३. 'तीर' क ख-पुस्तकयोर्नास्ति. ४. 'आशङ्कयेति' ग. ५. 'आवयोः शयिष्ठाः । हे इति निपातोऽनेकार्थवृत्तिरत्र न तु ममेति' ग. ६. 'कांचित्' ग. ७. 'प्रवुद्धमदनातुरं संपन्नं' ग. ८. 'प्रवर्तनारूपः' ग. ९. 'खण्डनापदेशादत्रैव रात्र्यन्धेति' क-ख. १०. 'साक्षात्' ग पुस्तके नास्ति. ११. 'व्यक्त्यास्य स्फुटं' ग. १२. 'तत्रापि भट्टनायकः' ग. १३. 'तावच्छब्दस्य नाय' ग. १४. 'अत्रेति प्रयत्नेनाभृतसंभोग' ग.

क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—

'वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्ज वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥'

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

'दे आ पसिअ णिवत्तसु मुहससिजोण्हाविलुत्ततमणिवहे[1] ।
अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ॥'

---

हृदय उपेक्षितुं न युक्तस्तथापि किं करोमि पापो दिवसकोऽयम् । अनुचितत्वात्कुत्सितोऽयमित्यर्थः । प्राकृते पुंनपुंसकयोरनियमः । न च सर्वथा समुपेक्ष्यः । यतोऽत्रैवाहं तत्प्रलोकय नान्यतोऽहं गच्छामि । तदन्योन्यवदनावलोकनविनोदेन दिनं तावदतिवाहयाव इत्यर्थः । प्रतिपन्नमात्रायां च रात्रावन्धीभूतो मदीयायां[1] शय्यायां मा श्लिक्षः । अपि तु निभृतनिभृतमेत्य दत्तावधान[2]निकटकण्टकनिद्रान्वेषणपूर्वकमितीयदत्र ध्वन्यते ॥ 'व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा तवापि तया विना दाक्षिण्यहतस्य जनिषत[3] ॥' अत्र व्रजेति विधिः । न प्रमादादेव नायिकान्तरसंगमनं तव, अपि तु गाढानुरागादेव[4] । अन्यादृङ्मुखरागगोत्रस्खलनादि च । केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपताभिमानेनैव[5] त्वमत्र[6] स्थितः, तत्सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायोऽत्र प्रतीयते । न चासौ विध्यभाव[7]रूपो निषेधः । नापि विध्यन्तरमेव[8] । अन्यनिषेधाभावात् । हे इति निपातः प्रार्थनायाम् । आ इति तावच्छब्दार्थे ॥ तेनायमर्थः[9]— 'प्रार्थये तावत्[10]प्रसीद निवर्तस्व मुखशशिज्योत्स्ना[11]विलुप्ततमोनिवहे । अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥' अत्राध्यवसितान्निवर्तस्वेति[12] प्रतीतेर्निषेधो

---

१. 'तमोणिवहे' ख-ग.

---

१. 'मदीयां शय्यां मा श्लिक्ष्याः' क-ख. २. 'दत्ताभिधान' क-ख. ३. 'जनिष्यते' क-ख. ४. 'गाढानुरागाद्येनान्यादृङ्मुखवर्णो गोत्रस्खलनादि तानि च केवलं पूर्वकृतानुपालनं न दाक्षिण्येन नैक' ग. ५. 'एव' ग-पुस्तके नास्ति. ६. 'अत्रास्थितः' ग. ७. 'व्रजनाभाव' ग. ८. 'एव' क-ख. पुस्तकयोर्नास्ति. ९. 'तेनायमर्थः' ग-पुस्तके नास्ति. १०. 'प्रसीद ताव[illegible]' ग. ११. [illegible] १२. '[illegible]वसितागमनात्' ग.

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम् ।
सभमरउपमग्घाइणि वारिअवामे सहसु एह्णिम् ॥'

---

वाच्यः । गृहागता नायिका गोत्रस्खलिताद्यपराधिनी नायके सति ततः प्रतिगन्तुं प्रवृत्ता, नायकेन चोट्टूपक्रमपूर्वकं निवर्त्यते—न केवलं स्वात्मनो मम च निर्वृत्त्या विघ्नं करोषि, यावदन्यासामपि । ततस्तव न कदाचन सुखलवलाभोऽपि भविष्यतीत्यत एव हताशासीति वल्लभाभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः । यदि वा सख्योपदिश्यमानापि तदवधीरणया गच्छन्ती सख्योपदिश्यते—न केवलमात्मनो विघ्नं करोषि, लाघवादबहुमानास्पदमात्मानं कुर्वती अत एव हताशा यावद्वदनचन्द्रिकाप्रकाशितमार्गतयान्यासामभिसारिकाणां विघ्नं करोषीति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः । अत्र तु व्याख्यानद्वयेऽपि व्यवसितात्प्रतीपगमनात्प्रियतमगृहगमनाच्च निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेर्गुणीभूतव्यङ्ग्यभेदस्य प्रेयोरसवदलंकारस्योदाहरणमिदं स्यात्, न ध्वनेः । तेनायमत्र भावः—काचिद्रभसात्प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुपश्लोक्यतेऽप्रत्यभिज्ञानच्छलेन । अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनं हताशे इति । अन्यासामपि विघ्नं करोषि तव चेप्सितलाभो भविष्यतीति का प्रत्याशा । अत एव मदीयं वा गृहमागच्छ, त्वदीयं वा गच्छाव इत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाटुात्मा व्यङ्ग्य इत्येव व्यवतिष्ठते । अन्ये तु—'तटस्थानां सहृदयानामभिसारिकां प्रतीयमुक्तिः' इत्याहुः । तत्र हताशे इत्यामन्त्रणादि युक्तमयुक्तं वेति सहृदया एव प्रमाणम् । एवं वाच्यव्यङ्ग्ययोर्धार्मिकपान्थप्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपभेदाद्भेद इति प्रतिपादितम् । अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेद इत्याह—**व्यवस्थापित इति** । विषयभेदोऽपि विचित्ररूपो व्यवतिष्ठमानः सहृदयैर्व्यवस्थापयितुं शक्यत इत्यर्थः ॥ 'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः

---

१. 'गृहागतनायिका' क-ख. २. 'चारूपक्रम' ग. ३. 'निर्वृत्या' ख., 'निर्वृति' ग. ४. 'भविष्यत्यत एवाह' क-ख. ५. 'चाविशेषो' ग. ६. 'यदि वा' क-ख-पुस्तकयोर्नास्ति. ७. 'अबहुमानं' क., 'अबहुमानमात्मानं' ख. ८. 'व्यङ्ग्यस्य च' ग. ९. 'इदं' क-ख-पुस्तकयोर्नास्ति. १०. 'तद्ध्वनेः' क. ११. 'अन्यासां च' ग. १२. 'इत्यामन्त्रणादिपदानि' ग.

अन्ये चैवंविधाः प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदाः संभवन्ति । तेषां दिङ्मात्रमेतत्प्रदर्शितम् । द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते । तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्य-

---

सव्रणमधरम् । सभ्रमरपद्मा[1]घ्राणशीले वारितवामे सहस्वेदानीम् ॥' कस्य वेति अनीर्ष्यालोरपि । न भवति रोषो दृष्ट्वेति कृत्वापि कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं दृष्ट्वावलोक्य । सभ्रमरपद्माघ्राणशीले । शीलं हि कथंचिदपि वारयितुं न शक्यम् । वारिते वारणायां हे वामे, तदनङ्गीकारिणि सहस्वेदानीम् । उपालम्भपरम्परामित्यर्थः । अत्रायं भावः—काचिदविनीता कुतश्चित्खण्डिताधरा तत्संविधसंविधाने भर्तरि [2]तमनवलोकमानयेव कयाचिद्विदग्धसख्या [3]तद्वाच्यतापरिहारायै[4]वमुच्यते । सहस्वेदानीमिति वाच्यमविनयवतीविषयम् । भर्तृविषयं तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् । तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्पत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये [5]ईयत्खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तम् । प्रत्युतायं बहुमानः । सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता । पुनः [6]प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुकविषयसंबोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकै[7]विषयं व्यङ्ग्यमिति । तदेतदुक्तं व्यवस्थापितशब्देन । अग्र इति द्वितीयोद्द्योते 'असंलक्ष्यक्रमव्यङ्ग्यः क्रमेणोद्द्योतितः परः' इति विवक्षितान्यपरवाच्यस्य द्वितीयप्रभेदवर्णनावसरे । तथाहि विधिनिषेधतदुभयात्मना रूपेण संकलय्य वस्तुध्वनिः संक्षेपेण सुवचनः, तथा नालंकारध्वनिः । अलंकाराणां भूयस्त्वात् । तत एवोक्तम्—'सप्रपञ्चं' इति । **तृतीयस्त्वति** । तुशब्दो व्य[8]तिरेके । वस्त्वलंकारौ शब्दाभिधेयत्वमध्यासाते ताव-

---

१. 'क्वचिद्वाच्याद्' ग.

---

१. 'पद्माघ्रायिणि' क. २. 'तदनवलोक्यमानयैव' क-ख. ३. 'तदनार्यपरि' ग. ४. 'एतत्' क-ख. ५. 'इयत्ता' क-ख. ६. 'प्रकटाधरदंशनविधिरत्र न युक्तः प्रत्युतायं बहुमानः' इति ग. ७. 'लोक' क-ख-पुस्तकयोर्नास्ति. ८. 'व्यतिरेकी' क.

सामर्थ्याक्षिप्तः [1]प्रकाशते। न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव। तथा हि वाच्यत्वं तस्य स्व[2]शब्दनिवेदितत्वेन वा स्यात्,

द्रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते। अथ[1] चास्वाद्यप्राणतया प्रतिभान्ति तत्र तु[2] ध्वननव्यापारादृते नास्ति कल्पनान्तरम्। स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्यानाशङ्कनीयत्वात्। औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो व्यभिचारिण्या भावः। अनौचित्येन तदाभासः। रावणस्येव सीतायां रतेः। यद्यपि तत्र हास्य[3]रसरूपतैव 'शृङ्गाराद्धि भवेद्धासः' इति वचनात्। तथापि पाश्चात्येयं सामाजिकानां स्थितिः। तन्मयीभवनदशायां तु रतेरेवास्वाद्यतेति शृङ्गारतैव [5]प्रतिभाति पौर्वापर्यविवेकावधीरणेन। 'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिम्' इत्यादौ। तदसौ शृङ्गाराभास एव तदङ्गभावाभासश्चित्तवृत्तेः प्रशम एव प्रक्रान्ताया हृदयमाह्लादयति। यतो विशेषेण त[6]त एव तत्संगृहीतोऽपि पृथग्[7]गणितोऽसौ। तथा 'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतोर्[8]न्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम्। दंपत्योः शनकैरपाङ्गव[9]लनामिश्रीभवच्चक्षुषोर्भग्नो मानकलिः सहासरभसव्यावृत्त[10]कण्ठग्रहः॥' इत्यत्रेर्ष्यारो[11]षात्मनो मानस्य [12]प्रशमः। न चायं [13]रसादिरर्थः। 'पुत्रस्ते जात' [14]इत्यतो यथा हर्षो जायते तथा। नापि लक्षणया। अपि तु [15]सहृदयस्य हृदयसंवादबलाद्वि[16]भावानुभावप्रतीतौ तन्मयीभावेनास्वाद्यमान एव [17]रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति। तदाह—[18]**प्रकाशत इति**। तेन तत्र शब्दस्य ध्वननमेव व्यापारोऽर्थसहकृतस्येति। विभावाद्यर्थोऽपि [19]पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरिक्तो[20]ऽर्थस्यापि व्यापारो ध्वननमेवोच्यते। **स्वशब्देति**। [21]शृङ्गारादिनाभिधाव्यापारवशादेव **निवेदितत्वेनेति**। **वि[22]भावादीति**। तात्पर्यशक्त्येत्यर्थः। तत्र

१. 'प्रकाश्यते' क-ख. २. 'स्व' क-ख-पुस्तकयोर्नास्ति.

१. 'अथवास्वाद्य' ग. २. 'तु' क-ख-पुस्तकयोर्नास्ति. ३. 'रस' क-ख-पुस्तकयोर्नास्ति. ४. 'हास्यः' क-ख. ५. 'प्रति' ग-पुस्तके नास्ति. ६. 'तत एतत्संगृहीतो' क-ख. ७. 'भणितः' ख. ८. 'अन्योन्यस्य हृदि स्थिते' ग. ९. 'वलनात्' ग. १०. 'कण्ठग्रहम्' ग. ११. 'कोपात्मनो' ग. १२. 'उपशमः' ग. १३. 'रसाद्यर्थः' ग. १४. 'इत्यत्र' ग. १५. 'सहृदयहृदयं' ग. १६. 'विभावप्रतीतेः' क-ख. १७. 'रसस्यमानतैक' क-ख. १८. 'प्रकाशते' क-ख. १९. 'न पुत्रजन्यविषन्यायेन' ग. २०. 'ऽप्यर्थस्यापि' क. २१. 'शृङ्गारादिना [illegible]' ग. २२. '[illegible]विभावादीति' ग.

विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः । न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम् । यत्राप्यस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते । न तु तत्कृता । विषयान्तरे तथा तस्या अद-

---

स्वशब्दस्यान्वयव्यतिरेकौ रस्यमानतासारे रसं प्रति निराकुर्वन्ध्वननस्यैव ताविति दर्शयति—**न च सर्वत्रेति** । यथा भट्टेन्दुराजस्य—'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् । दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोर्दृष्टे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥' इत्यत्रानुभावविभावावबोधनोत्तरमेव तन्मयीभवनयुक्त्यां तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणगोचरोऽर्थो रसात्मा स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि । एवं व्यतिरेकाभावं प्रदर्श्यान्वयाभावं दर्शयति—**यत्रापीति** । तदिति स्वशब्दनिवेदितत्वम् । **प्रतिपादनमुखेनेति** । शब्दप्रयुक्तया विभावादिप्रतिपत्त्येत्यर्थः । **सा केवलमिति** । तथा हि—'याते द्वारवतीं तदा मधुरिपौ तद्दत्तकम्पानतां कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया । तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥' इत्यत्र विभावानुभावौ म्लानतया प्रतीयेते । प्रतिपन्नं कुर्वतोत्कण्ठाचर्वणागोचरं प्रतिपाद्यत एव । सोत्कण्ठशब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावानुकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः । पुनरनुभावप्रतिपादने हि

---

१. 'निवेद्यत्वम् । यत्रापि वास्ति' **क ख.** २. 'अप्रतीतिः' **ग.** ३. 'सा' **क-ख**-पुस्तकयोर्नास्ति. ४. 'तथा' **ग**-पुस्तके नास्ति. ५. 'दर्शनात्' **ग.**

---

१. 'व्यतिरेकस्य मानकसारं' **ग.** २. 'स्थीमनी' **क-ख.** ३. 'दून' **क-ख.** ४. 'कृष्णे यूनि' **ग.** ५. 'विभावबोधानन्तर' **ग.** ६. 'वृत्तिर्वासना' **क-ख.** ७. 'चर्वण' **क-ख**-पुस्तकयोर्नास्ति. ८. 'भावश्रम' **ग.** ९. 'निवेद्यत्वं' **क-ख.** १०. 'प्रतिपद्यते' **क.**, 'प्रत्यपद्यत' **ख.** ११. 'सोत्कण्ठा' **ग.** १२. 'कर्तुं' **क-ख**-पुस्तकयोर्नास्ति. १३. 'नानार्थकः' **ग.**

र्शनात्। नहि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति । यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो[1] रसादीनां प्रतीतिः । केवलाच्च स्वाभिधानाद[2]प्रतीतिः । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । न त्वभिधेयत्वं कथंचित् । इति तृतीयोऽपि

---

पुनरुक्तमतन्मयीभावो वा । न तु तत्कृतेत्यत्र हेतुमाह—**विषयान्तर इति**। ‘यद्विश्रम्य–’ इत्यादौ, न हि यदभावेऽपि यद्भवति तत्कृतं तदिति भावः। अदर्शनमेव द्रढयति[1]—**नहीति**। केवलशब्दार्थं[2] स्फुटयति—**विभावादीति**[3]। **काव्य इति** । तव मते काव्यरूपतया प्रयुज्यमान[4] इत्यर्थः । **मनागपीति**। ‘शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥’ इति । एवं[5] स्वशब्देन सह रसादेर्व्यतिरेकान्वयाभावमुपदर्श्य[6] तमेवोपसंहरति—यतश्चेत्यादिना कथंचिदित्यन्तेन । अभिधेयमेव सामर्थ्यं सहकारिशक्तिरूपं विभावादिकं रसध्वनने शब्दस्य कर्तव्ये, अभिधेयस्य[7] च पुत्रजन्महर्षभिन्नयोगक्षेमतया जननव्यतिरिक्ते दिवाभोजनाभावविशिष्टपीनत्वानुमितरात्रिभोजनविलक्षणतया चानुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिविशिष्टं[8] समुचितसाकल्यम् । इति द्वयोरपि शब्दार्थयोर्ध्वननव्यापारः । एवं द्वौ पक्षावुपक्रम्याद्यो दूषितः । द्वितीयस्तु कथंचिद्दूषितः कथंचिदङ्गीकृतः । जननानुमानव्यापाराभिप्रायेण[9] दूषितः ध्वननाभिप्रायेणाङ्गीकृतः । यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते स न वस्तुतत्त्ववेदी । विभावानुभावप्रतिपादके हि वाक्ये तात्पर्यशक्तिर्भेदसंसर्गे[10] वा पर्यवस्येत् । न तु रस्यमानतासारे[11] रसे । इत्यलं बहुना । इतिशब्दो हेत्वर्थे ।

---

१. ‘विशिष्टेभ्यो’ ग-पुस्तके नास्ति. २. ‘स्वाभिधानमात्रात्’ क-ख.

---

१. ‘प्रथयति’ ग. २. ‘शब्दार्थः’ ग. ३. ‘विभावादिति’ ग. ४. ‘प्रसज्यमान’ ग. ५. ‘अत्रैव स्वशब्देन’ ग. ६. ‘उपदर्शि’ ख., ‘उपपत्त्या प्रदर्श्य तथैवोप’ ग. ७. ‘विधेयस्य पुत्र’ ग. ८. ‘शक्तिः विशिष्टसमुचित’ ग. ९. ‘अनुव्यापार’ क., ‘अनुमाव्यापार’ ग. १०. ‘शक्तिभेदः संसर्ग’ ग. ११. ‘सारो रसः’ ग.

प्रभेदो वाच्याद्भिन्न एवेति स्थितम् । वाच्येन त्वस्य सहैव प्रतीतिरित्यग्रे दर्शयिष्यते[1] ।

'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥'

---

इत्यपि हेतोस्तृतीयोऽपि प्रकारो वाच्याद्भिन्न एवेति संबन्धः । **सहैवेति** । [1]इवशब्देन विद्यमानोऽपि क्रमो न संलक्ष्यत [2]इति तद्दर्शयति—**अग्र इति** । द्वितीयोद्योते । एवं 'प्रतीयमानं पुनरन्यदेव' [3]इतीयता ध्वनिस्वरूपं व्याख्यातम् ॥

अधुना काव्यात्मत्वमिति[4]हासव्याजेनैव दर्शयति—**[5]काव्यस्यात्मेति** । स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम् । इतिहासबलात् प्रक्रान्तवृत्ति[6]ग्रन्थबलाच्च । तेन रस एव वस्तुत आत्मा वस्त्वलंकारध्वनी तु सर्वथा [7]रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम् । **शोक इति** । क्रौ[8]ञ्चद्वन्द्वावियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसनेनोत्थितो यः शोकः स्थायिभावो निरपेक्ष्यभावत्वाद्विप्रलम्भश्टङ्गारोचितस्थायिभावत्वादन्य एव । स एव तथाभूतविभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां [9]स्वचित्तवृत्तिसमास्वाद्यसारां प्रतिपन्नो रसः परिपूर्णकुम्भो[10]च्छलनवच्चित्तवृत्तिनिःस्पन्दः[11]स्वभाववाग्विलापादिसमयानपेक्षित्वेऽपि चित्तवृत्ति[12]व्यञ्जकत्वादिनयेनाकृतकतयै[13]वावेशवशात्समुचितच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपतां [14]प्राप्तः मा निषादेत्यादि । न तु मुनेः शोक इति मन्तव्यम् । एवं हि [15]सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत् ।

---

१. 'प्रदर्शयिष्यते' ग.

---

१. 'इह शब्देन' क-ख. २. 'इति तद्दर्शयति' क-ख-पुस्तकयोर्नास्ति. ३. 'इति यतो' ग. ४. 'इतीतिहास' ग. ५. 'वाच्यस्य' क-ख. ६. 'ग्रन्थार्ध' क-ख. ७. 'रसं पर्यवस्यत इति' ग. ८. 'क्रौञ्चस्य' क-ख. ९. 'स्वचित्तद्रुतमास्वाद्य' ग. १०. 'बलवत्' ग. ११. 'स्वरूपभाववाग्विलासादि' ग. १२. 'व्यञ्जकत्वादिति नये' ग. १३. 'इव' ख. १४. 'प्राप्तम्' ग. १५. 'सति' ग-पुस्तके नास्ति.

विविध[1]विशिष्टवाच्यवाचकरचना[2]प्रपञ्चचारुणः काव्यस्य स एवार्थः [3]सारभूतः संनिहितसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः ।

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥'

---

न[1] तु दुःखसंतप्तस्यैषा दशेति । एवं हि चर्वणोचितशोकस्थायि[2]भावात्मककरुणरस[3]समुच्छलनस्वभावत्वात्स एव काव्यस्यात्मा [4]सारभूतस्वभावोऽपरशब्दवैलक्षण्यकारकः । एतदेवोक्तं हृदयदर्पणे—'यावत्पूर्णो न चैतेन तावन्नैववम्' इति । [5]अगम इति च्छान्दसेनाडागमेन । स एवेत्येवकारेणेदमाह—नान्य [6]आत्मेति । तेन यदाह भट्टनायकः—'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः । [7]अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः ॥ द्वयोर्गुणत्वे व्यापारप्राधान्ये [8]काव्यधीर्भवेत्' इति [9]तदपास्तम् । व्यापारो हि यदि ध्वननात्मा रसनास्वभावस्तन्नापूर्वमुक्तम् । [10]अथाभिधैव व्यापारस्तथाप्यस्याः [11]प्राधान्यं नेत्यावेदितं प्राक् । श्लोकं व्याचष्टे—**विविधेति** । विविधं तत्तदभिव्यञ्जनीयरसानुगुण्येन विचित्रं कृत्वा वाच्ये वाचके रचनायां च [12]प्रपञ्चेन यच्चारुशब्दार्थालंकारगुणयुक्तमित्यर्थः । तेन सर्वत्रापि न ध्वननसद्भावेऽपि तथा व्यवहारः । आत्मसद्भावेऽपि क्वचिदेव जीवव्यवहार इत्युक्तं [13]प्रागेव । तेनैतन्निरवकाशम् । यदुक्तं हृदयदर्पणे—'सर्वत्र तर्हि काव्यव्यवहारः स्यात्' इति । [14]संनिहितसहचरीति विभाव उक्तः । आक्रन्दितशब्देनानुभावः । **जनित इति** । चर्वणगोचरत्वेनेति [15]शेषः । ननु शोकचर्वणातो यदि श्लोक उद्भूतस्तत्प्रतीयमानं

---

१. 'विशिष्ट' **ग**-पुस्तके नास्ति. २. 'प्रपञ्च' **क-ख**-पुस्तकयोर्नास्ति. ३. 'सारभूतः । तथा चादिकवेर्निहतसहचरी' **ग.**

---

१. 'तद्दुःख' **ख.**, 'न च दुःख' **ग.** २. 'भाववचनात्मक' **क-ख.** ३. 'समुच्चलन' **ग.** ४. 'रसभूतोऽपरशब्दस्य वैलक्षण्य' **ग.** ५. 'अमुमेवेति । च्छान्दसेनेडा' **ग.** ६. 'इति' **क-ख**-पुस्तकयोर्नास्ति. ७. 'अर्थे तत्त्वेन युक्ते' **ग.** ८ 'काव्यगीः' **ग.** ९. 'तदस्तम्' **क-ख.** १०. 'अथाभिधेय' **क-ख.** ११. 'प्राधान्ये' **ग.** १२. 'प्रपञ्चेन' **क-ख**-पुस्तकयोर्नास्ति. १३. 'प्रागेत [illegible]' **ग.** १४. 'निहत' **ग.** १५. 'विशेषः' **क-ख.**

शोको हि करुणरसस्थायिभावः प्रतीयमानरूप एवेति प्रतिपादितम्। प्रतीयमानस्य चान्यप्रभेददर्शनेऽपि रसाभावमुखेनैवोपलक्षणम् । प्राधान्यात् ।

'सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम् ॥६॥'

---

वस्तु काव्यस्यात्मेति कुत इत्याशङ्क्याह—**शोको हीति** । करुणस्य च चर्वणागोचरात्मनः शोकः स्थायिभावः । शोके हि स्थायिभावे ये विभावानुभावास्तत्समुचिता चित्तवृत्तिश्चर्वणात्मा रस इत्यौचित्यात्स्थायिनो रसतापत्तिरित्युच्यते । प्राक्स्वसंविदितं परत्रानुमितं च चित्तवृत्तिजातं संस्कारक्रमेण हृदयसंवादमादधानं चर्वणायामुपयुज्यते । ननु प्रतीयमानरूपमात्मा तत्र त्रिभेदं प्रतिपादितम् । न तु रसैकरूपम् । अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं भवतीत्याशङ्क्याभ्युपगमेनैवोत्तरमाह—**प्रतीयमानस्य चेति** । अन्यो भेदो वस्त्वलंकारात्मा । भावग्रहणं व्यभिचारिणोऽपि चर्व्यमाणस्य तावन्मात्राविश्रान्तावपि स्थायिचर्वणापर्यवसानोचितरसप्रतिष्ठामनवाप्यानुप्राणकत्वं भवतीत्युक्तम् । यथा—'नखं नखाग्रेण विघट्टयन्ती विवर्तयन्ती वलयं विलोलम् । आमन्द्रमाशिञ्जितनूपुरेण पादेन मन्दं भुवमालिखन्ती ॥' इत्यत्र लज्जायाः । रसभावशब्देन च तदाभासतत्प्रशमावपि संगृहीतावेव । अवान्तरवैचित्र्येऽपि तदेकरूपत्वात् । **प्राधान्यादिति** । रसपर्यवसानादित्यर्थः । तावन्मात्रविश्रान्तावपि चान्यशब्दवैलक्षण्यकारित्वेन वस्त्वलंकारध्वनेरपि जीवितत्वमौचित्यादुक्तमिति भावः ।

एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य स्वसंवित्सिद्धमप्येतदिति दर्शयति—**सरस्वतीति** । वाग्रूपा भगवतीत्यर्थः । अर्थशब्देन वस्तुशब्दं वस्तुशब्देन तत्त्वशब्दं च वक्तुं वस्तुशब्दं व्याचष्टे—**निःष्यन्दमानेति**। दिव्य-

---

१. 'रस' **ग**-पुस्तके नास्ति. २. 'अवलोकसाम्यं प्रतिभाविशेषं परिस्फुरन्तं समभिव्यनक्ति' **क-ख.**

---

१. 'काव्यात्मेति' **ग.** २. 'तच्चर्वणा' **ग.** ३. 'शोकः' **ग**-पुस्तके नास्ति. ४. 'तत्त्वसमुचिता' **ग.** ५. 'तच्चेति भेदं' **ग.** ६. 'उक्तं' **ग**-पुस्तके नास्ति. ७. 'उदित' **क-ख.** ८ 'अपि प्राणकत्वं' **क-ख.** ९. 'भवतीति' **ग**-पुस्तके नास्ति. १०. 'लज्जया' **क-ख.** ११. 'च' **ग**-पुस्तके नास्ति. १२. 'चान्यशब्द' **ग.** १३. 'एवौचित्यात्' **ग.** १४. 'स च संवित्' **ग.** १५. 'वस्तुशब्देनार्थशब्दं तत्त्वशब्देन च वस्तुशब्दं' **ग.**

[१]वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां [सरस्वती] लोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति । येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः[२] पञ्चषा वा महाकवय इति[३] गण्यन्ते । इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि[४] काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ७ ॥'

---

मानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः । यदाह[१] भट्टनायकः—'वाग्धेनुर्दुग्ध एवं[२] हि रसं यद्बालतृष्णया[३] । तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः ॥' तदावेशेन विनाप्याक्रान्त्या हि योगिभिर्दुह्यते । अत एव—'यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति[४] रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥' इत्यनेन साराग्र्यवस्तुपात्रत्वं हिमवत उक्तम् । अभिव्यनक्ति प्रतिस्फुरन्तमिति[५] । प्रतिपत्तॄन्प्रति सा प्रतिभा[६] नानुमीयमाना, अपि तु तदावेशेन भासमानेत्यर्थः । यदुक्तमस्मदुपाध्यायभट्टतौतेन[७]—'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः' इति । प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा । तस्या विशेषो रसावेशवैशद्य[८]सौन्दर्यकाव्यनिर्माणक्षमत्वम् । यदाह मुनिः—'कवेरन्तर्गन्तं भावं' इति । **येनेति** । अभिव्यक्तेन स्फुरता प्रतिभाविशेषेण निमित्तेन महाकवित्वगणनेति यावत् ।

**इदं चेति** । न केवलं 'प्रतीयमानं पुनरन्यदेव' इत्येतत्कारिकासूचितौ स्वरूपविषयभेदावेवं[९], यावद्भिन्नसामग्रीवेद्यत्वमपि वाच्यातिरिक्तत्वे प्रमाणमिति यावत् । **वेद्यत इति** । न तु न वेद्यते, येन न स्यादसाविति भावः । काव्यतत्त्वभूतो

---

१. 'वस्तुतत्त्वं' इत्यारभ्य 'व्यनक्ति' इतिपर्यन्तं क-ख-पुस्तकयोर्नास्ति. २. 'इयति' क-ख. ३. 'इति' ग-पुस्तके नास्ति. ४. 'तु' ग.

---

१. 'यथा' ग. २. 'एव' क-ख. ३. 'यद्बाल' ग. ४. 'भास्वन्तीत्युत्तरार्धं' क-ख-पुस्तकयोर्नास्ति. ५. 'परिस्फुरन्तं' क-ख. ६. 'प्रतिभानुमीया नापि तद्विलेशेन' ग. ७. 'यथोक्तमस्मदुपाध्यायेन भट्टलोल्लटेन' ग. ८. 'वैशारद्यसौन्दर्य' क-ख. ९. 'एवं' क-ख.

शब्दार्थशासनज्ञानमात्रेऽपि परं न वेद्यते सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते। यदि च वाच्यरूप एवासावर्थः स्यात्तद्वाच्यवाचकस्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव प्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः।

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति प्रतिपादयति—

---

योऽर्थस्तस्य भावना वाच्यातिरेकेणानवरतचर्वणा तत्र विमुखानाम्। स्वराः षड्जादयः सप्त। श्रुतिर्नाम शब्दस्य वैलक्षण्यमात्रकारि यद्रूपान्तरं तत्परिणामानां स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा। आदिशब्देन जात्यंशकग्रामरागभाषाविभाषान्तरभाषा देशीमार्गा गृह्यन्ते। प्रकृष्टं गीतं गानं येषां ते प्रगीताः, गातुं वा प्रारब्धा इत्यादिकर्मणि क्तः। प्रारम्भेण चात्र फलपर्यन्तता लक्ष्यते।

**एवमिति**। स्वरूपविषयभेदेन भिन्नसामग्रीज्ञेयत्वेन चेत्यर्थः। प्रत्यभिज्ञेयावित्यर्हार्थे कृत्यः। सर्वोऽपि हि तथा यतते इतीयता प्राधान्ये लोकप्रसिद्धत्वं प्रमाणमुक्तम्। नियोगार्थेन च कृत्येन शिक्षाक्रम उक्तः। प्रत्यभिज्ञेयशब्देनेदमाह—'काव्यं तु जातु जायेत कस्यचित्प्रतिभावतः' इति नयेन यद्यपि स्वयमस्यैव तत्परिस्फुरति तथापीदमितीत्थमिति विशेषतो निरूप्यमाणं सहस्रशाखीभवति। यदुक्तमस्मत्परमगुरुभिः श्रीमदुत्पलपादैः—'तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा। लोकस्यैष तथाऽनवे-

---

१. 'च' क-ख-पुस्तकयोर्नास्ति. २. 'एवास्यार्थः' ग. ३. 'तत्' क-पुस्तके नास्ति. ४. 'वाचकरूप' ग. ५. 'काव्यार्थतत्त्व' क-ख. ६. 'स्वलक्षण' ग. ७. 'व्यङ्ग्यस्यार्थस्य' ग. ८. 'प्रदर्शयति' ग.

---

१. 'मात्र' ग-पुस्तके नास्ति. २. 'तत्परिमाणानां' ग-पुस्तके नास्ति. ३. 'आदिग्रहणेन जात्यंशतद्ग्रामरागभाषाभाषान्तरभागा' ग. ४. 'पर्यन्तमालक्ष्यते' ग. ५. 'स्वरूपभेदेन विषयभेदेन' क-ख. ६. 'प्रसिद्धप्रमाणं' ग. ७. 'परिष्करोति' क-ख. ८. 'यथोक्तं' ग.

'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥'

स व्यङ्ग्योऽर्थस्तत्प्रकाशनसामर्थ्ययोगी शब्दश्च कश्चन, न सर्वः । तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ । व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण ।

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—

'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः ।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥ ९ ॥'

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायतया । नहि दीपशिखामन्तरेणालोकः संभवति । तद्वद्व्यङ्ग्यमर्थं प्रत्या-

---

क्षितगुणः स्वात्मापि विश्वेश्वरो नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥ इति । तेन ज्ञातस्यापि विशेषतो निरूपणमनुसंधानात्मकमत्र प्रत्यभिज्ञानम् । न तु तदेवेदमित्येतावन्मात्रम् । **महाकवेरिति** । यो महाकविरहं भूयासमित्याशास्ते । एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि प्राधान्यमुक्तमिति ध्वनति ध्वन्यते ध्वननमिति त्रितयमप्युपपन्नमित्युक्तम् ।

ननु प्रथमोपादीयमानत्वाद्वाच्यवाचकतद्भावस्यैव किं न प्राधान्यमित्याशङ्क्योपायानामेव प्रथममुपादानं भवतीत्यभिप्रायेण विरुद्धोऽयं प्राधान्ये साध्ये हेतुरिति दर्शयति—**इदानीमित्यादिना** । आलोकनमालोकः । वनितावदनारविन्दावलो-

---

१. 'तद्व्यक्तिसामर्थ्य' ग. २. 'न शब्दमात्रम्' ग. ३. 'अर्थो वाच्यो' ग. ४. 'जनो' क-ख-पुस्तकयोर्नास्ति.

---

१. 'गुणस्यात्मापि' ग. २. 'निरूपणानुसंधाना' क-ख. ३. 'महाकविरित्यहं भूयासमित्याशंसा' ख. ४. 'उक्तं' ग-पुस्तके नास्ति. ५. 'तल्लक्षणं' ग. ६. 'उपादेयमान' क-ख. ७. 'तद्' ग-पुस्तके नास्ति. ८. 'किं न' ग-पुस्तके नास्ति.

इतो जनो [1]वाच्येऽर्थे यत्नवान्भवति । अनेन [2]प्रतिपादकस्य कवेर्व्यङ्ग्य-[3]मर्थं प्रति व्यापारो दर्शितः ।

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

'यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते ।
वाच्यार्थपूर्विका तद्वत्[4]प्रतिपत्तव्यवस्तुनः ॥ १० ॥'

यथा हि[5] पदार्थद्वारेण [6]वाक्यार्थावगमस्तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः ।

इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न [7]व्यालुप्येत तथा दर्शयति—

'स्वसामर्थ्यवशेनैव वाक्यार्थं [8]प्रथयन्नपि ।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ ११ ॥'

---

कनमित्यर्थः। तत्र चोपायो दीपशिखा। प्रतिपत्तव्य इति भावे क्विप्। तस्य वस्तुन इति व्यङ्ग्यरूपस्य सारस्येत्यर्थः। अनेन श्लोकेनात्यन्तसहृदयो यो न भवति तस्यैष [1]स्फुटसंवेद्य एव क्रमः यथात्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यक्रमः। प्रतिपाद्यापि तं दर्शयितुमाह—**इदानीमित्यादिना** । काष्ठाप्राप्तसहृदयभावस्य तु [2]वाक्यार्थवृत्तकुशलस्येव [3]सन्नपि क्रमोऽभ्यस्ताविनाभावस्मृत्यादिवदसंवेद्यः । **न व्यालुप्येतेति** । [4]प्राधान्यादेव तत्पर्यन्तानुसरणत्वरिता मध्ये विश्रान्तिं न कुर्वत इति क्रमस्य [5]संतोऽप्यलक्षणं प्राधान्ये हेतुः । स्वसामर्थ्यमाकाङ्क्षायोग्यतासंनिधयः । **विभाव्यत इति** । विशब्देन विभक्ततोक्ता । विभक्ततया न भाव्यत इत्यर्थः । अनेन विद्यमान एव क्रमो न संवेद्यत [6]इत्युक्तम् । तेन यत्स्फोटाभिप्रायेणासन्नेव

---

१. 'वाच्यार्थे' ख. २. 'प्रतिपादिकस्य' ख. ३. 'अर्थं' क-ख-पुस्तकयोर्नास्ति. ४. 'प्रतिपन्नस्य' क-ख. ५. 'हि' क-ख-पुस्तकयोर्नास्ति. ६. 'वाक्यार्थस्यावगमः' ग. ७. 'व्यालुप्यते' क-ख. ८. 'प्रतिपादयन्' ग.

---

१. 'संवेद्यक्रमः' क-ख. २. 'वाक्यवृत्त' ग. ३. 'असन्नपि क्रमोऽभ्यस्तानुभाविनाभावस्मृत्यादिपदसंवेद्यः' ग. ४. 'प्राधान्यादेव रणरणिकत्वरितया' ग. ५. 'सतोपलक्षणं' क-ख. ६. 'इत्यर्थः' क-ख.

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया।

'तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ १२ ॥'

यत्रा(त्रा)वभासते। (?)

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

**'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥१३॥'**

---

क्रम इति व्याचक्षते तत्प्रत्युत विरुद्धमेव। वाच्येऽर्थे विमुखो विश्रान्तिनिबन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यनेन सचेतसामित्यस्यैवार्थोऽभिव्यक्तः। सहृदयानामेव तर्ह्ययं महिमास्तु, न तु काव्यस्यासौ कश्चिदतिशय इत्याशङ्क्याह— **यत्रावभासत इति**। तेनात्र विभक्ततया न भासते। न तु वाच्यस्यैव सर्वथानवभासः। अत एव तृतीयोद्द्योते घटप्रदीपदृष्टान्तबलाद्व्यङ्ग्यप्रतीतिकालेऽपि वाच्यप्रतीतिर्न विघटत इति वक्ष्यति तेन सहास्य ग्रन्थस्य न विरोधः।

**सद्भावमिति**। सत्तां साधुभावं प्राधान्यं चेत्यर्थः। द्वयं हि प्रतिपिपादयिषितम्। प्रकृत इति लक्षणे। उपयोजयन्नित्युपयोगं गमयन्। तमर्थमिति चायमुपयोगः। स्वशब्द आत्मवाची। स्वं चासावर्थश्च तौ स्वार्थौ। तौ गुणीभूतौ याभ्याम्। यथासंख्येन तेनार्थो गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः। **तमर्थमिति**। 'सरस्वती स्वादु तदर्थवस्तु' इति यदुक्तम्। व्यङ्क्तः द्योतयतः। व्यङ्क्त इति द्विवचनेनेदमाह—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्यापि

---

१. 'झगिति' ख. २. 'यत्रावभासते' ग-पुस्तके नास्ति.

---

१. 'विभक्तः' ख. २. 'इत्यत्रावभासते' ग. ३. 'विभक्तता न' क-ख. ४. 'वक्ष्यति' क-ख. ५. 'पूर्वं प्रकृते' क-ख. ६. 'स्वश्चासा' क-ख. ७. 'तौ' ग-पुस्तके नास्ति. ८. 'तौ गुणीभूतौ' क-ख-पुस्तकयोर्नास्ति. ९. 'व्यङ्क्तः द्योतयतः' ग-पुस्तके नास्ति.

यत्रार्थो वाच्यविशेषः वाचकविशेषः[1] शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति । अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम् । यदप्युक्तम्—'प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये

---

सहकारिता न त्रुट्यति । अन्यथा ज्ञातोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव । विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननव्यापारः[1] । तेन यद्भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैव । अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण । काव्यं च तद्विशेषश्चासौ, काव्यस्य वा विशेषः । काव्यग्रहणाद्गुणालंकारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम् । तेन[2] नैतन्निरवकाशम् श्रुतार्थापत्तावपि ध्वनिव्यवहारः स्यादिति । यच्चोक्तम्—'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात्' इति तदङ्गीकुर्म एव, नास्ति खल्वयं विवाद इति । यथोक्तम्—'चारुणः प्रतीतिर्यदि काव्यात्मा प्रत्यक्षादिप्रमाणादपि सा भवन्ती तथा स्यात्' इति । तत्र शब्दार्थमयकाव्यात्माभिधान[3]प्रस्तावे क एष प्रसङ्ग इति न किंचिदेतत्[4] । **स इति** । अर्थो वा शब्दो वा, व्यापारो वा । अर्थोऽपि वाच्यो वा ध्वनतीति । शब्दोऽप्येवं व्यङ्ग्यो वा ध्वन्यत इति । व्यापारो वा शब्दार्थयोर्ध्वननमिति । कारिकया तु प्राधान्येन समुदाय एव वाच्यरूपमुखतया ध्वनिरिति प्रतिपादितम्[5] । **विभक्त इति** । गुणालंकाराणां वाच्यवाचकभावप्राणत्वात् । अस्य च तदन्यव्यङ्ग्यव्यञ्जकभावसारत्वान्नास्य तेष्वन्तर्भाव इति । अन्यत्र भावो विषयार्थः । एवं[6] तद्व्यतिरिक्तः कोऽयं ध्वनिरिति निराकृतम् । **लक्षणकृतामेवेति** ।

---

१. 'वाचकविशेषः' **क-ख**-पुस्तकयोर्नास्ति.

---

१. 'ध्वननं' **क-ख**. २. 'तेनैतत्' **ग**. ३. 'काव्याभिधान' **ग**. ४. 'कश्चित्' **क-ख**. ५. 'प्रतिपादितः' **ग**. ६. 'एवं' **क-ख**-पुस्तकयोर्नास्ति.

तु परीक्ष्यमाणे स एव [1]सहृदयहृदयाह्लादकारि काव्यतत्त्वम्। ततोऽन्यच्चित्रमेवे[2]त्यग्रे दर्शयिष्यामः। यदप्यु[3]क्तम्—'कामनीयकम[4]नतिवर्तमानस्य तस्योक्तालंकारादिप्रकारेष्वन्तर्भावः' इति, तदप्यसमीचीनम्। [5]यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः। वाच्यवाचकचारुत्वहेतवो हि[6] तस्याङ्गभूताः, [7]न तु तदेकरूपा एवेति प्रतिपिपादयिष्यमाणत्वात्।

परिकरश्लोकश्चात्र—

'व्यङ्ग्यव्यञ्जकसंबन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः॥'

ननु यत्र प्रतीयमान[8]स्यार्थस्य वैशद्येनाप्रतीतिः स नाम मा भूद्ध्वनेर्विषयः। यत्र तु प्रतीतिरस्ति यथा समासोक्त्याक्षेपानुक्तनिमित्तविशे-

---

लक्षणकारप्रसिद्धताविरुद्धो हेतुः। तत एव हि यत्नेन लक्षणीयतालक्ष्यत्वप्रसिद्धत्वमसिद्धो हेतुः। न च नृत्तगी[1]तादिकल्पम्। तत्काव्यस्य [2]वा क्वापि न किंचित्। **चित्रमिति**। विस्मयकृद्[3]वृत्तादिवशात्, न तु सहृदयाभिलषणीयचमत्कारसाररसनिःष्पन्दमयमित्यर्थः। [4]काव्यानुकारित्वाद्वा चित्रम्, लेख्यमात्रत्वाद्वा, कलामात्रत्वाद्वा। **अग्र इति**। 'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थि[5]तम्। द्विधा काव्यं ततोऽन्यद्यत्तच्चित्रमभिधीयते॥' इति तृतीयोद्द्योते [6]वक्ष्यति। परिकरार्थं कारिकार्थस्याधिकावापं कर्तुं श्लोकः परिकरश्लोकः। अत्रेत्यलंकारे। **वैशद्येनेति**। चारुतया स्फुटतया चेत्यर्थः। अभिहितमिति भूतप्रयोगः। आदौ व्यङ्ग्ध इत्यस्य

---

१. 'सहृदयाह्लादि काव्यम्' **क-ख**. २. 'एव' **क-ख**-पुस्तकयोर्नास्ति. ३. 'उदितं' **ग**. ४. 'अप्यनति' **ग**. ५. 'यतो' **ग**-पुस्तके नास्ति. ६. 'हि' **क-ख**-पुस्तकयोर्नास्ति. ७. 'न त्वङ्गिरूपा' **ग**. ८. 'अप्यर्थस्य' **ग**.

---

१. 'गीतहास्यादि' **क-ख**. २. 'वा क्वापि' **ग**-पुस्तके नास्ति. ३. 'वृत्त्यादि' **क-ख**. ४. 'काव्यानुकारकारित्वाद्वा' **ग**. ५. 'व्यवस्थिते। द्विधाकाव्येऽन्ततो' **ग**. ६. 'च वक्ष्यते' **ग**.

षोक्तिपर्या[1]योक्तापह्नुतिदीपकसंकरा[2]लंकारादौ तत्र[3] ध्वनेरन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम् 'उपसर्जनीकृतस्वार्थौ' इति । अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति । तेषु कथं तस्यान्तर्भावः । व्यङ्ग्यप्राधान्ये हि ध्वनिः । न चैतत्समासोक्त्यादिष्वस्ति । समासोक्तौ तावत्—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरो[4]ऽपि रागाद्गलितं न लक्षितम् ॥'

---

व्याख्यातत्वात् । **गुणीकृतात्मेति** । आत्मेत्यनेन स्वशब्दस्यार्थो व्याख्यातः । **न चैतदिति** । व्यङ्ग्यस्य प्राधान्यम् । प्राधान्यं च यद्यपि[1] ज्ञप्तौ न चकास्ति 'बुद्धौ तत्त्वावभासिन्यां' इति[2] नयेनाखण्डचर्वणविश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेवानुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालंकारता । ततो वाच्यादेवोपस्कृताच्चमत्कारलाभ[3] इति । यद्यपि पर्यन्ते रसध्वनिरस्ति तथापि मध्यकक्षानिविष्टोऽसौ[4] व्यङ्ग्योऽर्थो न रसोन्मुखीभवति स्वातन्त्र्येणापि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ता । **समासोक्ताविति** । 'यत्रोक्तौ[5] गम्यतेऽन्योऽर्थस्[6]तत्समानैर्विशेषणैः । सा समासोक्तिरुदिता संक्षिप्तार्थतया[7] बुधैः ॥' इत्यत्र समासोक्तेर्लक्षणं स्वरूपहेतुर्नाम तन्निर्वचनमिति पादचतुष्टयेन क्रमादुक्तम् । उपोढो रागः सांध्योऽरुणिमा प्रेम च येन । विलोलास्तारका ज्योतींषि नेत्रत्रिभागश्च[8] यत्र । तथेति झटित्येव[9] प्रेमरभसेन गृहीतमाभासितं परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भो वदनकोकनदं चेति । यथेति यथा झटिति[10] ग्रहणेन प्रेमरभसेन च तिमिरं चांशुकं सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलं तिमिरांशुकं नीलजालिका । नवोढा प्रौढवधूरुदिता (?) । रागाद्रक्तत्वात्[11] संध्याकृता[12]द्रागात् तदनन्तरं प्रेमरूपाच्च हेतोः । पुरोऽपि

---

१. 'पर्यायापह्नुति' ग.　२. 'संकरादौ' ग.　३. 'तत्र तत्र' ग.　४. 'पुरो विरागात्' ग.

---

१. 'ज्ञप्तौ यद्यपि' क-ख.　२. 'इति तु' ग.　३. 'वाच्यादेव तदुपसंस्कृतात्' ग.　४. 'मध्यमकक्ष्याविनिविष्टो' ग.　५. 'यत्रोक्ते' ग.　६. 'सोऽर्थः' ग.　७. 'यथा' ग.　८. 'त्रिभागा वा' ग.　९. 'झगित्येव' ख.　१०. 'झगिति' ख.　११. 'रसत्वात्' क-ख.　१२. 'कृतात्' क-ख-पुस्तकयोर्नास्ति.

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव[1] प्राधान्येन प्रतीयते। समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात्।

आक्षेपे[2]ऽपि व्यङ्ग्यविशेषाक्षेपिणो[3] वाच्यस्यैव चारुत्वम्। प्राधान्येन वाक्यार्थ[4] आक्षेपोक्तिसामर्थ्यादेव ज्ञायते। तत्र[5] शब्दोपारूढरूपो

---

पूर्वस्यां दिशि अग्रे च। गलितं प्रशान्तं पतितं च। तया रात्र्या करणभूतया समस्तं मिश्रितं उपलक्षणत्वेन वा न लक्षितं[1] रात्रिप्रारम्भोऽसाविति न ज्ञातम्। तिमिरसंवलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते। न तु स्फुट आलोके। नायिकापक्षे तु तयेति कर्तृपदम्। रात्रिपक्षे तु[2] अपिशब्दो लक्षितमित्यस्यानन्तरः। अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम्। यदि वा पुरोऽग्रे नायकेन तथा गृहीतं मुखमिति संबन्धः। तेनात्र[3] व्यङ्ग्ये प्रतीतेऽपि न प्राधान्यम्। ततोऽपि नायकव्यवहारो निशाशशिनावेव शृङ्गारविभावरूपौ [4]संस्कुर्वाणोऽलंकारतां भजते। ततस्तु वाच्याद्विभावीभूताद्रसनिःष्पन्दः। यस्तु व्याचष्टे —'तया निशयेति कर्तृपदम्। न चाचेतनायाः कर्तृत्वमुपपन्नमिति शब्देनैवात्र नायकव्यवहार उन्नीतो[5]ऽभिधेय एव, न व्यङ्ग्य इत्यत एव समासोक्तिः' इति। स प्रकृतार्थमेव ग्रन्थार्थमत्यजत्। **व्यङ्ग्येनानुगतमिति**। एकदेशविवर्ति चेत्थं रूपकं स्यात्। 'राजहंसैरवीज्यन्त शरदेव[6] सरोनृपाः' इतिवत्[7]। न तु समासोक्तिः। तुल्यविशेषणाभावाद्गम्यत इति चानेनाभिव्यापारनिरासात्। इत्यलमवान्तरेण बहुना। नायिकाया नायके यो व्यवहारः स निशायां समारोपितः। नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति व्याख्याने न[8] कोऽपि दोषप्रसङ्गः। **आक्षेप इति**। 'प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः॥' तत्राद्यो यथा—'अहं त्वां यदि नेक्षेय क्षणम-

---

१. 'एव' क-ख-पुस्तकयोर्नास्ति. २. 'हि' क-ख. ३. 'क्षेपिणोऽपि' ग. ४. 'वाच्यार्थ' ग. ५. 'तथाहि तत्र हि' ग.

---

१. 'क्षालितम्' क-ख. २. 'तु' क-ख-पुस्तकयोर्नास्ति. ३. 'तेनाप्यत्र' ग. ४. 'संस्कुर्वाणावलंकारतां' ग. ५. 'आनीतो' क-ख. ६. 'शरदीव' क-ख. ७. 'वत्' ग-पुस्तके नास्ति. ८. 'न' ... 'दोषप्रसङ्गः' ग.

विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम् । चारुत्वोत्कर्ष[1]निबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा । यथा—

---

प्युत्सुका ततः । इयदेवास्त्वतोऽन्येन किमुक्तेना[1]प्रियेण ते ॥' इति वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः । त[2]त्रेयदस्त्वित्येतदेवात्र म्रिये इत्याक्षिपत्तच्चारुत्वनिबन्धनमित्याक्षेप्येणाक्षेपमलंकृतं स[3]त्प्रधानम् । उक्तविषयस्तु यथा म[4]मैव—भो भोः, किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गतिस्तत्तादृक्तृषितस्य मे ख[5]लमतिः सोऽयं जलं गूहते । अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रु[6]ध्य भोस्त्रैलोक्यप्रथितप्रभावमहिमा मार्गः पुनर्मारवः ॥' अत्र कश्चित्सेवकः प्रा[7]प्यमस्मात्किमिति न प्रतिर्लभे[8] इत्यन्तर्विषद्यमानहृदयः केनचिद्विडम्बनाक्षेपेण प्रतिबोध्यते । तत्राक्षेपेण निषेधरूपेण वाच्यस्यैवासत्पुरुषसेवात[9]द्वैफल्यकृतोद्वेगात्मनः शान्तरसस्थायिभूतनिर्वेदविभावानुभावरूपया चमत्कृतित्वम् । वामनस्य तु 'उपमानाक्षेपः' इत्याक्षेपलक्षणम् । उपमानस्य चन्द्रादेराक्षेपः । 'अस्मिन्सति किं त्वया कृतम्' इति । यथा—'तस्यास्तन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना सौन्दर्यस्य पदं दृशौ यदि च तैः[10] किं नाम नीलोत्पलैः । किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे हे यान्तः (धातः) पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥' अत्र व्यङ्ग्योऽप्युपमार्थो वाच्यस्यैवोपस्कुरुते किं तेन कृत्यमिति । अपहस्तनारोप (?) आक्षेपो वाच्य एव चमत्कारकारणम् । यदि वोपमानस्याक्षेपः सामर्थ्यादाकर्षणम् । यथा—'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥' इत्यत्रेर्ष्याकलुषितनायिकान्तरमुपमानमाक्षिप्तमपि वाच्यार्थमेवालंकरोतीत्ये[11]षा समासोक्तिरेव । तदाह—**चारुत्वोत्कर्षेति** । अत्रैव प्रसिद्धं दृष्टान्त-

---

१. 'निबन्धनाभिदा' ग.

---

१. 'प्रियेण' क-ख. २. 'यत इयदस्तु इत्येतदेवात्र म्रियत इत्यस्याक्षेपकं सत्' ग. ३. 'सत्त्वप्रधानम्' ग. ४. 'ममैव' ग-पुस्तके नास्ति. ५. 'जडमतिः' ग. ६. 'क्रुध्यतः' क-ख. ७. 'प्राप्तः प्राप्तव्यं' ग. ८. 'लभे इति प्रत्याशाविशस्यमानहृदयः' ग. ९. 'तद्वैफल्यतः' क-ख. १०. 'से' ग. ११. 'इति । एषा तु' ग.

'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिः[1] कीदृक्तथापि न समागमः ॥'

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्ये-

---

माह—**अनुरागवतीति** । तेनाक्षेपेण[1] प्रमेयसमर्थनमेव परिसमाप्तमिति मन्तव्यम् । तत्रोदाहरणेन[2] समासोक्तिश्लोकः पठितः । अहो दैवगतिः कीदृगिति । गुरुपारतन्त्र्यादिनिमित्तोऽसमागम इत्यर्थः । **तस्यैवेति** । वाच्यस्यैवेति यावत्[3] । वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु[4] समासोक्तिरित्यमुमाशयं[5] हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं[6] व्यतरद्ग्रन्थकृत् । एषापि[7] समासोक्तिर्वास्तु आक्षेपो[8] वा । किमनेनास्माकम् । सर्वथालंकारादिषु[9] व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यमित्यत्राशयोऽत्र ग्रन्थेऽसद्गुरुभिर्निरूपितः[10] ।

एवं प्राधान्यविवक्षायां दृष्टान्तमुक्त्वा व्यपदेशोऽपि[11] प्राधान्यकृत एव भवतीत्यत्र दृष्टान्तं स्वपरप्रसिद्धमाह[12]—**यथा[13] चेति । उपमाया इति** । उपमानोपमेयभावस्येत्यर्थः । तयेत्युपमया । दीपके हि 'आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते' इति लक्षणम् । तत्र[14] दीपकेनैव शोभा यथा—'मणिः शाणोल्लीढः समरविजयी हेतिदलितः कलाशेषश्चन्द्रः सुरतमृदिता बालललना[15] । मदक्षीणो नागः शरदि सरिदाश्यानपुलिना तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः[16] ॥' इत्यत्र

---

१. 'चित्रा' क-ख-ग.

---

१. 'तेनाक्षेपप्रमेयसमर्थनमेवापरि' ग. २. 'तत्र तूदाहरणत्वेन' ग. ३. 'तावत्' क-ख. ४. 'तु' क-ख-पुस्तकयोर्नास्ति. ५. 'अमुं' ग- पुस्तके नास्ति. ६. 'युक्त्यैवेदमेकं ग. ७. 'अपि' ग. पुस्तके नास्ति. ८. 'आक्षेपोक्तिर्वा' ग. ९. 'समासोक्त्यादिषु सिद्धालंकारेषु' ग. १०. 'असद्' क-ख-पुस्तकयोर्नास्ति. ११. 'अपि' क-ख-पुस्तकयोर्नास्ति. १२. 'सिद्धं' क-ख. १३. 'यथा चैतद्रूपाया' इति ग. १४. 'तत्र दीपकेनैव शोभा' ग-पुस्तके नास्ति. १५. 'वनिता' ग. १६. 'नराः' ग.

नाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम् । अनुक्तनिमित्तायामपि विशेषोक्तौ—

'आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥'

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात्प्रतीतिमात्रम् । न तु तत्प्रतीतिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम् । पर्यायोक्तेऽपि

---

दीपककृतमेव चारुत्वम् । 'अपह्नुतिरभीष्टस्य किंचिदेर्थगतोपमा' इति । तत्रापह्नुत्यैव शोभा यथा—'नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः । अयमाकृष्यमाणस्य कंदर्पधनुषो ध्वनिः ॥' इति । एवमाक्षेपं विचार्योद्देशक्रमेणैव प्रमेयान्तरमाह—**अनुक्तनिमित्तायामिति** । 'एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥' यथा—'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥' इयं चाचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः । उक्तनिमित्तायामपि वस्तुस्वभावमात्रे तु पर्यवसानमिति तत्रापि न व्यङ्ग्यसद्भावशङ्का । यथा—'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥' तेन प्रकारद्वयमवधार्य तृतीयं प्रकारमाशङ्कते—( अनुक्तनिमित्तायामपीति । ) **व्यङ्ग्यस्येति** । शीतकृता खल्वार्तिरत्र निमित्तमिति भट्टोद्भटः । तदभिप्रायेणाह—न त्वत्र काचिच्चारुत्वनिष्पत्तिरिति । यत्तु रसिकैरपि निमित्तं कल्पितम्—'कान्तासमागमे लघुतरमुपायं स्वप्नं मन्यमानो निद्रागमनबुद्ध्या संकोचं नात्यजत्' इति तदपि निमित्तं चारुत्वहेतुतया नालंकारकृद्भिः कल्पितम् । अपि तु विशेषोक्तिभाग एव न शिथिलयतीति एवंभूतोऽभिव्यंज्यमाननिमित्तोपस्कृतश्चारुत्वहेतुः । अन्यथा तु विशेषोक्तिरेवेयं न भवेत् । एवमभिप्रायद्वयमपि साधारणोक्त्या ग्रन्थकृन्न्यरूपयत् । न त्वौद्भटेनैवाभिप्रायेण ग्रन्थो व्यवस्थित इति मन्तव्यम् । **पर्यायोक्तेऽपीति** । 'पर्यायोक्तं

---

१. 'ओमित्युक्त्वा' ग. २. 'तत्' क-ख-पुस्तकयोर्नास्ति.

---

१. 'अन्तगता' ग. २. 'इति' क-ख-पुस्तकयोर्नास्ति. ३. 'तत्रापह्नुत्यैव' ग. ४. 'निगमे' क-ख. ५. 'अपि' ख-पुस्तके नास्ति. ६. 'वस्तुस्वभावे पर्यवसितम्' ग. ७. 'तथापि' क-ख. ८. 'चारुत्वहानिः' क-ख. ९. 'न मनागपि लघुतर' क-ख. १०. 'विभज्यमान' क-ख.

यदि प्राधान्येन व्यङ्ग्यत्वं तद्भवतु नाम[1] तस्य ध्वनावन्तर्भावः । न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपिपादयिष्यमाणत्वात् । न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम् । वाच्यस्य

---

यदन्येन प्रकारेणाभिधीयते । वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥' इति लक्षणम् । यथा—'शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः । रामस्यानेन धनुषा देशिता धर्मदेशना ॥' इति । अत्र भीष्मस्य भार्गवप्रभावाभिभावी प्रताप इति यद्यपि प्रतीयते तथापि तत्सहायेन देशिता[1] धर्मदेशनेत्यभिधीयमानेनैव वाक्यार्थो[2]ऽलंकृतः । अत एव पर्यायेण प्रकारान्तरेणावगमात्मना व्यङ्ग्येनोपलक्षितं सैवद[3]भिधीयते तदभिधीयमानमुक्तमेव सत्पर्यायोक्तमेवाभिधीयत इति लक्षणपदम्, पर्यायोक्तमिति लक्ष्यपदम्, अर्थालंकारत्वं सामान्यलक्षणं चे[4]ति सर्वं युज्यते । यदि त्वभिधीयते इत्यस्य बलाद्व्याख्यानमभिधीयते प्रतीयते प्रधानतयेति, उदाहरणं च 'भम धम्मिअ—' इत्यादि । तदा[5]लंकारत्वमेव दूरे संपन्नम् । आत्मतायां पर्यवसानात् । तथा चालंकारमध्ये गणना न कार्या । भेदान्तराणि चास्य वक्तव्यानि । तदाह—**यदि प्राधान्येनेति । ध्वनाविति** । [6]आत्मन्यन्तर्भावादात्मैवासौ नालंकारः स्यादित्यर्थः । **त[7]त्रेति** । यादृशो[8]ऽलंकारत्वेन विवक्षितस्तादृशे ध्वनिर्नान्तर्भवति । न तादृगस्माभिर्ध्वनिरुक्तः । ध्वनिर्हि महाविषयः सर्वत्रभावाद्व्यापकः समस्तप्रतिष्ठास्थानत्वाच्चाङ्गी । न [9]चालंकारो व्यापकोऽन्यालंकारवत् । न चाङ्गी । अलंकार्यतन्त्रत्वात् । अथ व्या[10]पकत्वाङ्गित्वे तस्योपगम्येते, त्यज्यते चालंकारता तर्ह्यस्मन्नय एवायमवलम्बते[11] केवलं मात्सर्यग्रहात्पर्यायोक्तभागिति भावः । न चेयं[12]दपि प्राक्तनैर्दृष्टमपि त्वस्माभिरेवोन्मीलितमिति दर्शयति—**न पुनरिति** । भामहस्य यादृक्तदीयं रूपमभिमतं तादृगुदाहरणेन दर्शितम् । त[13]त्रापि नैव व्यङ्ग्यस्य प्राधान्यम् । चारुत्वाहेतुत्वात् । तेन तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्र

१. 'नाम' ग-पुस्तके नास्ति.

१. 'दर्शिता' ग. २. 'काव्यार्थो' ग. ३. 'यद्यदभि' ग. ४. 'च' ग-पुस्तके नास्ति. ५. 'तदा' क-ख. ६. 'आत्मनि' क-ख-पुस्तकयोर्नास्ति. ७. 'तत्रेति' ग-पुस्तके नास्ति. ८. 'तादृशो' ग. ९. 'न चा' ग. १०. 'व्यापकाङ्गित्वे' ग. ११. 'लम्ब्यते न केवलं' क-ख. १२. 'चेदमपि' ग. १३. 'तत्र चैव न' क-ख.

तत्रोपसर्जनीभावेनाविवक्षितत्वात् । अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं प्रसिद्धमेव। संकरालंकारेऽपि यदालंकारो-

---

नैव व्यङ्ग्यस्य प्राधान्यमिति संगतिः । यदि तु तदुक्तमुदाहरणमनादृत्य 'भम धम्मिअ' इत्याद्युदाह्रियते तदसच्छिष्यतैव । केवलं तन्नयमवलम्ब्यापवरणेनात्म-संस्कार इत्यनार्यचेष्टितम् । यदाहुरैतिहासिकाः—'अवज्ञयाप्यवच्छाद्य शृण्वन्नरक-मृच्छति' इति। भामहेन हुदाहृतम्—'गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनो विप्रा न भुञ्जते' इति। एतद्धि भगवद्वासुदेववचनं पर्यायेण रसदानं निषेधयति। यत्स एवाह—'तच्च रसदाननिवृत्तये' इति। न चास्य रसदाननिषेधस्य व्यङ्ग्यस्य किंचि-च्चारुत्वमस्ति येन प्राधान्यं शङ्क्येत । अपि तु तद्व्यङ्ग्योपोद्बलितं विप्रभोजनेन विना यदन्नभोजनं तदेवोक्तप्रकारेण पर्यायोक्तं सत्प्राकरणिकं भोजनार्थमलंकुरुते । तेनै-त्यस्य निर्विषं भोजनं त्विति विवक्षितमिति पर्यायोक्तमलंकार एवेति चिरंतनानामभि-मत इति तात्पर्यम् । **अपह्नुतिदीपकयोरिति** । एतत्पूर्वमेव निर्णीतम् । अत एवाह—**प्रसिद्धमिति** । प्रतीतं प्रसाधितं चेत्प्रमाणितं चेत्यर्थः । पूर्वं चैतदुप-मादिव्यपदेशभाजनम्। एतद्यथा न भवतीत्यमुया छायया दृष्टान्ततयोक्तमप्युद्देशा-नुक्रमपूरणाय ग्रन्थशय्यां योजयितुं पुनरप्युक्तम्—'व्यङ्ग्यं प्राधान्याभावान्न ध्वनिः' इति । छायान्तरेण वस्तु पुनरेकमेव। उपमाया एव व्यङ्ग्यत्वेन ध्वनित्वाशङ्कनात् । यत्तु विवरणकृत्–दीपकस्य सर्वत्रोपमान्वयोऽस्तीति बहुनोदाहरणप्रपञ्चेन विचारित-वांस्तदनुपयोगि नितरां सप्रतिक्षेपं च । 'मंदो जनयति प्रीतिं सानङ्गं मानभङ्गु-रम् । स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥' इति । अत्राप्युत्तरोत्तरजन्य-त्वेऽप्युपमानोपमेयभावस्य सुकल्पत्वात् । नहि क्रमिकाणां नोपमानोपमेयभावः । तथाहि—'राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः । अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥' इति । नतु भवति तस्मात्क्रमिकत्वम् । समं वा प्राकरणिकत्वमुपमां निरुणद्धीति कोऽयं त्रासः । इत्यलं गर्दभीदोहानु-वर्तनेन । **संकरालंकारेऽपीति** । 'विरुद्धालंक्रियोल्लेखे समं तद्वृत्त्यसंभवे ।

---

१. 'म्व्यार्धश्रवणे' क-ख. २. 'ऽप्युदाहृतं' क-ख. ३. 'नह्यस्य निर्विशेषं भोजनं भव-त्विति विवक्षितम्' क., 'भवतीति विवक्षितम्' ख. ४. 'प्रमाणितं' क-ख-पुस्तकयोर्नास्ति. ५. 'उद्देश्यक्रम' क-ख. ६. 'उदाहरणादेः' क-ख. ७. 'विस्तारितवान्' क-ख. ८. 'निःसारं' ग. ९. क-ख-पुस्तकयोरस्मात्पूर्वम् 'अत्र हेतुमाह मद इत्यादि सुकल्पत्वादि-त्यन्तम् ।' इत्यधिकमस्ति. १०. 'जन्यत्वेन' क-ख. ११. 'विकल्प' ग. १२. 'वृत्त्यसं' ग.

ऽलंकारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षित-

---

एकस्य च व[1]चोन्यायदोषाभावे[2]ऽपि संकरः ॥' इति लक्षणादेकः प्रकारः। यथा ममैव—'शशिवदनासितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम्। गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥' इति। अत्र शशी वदनमस्याः तद्वद्वा वदनमस्या इति रूपकोपमोल्लेखाद्युगपद्द्वयासंभवादेकतरपक्षत्यागग्र[3]हणे प्रमाणाभावात्संकर इति व्यङ्ग्यवाच्यताया एवानिश्चयात्मा ध्वनिसंभावना। योऽपि द्वितीयः प्रकारः—शब्दार्थालंकाराणामे[4]कीभाव इति तत्रापि प्रतीयमानस्य का शङ्का। यथा—'स्मर स्मरमिव प्रियं र[5]मयसे यदालिङ्गनात्' इति। अत्रैव यमकमुपमा च। तृतीयः प्रकारः—य[6]त्रैकवाच्यांशेऽनेकोऽर्थालंकारस्तत्रापि द्वयोः साम्यात्क[7]स्य व्यङ्ग्यता। यथा—'तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति। वासाय वासरः क्लान्तो[8] विशतीव तमो गुहाम् ॥' इति। अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणहेवाकिकुलपुत्रकरूपणमेकदेशविवर्तिरूपकं दर्शयति। उत्प्रेक्षा चेवशब्देनोक्ता। तदिदं प्रकारद्वयमुक्तम्। 'शब्दार्थ[9]वृत्त्यालंकारा वाक्य एकत्र भा[10]विनः। संकरश्चै[11]कवाक्यांशे[12]प्रवेशाद्वाभिधीयते ॥' इति च। चतुर्थस्तु प्रकारः—यत्रानुग्राह्यानुग्राहकभावोऽलंकाराणाम्। यथा—'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या। तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥' अत्र मृगाङ्गनावलोकनेन तदवलोकनस्योपमा यद्यपि व्यङ्ग्या, तथापि वाच्यस्य सा संदेहालंकारस्याभ्युत्थानकारिणीत्वेनानुग्राहकत्वाद्गुणीभूता। अनुग्राह्यत्वेन हि संदेहे पर्यवसानम्। यथोक्तम्—'परस्परोपकारेण यत्रालंकृतयः स्थिताः। स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः ॥' तदाह—यदालंकार इत्यादि। एवं चतुर्थेऽपि प्रकारे ध्वनिता निराकृता। मध्यमयोस्तु व्यङ्ग्यसंभावनैव नास्तीत्युक्तम्। आद्ये तु प्रकारे शशिवदनेत्याद्युदाहृते कथं-

---

१. 'ग्रहोन्याय' ग. २. 'च' ग. ३. 'ग्रहे' ग. ४. 'एकत्र भासत इति' ग. ५. 'न रमसे' क-ख. ६. 'यत्रैकत्र वाक्यांशे' क-ख. ७. 'एकस्य' क-ख. ८. 'कान्तो' क-ख. ९. 'वर्त्यलंकारा' क-ख. १०. 'वर्तिनः' ग. ११. 'वैक' क-ख. १२. 'प्रवेशश्च' ग.

त्वान्न ध्वनिविषयत्वम् । अलंकारद्वयसंभावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम् । अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रापि[1] व्यवस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु न तु स एव ध्वनिरिति वक्तुं शक्यम् । पर्यायोक्तनिर्दिष्टन्यायात् । अपि च संकरालंकारस्य संकरोक्तिरेव ध्वनिसंभावनां करोति । अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावा-

---

चिदस्ति संभावनेत्याशङ्क्य निराकरोति—**अलंकारद्वयेति । सममिति ।** द्वयोरप्यान्दोल्यमानत्वादिति भावः । ननु यत्र व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम् । यथा 'होइ ण गुणाणुराओ खलाणँ णवरं पसिद्धिसरणाणम् । किर पहिणुसइससिमणं चन्देण पिआमुहे दिट्ठे ॥' अत्रार्थान्तरन्यासस्तावद्वाच्यत्वेनाभाति, व्यतिरेकापह्नुती तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेणाशङ्कते—**अथेति ।** तत्रोत्तरम्—**तदा सोऽपीति ।** संकरालंकार एवायं न भवति, अपि त्वलंकारध्वनिनामायं[1] ध्वनेर्द्वितीयो भेदः । यच्च[2] पर्यायोक्ते निरूपितं तत्सर्वमत्राप्यनुसरणीयम्[3] । अथ सर्वेषु संकरप्रभेदेषु व्यङ्ग्यसंभावनानिरासप्रकारं साधारणमाह—**अपि चेति ।** क्वचिदपि संकरालंकारे चेति संबन्धः । सर्वभेदभिन्न इत्यर्थः । संकीर्णतामिश्रत्वं[4] लोलीभावः । तत्र कथमेकस्य प्राधान्यं क्षीरजलवत् । 'अधिकारादपेतस्य[5] वस्तुनोऽन्यस्य या स्तुतिः । अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता[6] ॥' अप्रस्तुतस्य च वर्णनं प्रस्तुताक्षेपिण इत्यर्थः । स चाक्षेपैस्त्रिविधो[7] भवति—सामान्यविशेषभावात्, निमित्तनिमित्तिभावात्, सारूप्याच्च । तत्र प्रथमे प्रकारद्वये प्रस्तुताप्रस्तुतयोस्तुल्यमेव प्राधान्यमिति प्रतिज्ञां करोति—अप्रस्तुतेत्यादिना प्राधान्यमित्यन्तेन । तत्र सामान्यविशेषभावेऽपि द्वयी गतिः—सामान्यमप्राकरणिकं शब्देनोच्यते, गम्यते तु प्राकरणिको विशेषः । स एकः प्रकारः । यथा—'अहो संसारनैर्घृण्यमहो

---

१. 'तत्रावस्थानं' ग.

---

१. 'अलंकारध्वनिनामायं' ग-पुस्तके नास्ति. २. 'यत्तु' ग. ३. 'अप्यत्र' क-ख. ४. 'संकीर्णं तु' ग. ५. 'अधिकारानपेतस्य' ग. ६. 'परिकल्पिता' क-ख. ७. 'त्रिभिः प्रकारैः' ग.

न्निमित्तनिमित्तिभावाद्वाभिधेयप्रतीयमानयोः सममेव प्राधान्यम्। यदा तावत्सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण[1] प्रतीयमानेन संबन्धस्तदा विशेषप्रतीतौ सत्यामपि[2] प्राधान्येन तस्य सामान्येना-

---

दौरात्म्यमापदाम्। अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः॥' अत्र हि दैवस्वातन्त्र्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत्प्रकृते वस्तुनि क्वापि विनष्टे विशेषात्मनि पर्यवस्यति। तत्रापि[2] विशेषांशस्य सामान्येन व्याप्तत्वाद्व्यङ्ग्यस्य[3] विशेषवद्वाच्यस्य सामान्यस्यापि प्राधान्यम्। न हि सामान्यविशेषयोर्युगपत्प्राधान्यं विरुध्यते[4]। यदा तु विशेषोऽप्राकरणिकः प्राकरणिकं सामान्यमाक्षिपति[5] तदा द्वितीयः प्रकारः। यथा—'एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं[6] पाथसो यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि। अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैस्तत्रोड्डीय[7] गतो हहेत्यनुदिनं निद्राति नान्तःशुचा[8]॥' अत्रास्थाने महत्त्वसंभावनं सामान्यं प्रस्तुतम्। अप्रस्तुतं तु जलबिन्दौ मणित्वसंभावनं विशेषरूपं वाच्यम्। तत्रापि[9] सामान्यविशेषयोर्युगपत्प्राधान्ये न विरोध इत्युक्तम्। एवमेकः प्रकारो द्विभेदोऽपि विचारितः, यदा तावदित्यादिना विशेषस्यापि प्राधान्यमित्यन्तेन। एतमेव न्यायं निमित्तनैमित्तिकाभावेऽतिदिशंस्तस्यापि द्विप्रकारतां दर्शयति—(**निमित्तेति**।) कदाचिन्निमित्तमप्रस्तुतं सदभिधीयमानं नैमित्तिकं प्रस्तुतमाक्षिपति[10]। यथा—'ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च। ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः॥' अत्राप्रस्तुतं सुहृद्बान्धवरूपत्वं निमित्तं सज्जनासक्त्या[11] वर्णयति नैमित्तिकीं श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुम्[12]। तत्र नैमित्तिकप्रतीतावपि निमित्तप्रतीतिरेव प्रधानीभवत्यनुप्राणकत्वेनेति वाच्यव्यङ्ग्ययोः[13] प्राधान्यम्। कदाचित्तु नैमित्तिकमप्रस्तुतं वर्ण्यमानं सत्प्रस्तुतं निमित्तं व्यनक्ति। यथा सेतौ

---

१. 'विशेषणेन' ख. २. 'सत्यां' ग-पुस्तके नास्ति.

---

१. 'प्राधान्यं' ग. २. 'तत्र च' ग. ३. 'प्राप्तत्वाद्व्यङ्ग्यं च विशेषवद्वाच्यसामान्यस्यापि' ग. ४. 'विभाव्यते' क-ख. ५. 'आक्षिपतीति तत्र' ग. ६. 'कणः पाथसो यो' ग. ७. 'ततः कुत्रोड्डीय गतो मम' ग. ८. 'नार्तः' क. ९. 'अपि' क-ख-पुस्तकयोर्नास्ति. १०. 'प्रस्तुतं' क-ख-पुस्तकयोर्नास्ति. ११. 'सज्जरासन्धो' क-ख. १२. 'प्रस्तुतात्मनो' ग. १३. 'व्यङ्ग्यव्यञ्जकयोः' ग.

विनाभावात्सामान्यस्यापि प्राधान्यम् । यदापि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेष-

---

(४।२०) 'सग्गं आपरिजाअं कोत्थूहलच्छिरहिअं महुमहस्स उरम् । सुमरामि महणपुरओअमुद्धअन्दं च हरजडापब्भारम् ॥' अत्र जाम्बवान् कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतनैमित्तिकं वर्णयति प्रस्तुतं वृद्धसेवाचिरजीवित्वव्यवहारकौशलादिनिमित्तभूतं मन्त्रितायामुपादेयमभिव्यङ्क्तुम् । तत्र निमित्तप्रतीतावपि नैमित्तिकं वाच्यभूतम् । प्रत्युत तन्निमित्तानुप्राणितत्वेनोद्धुरकंधरीकरोत्यात्मानमिति समप्रधानतैव वाच्यव्यङ्ग्ययोः । एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः । तत्रापि द्वौ प्रकारौ—अप्रस्तुतात्कदाचिद्वाच्याच्चमत्कारः, व्यङ्ग्यं तु तन्मुखप्रेक्षम् । यथास्मदुपाध्यायभट्टेन्दुराजस्य—'प्राणा येन समर्पितास्तव बलायेन त्वमुत्थापितः स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि । तस्यास्य स्मितमात्रकेण जनयन्प्राणापहारक्रियां भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥' अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते तथाप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम् । नह्यचेतनोपालम्भवदसंभाव्यमानोऽयमर्थो न च हृद्य इति वाच्यस्यात्र प्रधानता । यदि पुनरचेतनादिनात्यन्तासंभाव्यमानतदर्थविशेषणेनाप्रस्तुतेन वर्णितेन प्रस्तुतमाक्षिप्यमाणं चमत्कारकारि तदा वस्तुध्वनिरसौ । यथा ममैव—'भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य यत्क्रीडसे । यैस्त्वामाह जडं ततः सहृदयंमन्यत्वदुःशिक्षितो मन्येऽमुष्य जडात्मनः स्तुतिपदं त्वत्साम्यसंभावनात् ॥' कश्चिन्महापुरुषो वीतरागोऽपि सरागवदिति न्यायेन गाढविवेकालोकतिरस्कृततिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयँल्लोकं च

---

१. 'विनाभावात्' क-ख. २. 'प्राधान्येन' क-ख. ३. 'विशेषणानां' क-ख.

---

१. 'स्मरणरूपमप्रस्तुतस्य वृद्धत्वस्य व्यङ्ग्यस्यानुप्राणकत्वमिति व्यङ्ग्यानुप्राणकत्वेन वाच्यस्यापि प्राधान्यम् । वृद्धतामेव चिरजीवित्व' क-ख. २. 'उपादेयभूतायां' क-ख. ३. 'प्राणकत्वेन' क-ख. ४. 'किं चायं' क-ख. ५. 'प्रेक्ष्यम्' क-ख. ६. 'जीवाप' ग. ७. 'सारूप्यवशेन' ग-पुस्तके नास्ति. ८. 'अन्यः प्रस्तुतः' ग-पुस्तके नास्ति. ९. 'नालम्बवद' क-ख. १०. 'न हृद्य' क-ख. ११. 'स त्वां' क-ख. १२. 'जडात्मना' क-ख.

स्यापि प्राधान्यम् । निमित्तनिमित्तिभावे चायमेव न्यायः । यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः संबन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः । इतरथा त्वलंकारान्तरमेव । तदयमत्र संक्षेपः—

---

वाचालयन्नात्मन्यप्रतिभासमेवाङ्गीकुर्वंस्तेनैव लोकेन मूर्खोऽयमिति यदावज्ञायते तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं व्यङ्ग्यतया प्राधान्येन प्रकाश्यते । जडोऽयमिति ह्युद्यानेन्दूदयादिर्भावो लोके नावज्ञायते । स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसतामन्यस्य प्रहर्षपरवशतां करोतीति हठादेव लोकं यथेच्छं[1] विकारकारणादिभिर्नर्तयति । न च तस्य हृदयं केनापि ज्ञायते कीदृगयमिति । प्रत्युत महागम्भीरोऽतिविदग्धः सुष्ठुगर्वहीनोऽतिशयेन क्रीडाचतुरः सपदि लोकेन जड इति तत एव कारणात्प्रत्युत वैदग्ध्यसंभावनानिमित्तात्संभावितः । आत्मा च यत एव कारणात्प्रत्युत[2] जाड्येन संभाव्यस्तत[3] एव सहृदयः संभावितस्तदस्य लोकस्य[4] जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भावव्रातस्याविदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति जडादपि पापीयानयं लोक इति ध्वन्यते । तदाह—**यदा त्विति । इतरथा त्विति** । इतरथैव पुनरलंकारत्वमलंकारविशेषत्वम्[5] । न व्यङ्ग्यस्य कथंचिदपि प्राधान्यमिति भावः । उद्देशे यदादिग्रहणं कृतं समासोक्तीत्यत्र द्वन्द्वे तेन व्याजस्तुतिप्रभृतिरलंकारवर्गोऽपि[6] संभाव्यमानव्यङ्ग्यानुवेशः[7] संभावितः । तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते—**तदयमत्रेति**[8] । कियद्वा प्रतिपदं लिख्यतामिति भावः । तत्र[9] व्याजस्तुतिर्यथा—'किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहेगेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥' अत्र व्यङ्ग्यं स्तुत्यात्मकं यत्तेन वाच्यमेवोपस्क्रियते । यत्तूदाहृतं केनचित्—'आसीन्नाथ पितामही[10] तव मही जाता[11] ततोऽनन्तरं माता संप्रति साम्बुराशिरशना जाया कुलोद्भू-

---

१. 'वशेनान्यस्य' क-ख. २. 'प्राधान्यस्य' क-ख.

---

१. 'यथेष्टं' ग. २. 'प्रत्युत' ग. पुस्तके नास्ति. ३. 'अतः' ग. ४. 'लोकस्य' ग-पुस्तके नास्ति. ५. 'अलंकारान्तरत्वविशेषत्वं' क-ख. ६. 'अलंकारः सर्वोऽपि' ग. ७. 'व्यङ्ग्योऽनु' ग. ८. 'तदयमत्रेति । तदयमिति' क-ख. ९. 'अत्र' ग. १०. 'माता' ग. ११. 'जाता' ग.

**'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।**
**समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥१४॥'**
**'व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥ १५ ॥'**

---

तये । पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥' इति । तदस्माकं ग्राम्यं[2] प्रतिभाति । अत्यन्तासभ्यस्मृतिहेतुत्वात् । का वानेन[3] स्तुतिः कृता । त्वं वंशक्रमेण राजेति हि[4] कियदिदमिलेवंप्राया व्याजस्तुतिः सहृदयगोष्ठी[5]निन्दितेत्युपेक्ष्यैव । 'यस्य[6] विकारः प्रभवन्नप्रति[7]बद्धेन हेतुना येन । गमयति तदभिप्रायं तत्प्रतिबद्धं[8] च भावोऽसौ ॥' इति । अत्रापि वाच्यप्राधान्ये भावालंकारता । यस्य चित्तवृत्तिविशेषस्य संबन्धी वाग्व्यापारादिर्विकारोऽप्रतिबद्धो[9]ऽनियतः प्रभवंस्तं[10] चित्तवृत्तिविशेषरूपमभिप्रायं येनाप्रतिबद्धेन हेतुना गमयति स हेतुर्यथेष्टोपभोग्यत्वादि[11]र्लक्षणार्थो[12] भावालंकारः । यथा— '[13]एकाकिनी यदबला तरुणी तथाहम[14]स्मिन्गृहे गृहपतिश्च गतो विदेशम् । कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥' अत्र व्यङ्ग्यमेकैकत्र पदार्थ[15] उपस्करोतीति वाच्यं प्रधानम्[16] । प्राधान्ये[17] हि भावालंकारता । व्यङ्ग्यप्राधान्ये[18] तु न काचिदलंकारतेति निरूपितम् । इत्यलं बहुना ।

यत्रेति काव्ये । **अलंकृतय इति** । अलंकृतित्वादेव च वाच्योपस्कारकत्वम्[19] । **प्रतिभामात्र इति** । यत्रोपमादौ क्लिष्टा[20] प्रतीतिः । **वाच्यार्थानुगम इति** । वाच्येनार्थेनानुगमः समं प्राधान्यमप्रस्तुतप्रशंसायामिवेत्यर्थः । **न प्रतीयत इति** ।

---

१. 'काव्यं' ग. २. 'असह्य' ग. ३. 'चानेन विस्मृतिः' ग. ४. 'हि' ग-पुस्तके नास्ति. ५. 'गोष्ठीषु' ग. ६. रुद्रटप्रणीतकाव्यालंकारग्रन्थस्थेयमार्या. ७. 'अप्रतिबन्धस्तु' ग. ८. 'प्रतिबन्धं' ग. ९. 'अप्रतिबद्धो' ग-पुस्तके नास्ति. १०. 'प्रतिबद्धस्तं' ग. ११. 'उपयोक्तृत्वादि' क., 'उपयोग्यत्वादि' ख. १२. 'लक्षणोऽर्थो' ग. १३. एतदुदाहरणमपि रुद्रटालंकारस्थमेव. १४. 'यथाहमस्मद्गृहे' क-ख. १५. 'पदार्थोपस्कारकारीति' क-ख. १६. 'प्रधानम्' क-ख-पुस्तकयोर्नास्ति. १७. 'प्राधान्ये हि भावालंकारता' ग-पुस्तके नास्ति. १८. 'प्राधान्येन तु न कदाचित्' क-ख. १९. 'वाच्यार्थो' ग. २०. 'क्लिष्टा' क-ख.

**'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।**
**ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः ॥१६॥'**

तस्मान्न ध्वनेरन्यत्रान्तर्भावः। इतश्च नान्तर्भावः। यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः। तस्य पुनरङ्गानि—[१]अलंकारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते। न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः। अपृथग्भावे तु तदङ्गत्वं तस्य। न तु तत्त्वमेव। यत्रापि वा

---

स्फुटतया प्राधान्यं न चकास्ति, अपि तु बलात्कल्प्यते, [१]तथापि हृदयेनानुप्रविशति। [२]यथा—'[३]देआ पसिअणिआतासु' इत्यत्रान्यकृतासु व्याख्यासु। तेन चतुर्षु प्रकारेषु न ध्वनि[४]र्व्यवहारसद्भावेऽपि व्यङ्ग्यस्य प्राधान्यम्। अप्राधान्ये [५]क्लिष्टप्रतीतौ वाच्येन समप्राधान्येऽस्फु[६]टप्राधान्ये च। क त[९]र्ह्यसावित्याह—**तत्परावेवेति**। संकरेणालंकारानुप्रवेशसंभावनया [७]उज्झित इत्यर्थः। संकरालंकारेणेति त्वसत्। अन्यालंकारोपलक्षणत्वे हि [८]क्लिष्टं स्यात्। **इतश्चेति**। न केवल[९]मन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वात्। न तादात्म्यमलंकाराणां ध्वनेश्च यावत्स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः। **अवयव इति**। एकैक इ[१०]त्यर्थः। त[११]दाह—**पृथग्भूत इति**। [१२]पृथग्भूतस्तथा माभूत्, स[१३]मुदायमध्यनिपतितस्तर्ह्यस्तु तथेत्याशङ्क्याह—[१४]**अपृथग्भावे त्विति**। तदापि न स एक एव समुदायः। अन्येषामपि समुदायिनां त[१५]द्भावात्। तत्[१६]समुदायिमध्ये च प्रतीयमानमप्यस्ति। न च तदलंकाररूपम्। प्रधानत्वादेव। य[१७]त्त्वलंकाररूपं तदप्रधानत्वान्न ध्वनिः। तदाह—**न तु तत्त्वमेवेति**। नन्वलंकार एव कश्चि[१८]त्त्वया प्रधानताभिषेकं दत्त्वा ध्वनिरित्यात्मेति चोक्त इत्याशङ्क्याह—**यत्रापि वेति**। नहि समा-

---

१. 'अलंकारो' क-ख.

---

१. 'तथापि च' क-ख. २. 'यथा' ग-पुस्तके नास्ति. ३. 'देआइ पसिअणु अन्तसु' ग. ४. 'व्यवहारसद्भावेऽपि व्यङ्ग्यस्य प्राधान्ये क्लिष्ट' ग. ५. 'क्लिष्टं' क-ख. ६. 'स्फुटे प्राधान्ये क' क-ख. ७. उत्थित' ग. ८.'श्लिष्टं' क-ख. ९. 'अनेन' क-ख. १०. 'इत्याह' क-ख. ११. 'तदा' क-ख-पुस्तकयोर्नास्ति. १२. 'अथ पृथग्भूतस्तदा' क-ख. १३.'समुदायपतित' [illegible] १४. [illegible] क-ख. १५.'तत्रभावात्'क-ख. १६. 'समुदाय' क-ख. १७. 'यदलंकार' ग. १८. 'त्वया' क-ख-पुस्तकयोर्नास्ति.

तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न[1] तन्निष्ठत्वमेव । सूरिभिः कथित इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथंचित्प्रवृत्तेति प्रतिपाद्यते[2] । प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात्सर्वविद्यानाम् । ते[3] च श्रूयमाणेषु

---

सोक्त्यादीनामन्यतम एवासौ तथास्माभिः कृतः । तद्विविक्तत्वेऽपि तस्य भावात् । समासोक्त्याद्यलंकारस्वरूपस्य समस्तस्याभावेऽपि तस्य दर्शितत्वात् 'अत्ता एत्थ' इति 'कस्स वा ण' इत्यादि । तदाह—न तन्निष्ठत्वमेवेति । तस्मिन्[1]निष्ठा पर्यवसानं यस्येति तन्न भवति । महाविषयत्वात् । व्यापकत्वादित्यर्थः । घटो घट एव न भवति, किं तु तत्कर्परेऽपि, तत्रापि न भवति किं तु घटेऽपीत्यनेन व्यापकोऽयमित्युक्तं भवति महाविषयत्वात् । विद्वदुपज्ञेति । विद्वद्भ्य[2] उपज्ञा प्रथम उपक्रमो यस्या[3] उक्तेरिति बहुव्रीहिः । तेन 'उपज्ञोपक्रमं' इति तत्पुरुषाश्रयं[4] नपुंसकत्वं निरवकाशम् । श्रूयमाणेष्विति । श्रोत्रशष्कुलीं संतानेनागता अन्त्याः शब्दाः श्रूयन्त इति प्रक्रियायां शब्दाः[5] श्रूयमाणा इत्युक्तम् । येषां घण्टानुरणनरूपत्वं तावदस्ति ते च ध्वनिशब्देनोक्ताः । यथाह[6] भगवान्भर्तृहरिः[7]—'यः संयोगवियोगाभ्यां करणैरुपजन्यते । स स्फोटः शब्दजः[8] शब्दो ध्वनिरित्युच्यते बुधैः ॥' एवं घण्टादि[9]निर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः । श्लेष[10] प्रकारोऽव्यक्तशब्दानामेव वर्तते । व्यक्तशब्दानां तथा[11] श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः । यथाह भगवान्[12]स एव—'प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥' इति[13] । तेन व्यञ्जकौ शब्दार्थावपीह[14] ध्वनिशब्देनोक्तौ । किंच[15]

---

१. 'न' क-ख. पुस्तकयोर्नास्ति. २. 'प्रकाश्यते' ग. ३. 'तेषु श्रूय' क-ख.

---

१. 'तस्मिन्' इत्यारभ्य 'विद्वदुपज्ञेति' इत्यन्तं ग. पुस्तके नास्ति. २. 'विद्वदुपज्ञा' ग. ३. 'अस्या' क-ख. ४. 'अयस्वं' ग. ५. 'शब्दजाः शब्दा इत्युक्तम्' क-ख. ६. 'तत्राह' क-ख. ७. 'तत्रभवान्भर्तृ' ग. ८. 'शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः' ग. ९. 'घण्टानाद' ग. १०. 'श्लेष—शब्दानां' ग-पुस्तके नास्ति. ११. 'यथा' क-ख. १२. 'स एव तत्रभवान्' ग. १३. 'इति तेन' ग-पुस्तके नास्ति. १४. 'अपि' ग-पुस्तके नास्ति. १५. 'किंच' ग-पुस्तके नास्ति.

वर्णेषु ध्वनिरिति [1]व्यवहरन्ति । [2]तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः । न चैवंविधस्य ध्वनेर्वक्ष्यमाण-

---

वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु । यथोक्तम्—'अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः । यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥' इति । तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादि[1]वृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभ्यधिकः स ध्वनिरुक्तः । यदाह स एव—'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभे[2]दास्तु वैकृताः । ध्वनयः [3]समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥' इति । अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो [4]ध्वनिरित्युक्तः । एवं चतुष्कमपि ध्वनिः । तद्योगाच्च समस्तमपि काव्यं ध्वनिः । तेन व्यतिरेकाव्यतिरेकव्यपदेशोऽपि न युक्तः । **वाच्यवाचकसंमिश्र इति ।** वाच्यवाचकसहितः संमिश्र इति मध्यमपदलोपी समासः । 'गामश्वं पुरुषं पशुम्' इतिवत्समुच्चयोऽत्र चकारेण विनापि । तेन वाच्योऽपि ध्वनिः वाचकोऽपि शब्दो ध्वनिः । द्वयोरपि [5]व्यञ्जकत्वं ध्वनित्वभावात् । संमिश्रिते विभावानुभाव[6]संवलनच्छाययेति व्यङ्ग्योऽपि ध्वनिः ध्वन्यत इति कृत्वा । शब्दनं शब्दः शब्दव्यापारः । [7]नचासावभिधादिरूपः । अपि त्वात्मभूतः । सोऽपि ध्वननाद्ध्वनिः । काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः । उक्तप्रकारध्वनिचतुष्टयत्वात् । अत एव साधारणहेतुमाह—**व्यञ्जकत्वसाम्यादिति ।** [8]व्यञ्जकत्वं व्यञ्जनभावः सर्वेषु पक्षेषु सामान्यरूपः । साधारण इत्यर्थः । यत्पुनरेतदुक्तं 'वाग्विकल्पानामानन्त्यात्' इत्यादि तत्परिहरति—**न चैवंविधस्येति ।** वक्ष्यमाणः प्रभेदो यथा—मुख्ये द्वे रूपे । तद्भेदा यथा—अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इत्यविवक्षि-

---

१. 'व्याहरन्ति' ख. २. 'तथैवान्यैः' इत्यारभ्य 'आविष्करणीयम्' इत्यन्तं क-ख-पुस्तकयोर्नास्ति.

---

१. 'आदि' ग-पुस्तके नास्ति. २. 'भेदं तु' क-ख. ३. 'समपोहन्ते' क-ख. ४. 'ध्वनिरुक्तः' ग. ५. 'व्यञ्जकत्वात् । ध्वनतीति कृत्वा' ग. ६. 'संवलनयेति' क-ख. ७. 'न चापि ध्वनिः ... ' क-ख. ८. 'व्यङ्ग्यस्य व्यञ्जकभावः' ग.

प्रभेदतद्भेदसंकलनया महाविषयस्य यत्प्रकाशनं तदत्र प्रसिद्धालंकारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः । न च तेषु कथंचिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् । तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः ।

अस्ति ध्वनिः । स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति

---

तवाच्यस्य, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्य इति विवक्षितान्यपरवाच्यस्येति । तत्राप्यवान्तरभेदाः । **महाविषयस्येति** । अशेषलक्ष्यव्यापिन इत्यर्थः । विशेषग्रहणेनाव्यापकत्वमाह । मात्रशब्दे[1]नाङ्गित्वाभावम् । [2]न चैवं भवतीत्यन्वयः । तत्र ध्वनिस्वरूपे भावितं प्रणिहितं चेतो येषाम् । [3]न चमत्काररूपेण भावितमधि[4]वासितम् । अत एव मुकुलितलोचनत्वादिविकारकारणं चेतो येषामिति । **अभाववादिन इति** । अवान्तरप्रकारत्रयभि[5]न्ना अपीत्यर्थः । तेषां प्रत्युक्तौ फलमाह—**अस्तीति** । उदाहरणपृष्ठे भाक्तत्वं सुशङ्कं सुपरिहरं च भवतीत्यभिप्रायेणोदाहरणदानावकाशार्थं भाक्तत्वाल्लक्षणीयत्वे प्रथमं परिहरणयोग्येऽप्यप्रतिसमाधाय भवि[6]ष्यदुद्द्योतानुवादानुसारेण वृत्तिकृदेव प्रभेदनिरूपणं करोति—**स चेति** । पञ्चधापि ध्वनिश[7]ब्दार्थे येन यत्र यतो यस्य यस्मै इति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं सुयोज्यम् । वाच्ये[8]ऽर्थे तु ध्वनौ वाच्यशब्देन स्वात्मा [9]वक्ष्यते । तेनाविवक्षितोऽप्रधानी[10]भूतः स्वात्मा येनेत्यविवक्षितवाच्यो व्यञ्जकोऽर्थः । एवं विवक्षितान्यपरवाच्येऽपि । यदि वा कर्मधारयः । अत्र पक्षे विवक्षितश्चासौ वाच्यश्चेति । तत्रार्थः कदाचि[11]दनुपपद्यमानत्वादिना निमित्तेनाविवक्षितो भवति । कदाचि[12]दुपपद्यमान इति कृत्वा विवक्षित एव । व्यङ्ग्यपर्यन्तां [13]तु प्रतीतिं स्वसौभाग्यम-

---

१. 'अङ्गित्वभावं' क-ख. २. 'न चैवं भवतीत्यन्वयः' ग-पुस्तके नास्ति. ३. 'न वा' क-ख. ४. 'वासितं चेतो येषाम्' क-ख. ५. 'भिन्नोऽपीत्यर्थः' क-ख. ६. 'उद्योते गतानुवादानुसरणेन' ग. ७. 'शब्दार्थौ' ग. ८. 'अर्थे' क-ख-पुस्तकयोर्नास्ति. ९. 'वक्ष्यते' क-ख. पुस्तकयोर्नास्ति. १०. 'कृतः ।··· ···णार्थपथे अविवक्षितश्चासावर्थश्चेति । विवक्षितान्यपरश्चासौ वाच्यश्चेति । तत्रार्थः कदाचिद्' ग. ११. 'अनुपपाद्य' क-ख. १२. 'उपपाद्य' क-ख. १३. 'तु' क-ख-पुस्तकयोर्नास्ति.

द्विविधः सामान्येन।

तत्राद्यस्योदाहरणम्—

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥'

द्वितीयस्यापि—

'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥'

---

हिम्ना करोति। अत एवार्थोऽत्र प्राधान्येन व्यञ्जकः पूर्वत्र शब्दः। ननु च विवक्षा चान्यपरत्वं चेति विरुद्धम्। अन्यपरत्वेनैव[1] विवक्षणात्को विरोधः। **सामान्येनेति**। वस्त्वलंकाररसात्मना हि[2] त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्यां संगृहीत इति भावः। ननु तन्नाम[3]पृष्ठे एतन्नामनिवेशनस्य किं फलम्। उच्यते—अनेन हि नामद्वयेन ध्वननात्मनि व्यापारे पूर्वप्रसिद्धाभिधातात्पर्यलक्षणात्मकव्यापारत्रितयावगतार्थप्रतीतेः प्रतिपत्तृगतायाः प्रयोक्त्रभिप्रायरूपायाश्च विवक्षायाः सहकारित्वमुक्तमिति ध्वनिस्वरूपमेव नामभ्यामेव प्रोज्जीवितम्[4]। **सुवर्णपुष्पामिति**। सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा। एतच्च वाक्य[5]मेवासंभवत्स्वार्थमिति कृत्वाविवक्षितवाच्यम्[6]। तत एव पदार्थम[7]भिधायान्वयं च तात्पर्यशक्त्यावगमय्यैव बाधकवशेनोपहत्य[8] सादृश्यात्सुलभसमृद्धिसंभारभाजनतां लक्षयति। तल्लक्षणाप्रयोजकं[9] शूरकृतविद्यासेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सन्नायिकाकुचकलशयुगलमिव महार्घतामुपयद्ध्वन्यत[10] इति। शब्दोऽत्र प्रधानतया व्यञ्जकः, अर्थस्तु[11] तत्सहकारितयेति चत्वारो व्यापाराः[12]। **शिखरिणीति**। नहि[13] निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतादय[14] इमां सिद्धिं विदध्युः। दिव्यकल्पसहस्रादिश्चात्र परिमितः कालः। किमभिधान-

---

१. 'विवक्षितात्' ग. २. 'हि' ग-पुस्तके नास्ति. ३. 'किंनाम' ग. ४. 'प्रोज्झितम्' क-ख. ५. 'वाक्यक्रमेऽसंभवत्' ग. ६. 'वाच्यात्' ग. ७. 'अभिधेयान्वयं च' ग. ८. 'वशेन तमपहस्य' ग. ९. 'तल्लक्षणप्रयोजनं' ग. १०. 'उपनयत्' क-ख. ११. [illegible] क-ख. १२. [illegible] ग. १३. 'निर्विघ्नाक्रम' ग. १४. 'श्रीपर्वतप्रभृतय इत्थं' ग.

यदप्युक्तं भक्तिर्ध्वनिरिति तत्प्रतिसमाधीयते—

'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।'

---

मिति न चैवंविधोत्तमफलजनकत्वेन पञ्चाग्निप्रभृत्यपि तपः श्रुतम् । तवेति भिन्नं पदम् । समासेन विगलिततया सा न प्रतीयते । तव दशतीत्यभिप्रायेण । तेन यत्केचिदाहुः—'वृत्तानुरोधात्त्वदधरपाटलमिति न कृतम्' इति, तदसदेव । दशतीत्यास्वादयति । अनवच्छिन्नप्रबन्धतया न त्वौदरिकवत्परं भुङ्क्ते । अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव, रसज्ञताप्यस्य तपःप्रभावादेवेति । शुकशावक इति तारुण्यादुचितकाललाभोऽपि फलं तपस एवेति । अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनचाटुविरचनात्मकविभावोन्मीलनं व्यङ्ग्यम् । अत्र च त्रय एव व्यापाराः—अभिधा तात्पर्यं ध्वननं चेति । मुख्यार्थबाधाद्यभावे मध्यमकक्ष्याया लक्षणायास्तृतीयस्या अभावात् । यदिवाकस्मिकविशिष्टप्रश्नार्थानुपपत्तेर्मुख्यार्थबाधायां सादृश्याल्लक्षणा भवतु मध्ये । तस्यास्तु प्रयोजनं ध्वन्यमानमेव तत्तुर्यकक्ष्यानिवेशि । केवलं पूर्वत्र लक्षणैव प्रधानं ध्वननव्यापारसहकारि । इह त्वभिधातात्पर्यशक्ती । वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः केवलं लेशेन लक्षणाव्यापारोपयोगोऽप्यस्तीत्युक्तम् । असंलक्ष्यक्रमव्यङ्ग्ये तु लक्षणासमुन्मेषमात्रमपि नास्ति । असंलक्ष्यत्वादेव क्रमस्येति वक्ष्यामः । तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः । अत एवोभयोदाहरणपृष्ठ एव भाक्तमाहुरित्यनुभाष्य दूषयति—**भक्त्या बिभर्तीति** । अत्रोक्तप्रकार इति

---

१. 'फलत्वेन' क-ख. २. 'प्रतीयतां ग. ३. 'केचित्' ग-पुस्तके नास्ति. ४. दशतीति' ग-पुस्तके नास्ति. ५. 'लोभोऽपि तपसैवेति' ग. ६. 'मुख्याद्बाधाविरहे मध्यम' ग. ७. 'भावात्' ग. ८. 'मुख्यबाधायां' ग. ९. 'तु' क-ख-पुस्तकयोर्नास्ति. १०. 'न केवलं' क-ख. ११. 'व्यापारे' ग. १२. 'व्यापारयोगो' ग. १३. 'समुद्देशमात्रं' क. नास्ति. १४. 'अस्तु लक्ष्यत्वादेव' ग. १५. 'अनुभाष्य' इत्यारभ्य 'उपचारमात्रमिति' इतिपर्यन्तं पुस्तकेष्वतीव पाठपौर्वापर्यं वर्तते. तत्र ख-पुस्तकेऽयं पाठक्रमः—'अनुभाष्य भक्त्यादिना दूषयति—अत्रोक्तप्रकार इति पञ्चस्वर्थेषु योज्यम् । शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—वाच्येति । भक्तिश्च ध्वनिश्चेति । ताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति । किं पर्यायवत्ताद्रूप्यं पृथि... उत

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं[1] बिभर्ति । भिन्नरूपत्वात् । वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येणार्थप्रकाशनं यत्र व्यङ्ग्यप्राधान्ये[2] स ध्वनिः । उपचारमात्रं तु[3] भक्तिः ।

---

पञ्चस्वर्थेषु योज्यम् । शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति** । तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः । भक्तिश्च ध्वनिश्चेति ताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति । किं पर्यायवत्ताद्रूप्यम्[1] । अथ[2] पृथिवीत्वमिव पृथिव्या अन्यतो[3] व्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तगृहस्य संभवमात्रादुपलक्षणम् । तत्र प्रथमं पक्षं निराकरोति—**उपचारमात्रमिति** । उपचारो गुणवृत्तिर्लक्षणा उपचरणमतिशयितो व्यवहार इत्यर्थः । मात्रशब्देनेदमाह—यत्र लक्षणाव्यापारात्तृतीयादन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या संभवन्नप्यनुपयुज्यमानत्वेनानाद्रियमाणत्वादसत्कल्पो[4] यमर्थमधिकृत्य प्रवर्तते तद्धि प्रयोजनलक्षणम् । तत्रापि लक्षणास्तीति कथं ध्वननं लक्षणा चेत्येकं

---

१. 'नैकतां' ग. २. 'व्यङ्ग्यप्राधान्ये' क-ख-पुस्तकयोर्नास्ति. ३. 'तु' क-ख-पुस्तकयोर्नास्ति.

---

काक इव देवदत्तस्य संभवमात्रादुपलक्षणम् । तत्र प्रथमं पक्षं निराकरोति—भक्त्या बिभर्तीति । तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः । उपचारमात्रमिति' इति. ग-पुस्तके तु—'अनुभाष्य दूषयति । अयं भावः—भक्ती··· ···तिकं पर्यायात्ताद्रूप्यमथ पृथिवीत्वमिव पृथि··· ···अन्यतो व्यावर्तकधर्मरूपतया लक्षणम्' उत काक इव देवदत्तगृहस्य संभवमात्र··· ··· ···भेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—वाच्येति । तात्पर्येण विश्रान्तिधामतया प्रयोजनत्वेने··· ··· ···रमात्रमिति । उपचा·········'.

१. 'पर्यायस्ताद्रूप्यं' ग. २. 'अथ' क-ख-पुस्तकयोर्नास्ति. ३. 'अन्यव्यावर्तक' क-ख. ४. 'माणत्वात्संकल्पो' क-ख.

तत्रैतत्स्याद्भक्तिर्लक्षणं ध्वनेरित्याह—

'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥१७॥'

न च भक्त्या ध्वनिर्लक्ष्यते । कथम् । अतिव्याप्तेरव्याप्तेश्च । तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः संभवात् । यत्र हि व्यञ्जकत्वकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते । यथा—

'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ।

---

तत्त्वं स्यात् । द्वितीयं पक्षं दूषयति—**तत्रैतदिति** । असाविति ध्वनिः । तयेति भक्त्या । ननु ध्वननमवश्यंभावीति कथं तद्व्यतिरिक्तोऽस्ति विषय इत्याह—**महत्सौष्ठवमिति** । अत एव प्रयोजनस्यानादरणीयत्वाद्व्यञ्जकत्वे न कृत्यं किंचिदिति भावः । महद्ग्रहणेन गुणमात्रं तद्भवति । यथोक्तम्—'समाधिरन्यधर्मस्य क्वाप्यारोपो विवक्षितः ।' इति दर्शयति (?) । ननु प्रयोजनाभावे कथं तथा व्यवहार इत्याह—**प्रसिद्ध्यनुरोधेति** । परम्परया तथैव प्रयोगात् । वयं तु ब्रूमः—प्रसिद्धिर्या प्रयोजनस्य निगूढतेत्यर्थः । उत्तानेनापि रूपेण तत्प्रयोजनं चैकासन्निगूढतां निधानवदपेक्षत इति भावः । **यथेति** । वदतीत्युपचारेण हि स्फुटीकरणप्रतिपत्तिः । प्रयोजनं यद्यगूढं स्वशब्देनोच्यते किमचारुत्वं स्यात् । गूढतया वर्णनेन किं चारुत्वमधिकं जातम् । अनेनैवाशयेन वक्ष्यति—यत उक्त्यन्तरेणाशक्यं

---

१. 'मा चैतत्' ग. २. 'नैव' ग. ३. 'च' ग. ४. 'व्यङ्ग्यकृतं' ग. ५. 'परिमिलनं' ग.

---

१. 'अतिव्याप्तेरिति' ग. २. 'प्रयोजनस्य प्रयोजनानादरणाद्व्यञ्जकत्वे' क-ख. ३. 'न तद्भवति' क-ख. ४. 'प्रयोजनस्यानिरूढते' ग. ५. 'च तां विरूढतां' ग. ६. 'यथेति' ग-पुस्तके नास्ति. ७. 'यद्यरूढं' ग.

इदं व्यस्तन्यासं प्रशिथिलभुजाक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥'

तथा—

'चुम्बिज्जइ सअहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम् ॥'

तथा—

'कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥'

तथा—

'अज्जाएँ पहारो णवलदाए दिण्णो पिएण थणवट्टे ।
मिउओ वि दूसहो बिअ जाओ हिअए सवत्तीणम् ॥'

---

किं यदिति । अवरुन्धिज्जइ आलिङ्ग्यते । पुनरुक्तमित्यनुपादेयता लक्ष्यते । उक्तार्थस्यासंभवात् । 'कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः । यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥' अत्र ग्रहणेनोपादेयता लक्ष्यते । हरणेन तत्परतन्त्रतापत्तिः । तथा अज्जेति । कनिष्ठभार्यायाः स्तनपृष्ठे नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्यसूचकं तत्क्रीडासंविभागमप्राप्तानां हृदये दुःसहो जातः । मृदुत्वादेव अन्यस्य दत्तो मृदुः प्रहारोऽन्येन

---

१. 'श्लथभुजलताक्षेप' क-ख. २. 'यथा' ग. ३. 'चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः । विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥' इति च्छाया. ४. 'यथा' ग. ५. टीकायामेव च्छायास्ति. ६. 'यथा' ग. ७. 'कनिष्ठभार्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे । मृदुकोऽपि दुःसह इव जातो हृदये सपत्नीनाम् ॥' इति च्छाया.

---

१. 'उपरुदित' क-ख. २. 'तत्' क-ख पुस्तकयोर्नास्ति. ३. 'सूचकः' क-ख. ४. 'मृदुलत्वादेव' ग. ५. 'अन्यस्य संपद्यते' ग.

त[1]था—

'परार्थे यः पीडामनुभवति भङ्गे[2]ऽपि मधुरो
　　यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
　　किमिक्षो[3]र्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥'

इ[4]त्यत्रेक्षुपदेऽनुभूतिशब्दः । न चैवंविधः क[5]दाचिदपि ध्वनेर्विषयोऽभिमतः । यतः—

'उक्त्यन्तरे[6]णाशक्यं यत्तच्चारुत्वं प्रकाशयन् ।
शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयी भवेत् ॥ १८ ॥'

अत्र चोदाहृते विषये नो[7]क्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः ।

---

च संवेद्यते दुःसहश्च मृदुरपीति चित्रम् । दाने[1]नात्र फलवत्त्वं लक्ष्यते । **तथा—परार्थेति** । यद्यपि प्रस्तुतमहापुरुषापेक्षायामनुभवतिशब्दो मुख्य एव तथाप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवनेनासंभवता पीडावत्त्वं लक्ष्यते । तच्च पीड्यमाने पर्यवस्यति । नन्वस्त्यत्र प्रयोजनं तत्किमिति न[2] ध्वन्यत इत्याशङ्क्याह—**न चैवंविध इति । यत उक्त्यन्तरेणेति** । उक्त्यन्तरेण ध्वन्यतिरिक्तेन स्फुटेन शब्दार्थो(भय)व्यापारविशेषेणेत्यर्थः । शब्द इति पञ्चस्वर्थेषु योज्यम् । **[3]ध्वन्युक्तेर्विषयी भवेदिति** । ध्वनिशब्देनोच्यत इत्यर्थः । **उदाहृत इति** । वदतीत्यादौ । एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापार इत्युक्त्वा

---

१. 'यथा' **ग.** २. 'च' **ग.** ३. 'अयं' **ग.** ४. 'इत्यादाविक्षुपदेऽनुभूतिशब्दः' **क-ख.** ५. 'कदाचिद्ध्वनेर्विषयः । यतः' **क-ख.** ६. 'णाशक्यं' **ख.** ७. 'नोक्त्यन्तरेणाशक्य' **क-ख.**

---

१. 'तद्दलवत्त्वं' **ग.** २. 'न' ग. पुस्तके नास्ति. ३. 'ध्वन्यर्थे' **क-ख.**

किंच—

'रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥१९॥'

तेषु चोपचरितशब्दवृत्तिरस्तीति । तथाविधे च विषये क्वचित्संभवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते । न तथाविधशब्दमुखेन ।

---

यत्र मुलत एव प्रयोजनं नास्ति, भवति चोपचारस्तत्रापि को ध्वननव्यापार इत्याह—**किंचेति** । लावण्याद्या ये शब्दाः स्वविषयाल्लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः रूढत्वादेव त्रितयसंनिध्युपेक्षणव्यवधानशून्याः । यदाह—'निरूढा लक्षणा काचित्सामर्थ्यादभिधानवत्' इति । ते तस्मिन्स्वविषयादन्यत्र प्रयुक्ता अपि न ध्वनेः पदं भवन्ति । न तत्र ध्वनिव्यवहारः । उपचरिता शब्दस्य वृत्तिर्गौणी। लाक्षणिकीत्यर्थः । आदिग्रहणेनानुलोम्यं प्रातिकूल्यं सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते । लोम्नामनुगतमनुलोमं मर्दनम् । कूलस्य प्रतिपक्षतया स्थितं स्रोतः प्रतिकूलम् । तुल्यगुरुः सब्रह्मचारी । इति मुख्यो विषयः । अन्यः पुनरुपचरित एव । न चात्र प्रयोजनं किंचिदुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो ध्वननव्यवहारः । ननु 'देवडिति लुणाहि पलुत्रम्मिगमिज्वालवणुज्वलं गुमरिफोल्लपरिण्य' (?) इत्यादौ लावण्यादिशब्दसंनिधानेऽस्ति प्रतीयमानाभिव्यक्तिः । सत्यम्। सा तु न लावण्यशब्दात् । अपि तु समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादेव। अत्र हि प्रियतमामुखस्यैव समस्ताशाप्रकाशकत्वं ध्वन्यत इत्यलं बहुना । तदाह—**प्रकारान्तरेणेति** । व्यञ्जकत्वेनैव । न तूपचरितलावण्यादिशब्दप्रयोगादित्यर्थः । एवं यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति तावन्नास्ति । तेन यदि ध्वनेर्भक्तिर्लक्षणं

---

१. 'निरूढा' ग. २. 'शब्दप्रवृत्ति' ग.

---

१. 'लक्षणाः काश्चित्' ग. २. 'शब्दवृत्तिः' ग. ३. 'चेत्यर्थः' क-ख. ४. 'लोम्नानुगतं' ग. ५. '[illegible]' क-ख. ६. 'ध्वनिव्यवहारः' ग. ७. 'प्रियतमस्यैव' क-ख. ८. 'बहुना' क-ख-पुस्तकयोर्नास्ति. ९. 'ध्वनेर्यदि' ग.

अपि च ।

'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ २० ॥'

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि

---

तदा भक्तिसंनिधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यतिव्याप्तिमभ्युपगम्यापि ब्रूमः—भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः । तथापि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः । न च भिन्नविषयो धर्मधर्मिभावो धर्म एव लक्षणमित्युच्यते । तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः । ध्वननं च प्रयोजनविषयम् । न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः । लक्षणासामग्र्यभावात् । इत्यभिप्रायेणाह—अपि चेत्यादि । मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य परिसमाप्य गुणवृत्त्या लक्षणारूपयार्थस्यामुख्यस्य दर्शनं प्रत्यायना सा यत्फलं कर्मभूतं प्रयोजनरूपमुद्दिश्य क्रियते तत्र प्रयोजने तावद्द्वितीयो व्यापारः । न चासौ लक्षणैव । यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य तदीयो व्यापारो लक्षणा । न च प्रयोजनमवगमयतः शब्दस्य बाधकयोगः । तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनावस्थानात् । तेनायं लक्षणलक्षणाया न विषय इति भावः । दर्शनमिति ण्यन्तो निर्देशः ।

---

१. 'अत्र' ग. २. 'लक्षणाप्रयोजने' ग.

---

१. 'अतिव्याप्तिरभ्युपगमस्यापि' क-ख. २. 'यद्विषयोऽपि' ग. ३. 'विषययोः' ग. ४. 'युक्तः' क-ख-पुस्तकयोर्नास्ति. ५. 'व्यापारं च' ग. ६. 'अदर्शनं' ग. ७. 'अपगमयतः' ग.

शब्दस्यामुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात्। न चैवम्। तस्मात्—

'वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ २१ ॥

---

कर्तव्य इत्येव । अवगमयितव्य इत्यर्थः । **अमुख्यतेति** । बाधकेन विधुरीकृततेत्यर्थः । तस्येति शब्दस्य । **दुष्टतैवेति** । प्रयोजनाव[1]गमस्य सुखसंपत्तये हि स[2] शब्दः प्रयुज्यते । त[3]स्मान्न मुख्यार्थे । यदि च 'सिंहो बटुः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य तर्तार्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत्तत्रापि प्रयोजनान्तरमे[4]न्विष्यते तत्राप्युपचारेऽनवस्था । अ[5]थ न तत्र स्खलद्गतित्वं तर्हि प्रयोजनेऽवगमयितव्ये न[6] लक्षणाख्यो व्यापारः । तत्सामर्थ्यभावात् । न च नास्ति व्यापारः । न चासावभिधा। समयस्य तत्राभावात् । यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः । **न चैवमिति** । न च प्रयोगे दुष्टता काचित् । प्रयोजनस्याविघ्नेनैव प्रतीतेः । तेना[7]भिधैव मुख्येऽर्थे बाधकेन प्रविवित्सुर्निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरतीति । अत एव मुख्योऽस्यायमर्थ इति व्यवहारः । तथैव चामुख्यतया संकेतग्रहणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा ([8]उपसंहरति—**तस्मादिति** । यतोऽभिधापुच्छभूतैव लक्षणा ) ततो हेतोर्वाचकत्वमभिधाव्यापारमाश्रिता तद्बाधनेनोत्थानात्तत्पुच्छभूतत्वाच्च गुणवृत्तिः । गौणलाक्षणिकप्रकार इत्यर्थः । सा कथं ध्वनेर्व्यञ्जनात्मनो

---

१. 'उपगमस्य' ग. २. 'स' क-ख-पुस्तकयोर्नास्ति. ३. 'तस्मिन्नमुख्येऽर्थे' क-ख. ४. 'अन्वेष्यम्' ग. ५. 'अथ' ग-पुस्तके नास्ति. ६. 'न' क-ख-पुस्तकयोर्नास्ति. ७. 'तेनाभिधैव मुख्येऽर्थे बाधकेन प्रविवित्सुर्निरुध्यमाना सती' ग. ८. 'उप–' इत्यारभ्य 'लक्षणा' इत्यन्तं क-ख-पुस्तकयोर्नास्ति.

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः । अव्याप्तिरस्य[1] लक्षणस्य । नहि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः । अन्ये च बहवः प्रकारा[2] भक्त्या व्याप्यन्ते । तस्माद्भक्तिरलक्षणम् ।

---

लक्षणं स्यात् भिन्नविषयत्वादिति । एतदुपसंहरति-**तस्मादिति**। यतोऽतिव्याप्तिरुक्ता तत्प्रसङ्गेन च भिन्नविषयत्वं तस्माद्धेतोरित्यर्थः । एवम् 'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' इति कारिकागतामतिव्याप्तिं व्याख्यायाव्याप्तिं व्याचष्टे[1]—**अव्याप्तिरस्येति** । अस्य गुणवृत्तिरूपस्येत्यर्थः । यत्र यत्र ध्वनिस्तत्र तत्र यदि[2] भक्तिर्भवेन्न च स्यादव्याप्तिः । न चैवम् । अविवक्षितवाच्येऽस्ति[3] भक्तिः 'सुवर्णपुष्पां–' इत्यादौ 'शिखरिणि–' इत्यादौ तु सा कथम् । ननु लक्षणा तावद्गौणीमपि[4] व्याप्नोति । केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते । 'सिंहो बटुः' इति । अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति । शब्दार्थौ वा युगपत्तं लक्षयित्वा ताभ्यामेव शब्दार्थाभ्यां मिश्रीभवत इत्येवं लाक्षणिकाद्गौणस्य भेदः । यदाह—'गौणे शब्दप्रयोगः[5], न लक्षणायाम्' इति । तत्रापि लक्षणास्त्येवेति सर्वत्र[6] सैव व्यापिका । सा च पञ्चविधा[7] । तद्यथा—अभिधेयेन संयोगात् । द्विरेफशब्दस्य हि[8] योऽभिधेयो भ्रमरशब्दः द्वौ रेफौ यस्येति कृत्वा तेन[9] भ्रमरशब्देन यस्य संयोगः संबन्धः षट्पदलक्षणस्यार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते । अभिधेयसंबन्धं व्याख्यातरूपं निमित्तीकृत्य सामीप्यात् । 'गङ्गायां घोषः' । समवायादिति । स्वसंबन्धादित्यर्थः[10] । 'यष्टीः प्रवेशय' इति यथा । वैपरीत्यात् । यथा—शत्रुमुद्दिश्य कश्चिद्ब्रवीति—'किमिवोपकृतं न तेन मम' इति । क्रियायोगादिति । कार्यकारणभावादित्यर्थः । यथा—अन्नापहारिणि व्यवहारः 'प्राणानयं हरति' इति । एवमनया लक्षणया पञ्चविधया विश्वमेव व्याप्तम् । तथाहि—'शिखरिणि–' इत्यत्रा-

---

१. 'अप्यस्य' ग. २. 'तद्भेदप्रकारा वक्ष्यमाणभक्त्या' ग.

---

१. 'आचष्टे' क-ख. २. 'यदि' क-ख-पुस्तकयोर्नास्ति. ३. 'ह्यस्ति' ग. ४. 'गौणीमपि' ग. ५. प्रयोगेण लक्षणां' क-ख. ६. 'सैव सर्वत्र' ग. ७ 'पञ्चधा' ग. ८. 'हि' क-ख-पुस्तकयोर्नास्ति. ९. 'तेन' क-ख-पुस्तकयोर्नास्ति. १०. 'स्व' ग-पुस्तके नास्ति.

कस्मिंश्चित्प्रश्नविशेषादिबाधकानुप्रवेशे सादृश्याल्लक्षणास्त्येव । नन्वत्राङ्गीकृतैव मध्ये लक्षणा । कथं तर्ह्युक्तं विवक्षितान्यपरेति । तद्भेदोऽत्र मुख्योऽसंलक्ष्यक्रमात्मा विवक्षितः । तद्भेदशब्देन च रसाभावतदाभासतत्प्रशमभेदास्तदवान्तरभेदाश्च । न च तेषु लक्षणाया उपपत्तिः । तथाहि विभावानुभावप्रतिपादके काव्ये तत्रार्थे मुख्ये तावद्बाधकानुप्रवेशोऽप्यसंभाव्य इति को लक्षणावकाशः । ननु किं बाधया इयदेव लक्षणास्वरूपम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति । इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते । विभावानुभावयोः कारणकार्यरूपत्वात्, व्यभिचारिणां च तत्सहकारित्वादिति चेत्, मैवम् । धूमशब्दाद्धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात् । ततोऽग्नेः शीतापनोदस्मृतिरित्यादिरपर्यवसितः शब्दार्थः स्यात् । धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति । सति हि तस्मिन्स्वार्थविश्रान्त्यभावात् । न च विभावादिप्रतिपादने बाधकं किंचिदस्ति । नन्वेवं धूमावगमनानन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रत्यादिचित्तवृत्तिप्रतिपत्तिरिति शब्दव्यापार एवात्र नास्ति । इदं तावदयं प्रतीतिज्ञो मीमांसकः प्रष्टव्यः—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः । नैवं भ्रमितव्यम् । एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति का रसता । यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणो नासौ स्मरणानुमानादिना[2] खलीकारपात्रीकर्तव्यः । किं तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्रतिपद्यते[3] । अपि तु हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया । न चासौ चर्वणा प्रमाणान्तरतो जाता पूर्वं येनेदानीं स्मृतिः स्यात् । न चाधुना कुतश्चित्प्रमाणान्तरादुत्पन्ना । अलौकिके प्रत्यक्षाद्यव्यापारात् । अत एवालौकिक एव विभावादिव्यवहारः[4] । यदाह—'यदयमनुभावयति वागङ्गसत्त्वकृतोऽभिनयस्तस्मादनुभाव' इति । तच्चित्तवृत्तितन्मयीभवनमेव ह्यनुभवनम् । लोके तु कार्यमेवोच्यते नानुभावः । अत एव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रे स्थायिग्रहणं न कृतम् । तत्प्रत्युत शल्यभूतं स्यात् ।

---

१. 'न तस्मिन् हि मुख्यो' क-ख. २. 'स्मरणानुमानादिसाम्येन' ग. ३. 'प्रतीयते' ग. ४. 'व्यवहार एव' क-ख.

स्थायिनस्तु रसीभाव औचित्यादुच्यते । तद्विभावानुभावोचितचित्तवृत्तिसंस्कारसुन्दरचर्वणोदयात् । हृदयसंवादोपयोगिलोके[1]चित्तवृत्तिपरिज्ञानावस्थायामुद्यानपुलकादिभिः स्थायिभूतरत्याद्यवगमाच्च । व्यभिचारी तु चित्तवृत्त्यात्मत्वे मुख्यचित्तवृत्तिपरवश एव [2]चर्व्यत इति विभावानुभावमध्ये गणितः । अत एव रस्यमानताया एषैव निष्पत्ति[3]र्या प्रबन्धप्रवृत्तबन्धुसमागमादिकारणोदितहर्षादिलौकिकचित्तवृत्तिन्यग्भावेन चर्वणारूपत्वम् । अतश्चर्वणात्राभिव्यञ्जनमेव, न तु ज्ञापनम् । प्रमाणव्यापारवत् । नाप्युत्पादनम् । हेतु[4]व्यापारवत् । ननु यदि नेयं ज्ञप्तिर्न वा निष्पत्तिः, तर्हि किमेतत् । न[5] त्वयमसावलौकिको र[7]सः । अपि तु चर्वणोपयोगी । ननु क्वैतद्दृष्टमन्यत्र । यत एव न दृष्टं तत एवालौकिकमित्युक्तम् । नन्वेवं[6] रसोऽप्रमेयः स्यात् । अस्तु । किं ततः । तच्चर्वणात एव प्र[9]तीतिव्युत्पत्तिसिद्धेः कि[10]मन्यद्दर्शनीयम् । नन्वप्रमाणक[8]मेतत् । न । [11]स्वसंवेदनसिद्धत्वात् । ज्ञानविशेषस्यैव चर्वणात्मत्वात् । इत्यलं बहुना । अतश्च रसोऽयमलौकिकः । येन ललितपरुषानुप्रासस्यार्थाभिधाना[12]नुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वम् । का तत्र लक्षणायाः शङ्कापि । काव्यात्मकशब्दनि[13]ष्पीडनेनैव तच्चर्वणा दृश्यते । दृश्यते हि तदेव [14]काव्यं पुनः पुनः [15]पठ्यमानं चर्व्यमाणश्च [16]सहृदयो लोकः । न तु काव्यस्य तत्र 'उपादेयापि ये हेया' इति न्यायेन कृतप्रतीतिकस्यानुपयोग एवेति [17]शब्दस्यापि ध्वननव्यापारः । अत एवालक्ष्यक्रमता । यत्तु वाक्यभेदः स्यादिति केनचिदुक्तम्, तदनभिज्ञतया । शास्त्रं हि सकृदुच्चारितं समयबलेनार्थं प्रतिपादयद्युगपद्विरुद्धानेकसमयस्मृत्ययोगात्कथमर्थद्वयं [18]प्रत्याययेत् । अविरुद्धत्वे वा तावानेको वाक्यार्थः स्यात् । [19]क्रमेणापि विरम्यव्यापारयोगः । पुनरुच्चारितेऽपि[20] वाक्ये स एव । समयादिप्रकरणादेस्तादवस्थ्यात् । प्रकरणसमयप्रा[21]प्यार्थतिरस्कारे-

---

१. 'लोकवृत्ति' क-ख. २. 'चोच्यते' क. ३. 'यत्प्रबलप्रवृत्तत्वं बन्धु' ग. ४. 'स्वव्यापार' ग. ५. 'नैवं' क-ख. ६. 'नन्वयं' ग. ७. 'रसः । ननु विभावादिरत्र किं ज्ञापको हेतुरुत कारकः । न ज्ञापको न कारकः । अपि तु' ग. ८. 'अप्रमाणं' क-ख. ९. 'प्रीतिव्युत्पत्ति' क. 'प्रीत्युत्पत्ति' ख. १०. 'किमर्थनीयम्' ग. ११. 'स्व' क-खपुस्तकयोर्नास्ति. १२. 'नुपयोगेऽपि' ग. १३. 'निष्पीडनेनैव' क-ख. १४. 'कार्यं' क-ख. १५. 'चर्वमाणः' ख. १६. 'सहृदयलोकः' क-ख. १७. 'शब्दस्यापीह ध्वननं' ग. १८. 'प्रत्यापयेत' ग. १९. 'क्रमेण विरम्यव्यापारयोग' क-ख. २०. 'अपि' ग-पुस्तके नास्ति. २१. 'प्राप्तार्थ' क. 'प्राप्त्यार्थ' ख.

'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदिनामोपलक्षणतया [1]संभाव्येत । यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते

---

णार्थान्तरप्रत्यायकत्वे हि नियमाभाव इति । तेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति श्रुतौ खादेच्च न मांसमित्येष नार्थ इत्यत्र का प्रमेति प्रसज्यते । [2]तत्रापि न काचिदियत्तेत्यनाश्वास इत्येवं वाक्यभेदो दूषणम् । इह तु विभावाद्येव प्रतिपाद्यमानं चर्वणाविषयतोन्मुखमिति समयाद्युपयोगाभावः । न च नियुक्तोऽहमत्र करवाणि कृतार्थोऽहमिति शास्त्रप्रतीति[ः] सदृशमदः । तत्रोत्तरकर्तव्यौन्मुख्येन लौकिकत्वात् । इह तु विभावादिचर्वणाद्भुतपुष्पवत्तत्कालसारैवोदिता न पूर्वापरकालानुबन्धिनीति लौकिकास्वादाद्योगिविषयाच्चान्य एवायं रसास्वादः । अत एव 'शिखरिणि–' इत्यादावपि मुख्यार्थबाधादिक्रममनपेक्ष्यैव [4]सहृदया वक्त्रभिप्रायं चाटुप्रतीत्यात्मकं संवेदयन्ते । [5]अत एव ग्रन्थकारः सामान्येन विवक्षितान्यपरवाच्ये [6]ध्वनौ [7]भक्तेरभावमभ्यधात् । अस्माभिस्तु द्वन्द्वरूढं प्रत्याययितुमुक्तम् । भवत्वत्र लक्षणा । अलक्ष्यक्रमे तु कुपितोऽपि किं करिष्यसीति । यदि तु न कुप्यते 'सुवर्णपुष्पां–' इत्यादावविवक्षितवाच्येऽपि मुख्यार्थबाधादिलक्षणासामग्रीमनपेक्ष्यैव व्यङ्ग्यार्थविश्रान्तिरित्यलं बहुना । उपसंहरति—**तस्माद्भक्तिरिति ।**

ननु मा [8]भूद्ध्वनिरिति भक्तिरिति चैकं रूपम् । मा च भूद्भक्तिर्ध्वनेर्लक्षणम् । उपलक्षणं [9]तु भविष्यति । यत्र ध्वनिर्[10]भवति तत्र भक्तिरप्यस्तीति भक्त्युपलक्षितो ध्वनिर्न तावदेतत्सर्वत्रास्ति । इयता च किं परस्य सिद्धं किं वा नु(नः) त्रुटितमिति तदाह—**कस्यचिदित्यादि ।** ननु भक्तिस्तावच्चिरंतनैरुक्ता । तदुपलक्षणमुखेन च ध्वनिमपि समग्रभेदं [11]लक्षयिष्यन्ति, किं तल्लक्षणेनेत्याशङ्क्याह—**यदि चेति ।** अभिधानाभिधेयभावो ह्यलंकाराणां [12]व्यापकः । ततश्चाभिधावृत्ते वैयाकरणमीमांसकै-

---

१. 'संभाव्यते' क-ख.

---

१. 'अर्थान्तरत्व' ग. २. 'तत्र न' ग. ३. 'विषयोन्मुखं' क-ख. ४. 'सहृदयाः' ग.पुस्तके नास्ति. ५. 'तत एव' क-ख. ६. 'ध्वनौ' क-ख-पुस्तकयोर्नास्ति. ७. 'भक्तेरसभावं' क-ख. ८. 'भक्तिर्ध्वनिरिति' क-ख. ९. 'तु' क-ख-पुस्तकयोर्नास्ति. १०. 'भविष्यति' क-ख. ११. 'लक्षयिष्यन्ति ज्ञास्यन्ति च' ग. १२. व्यापक इत्यारभ्य अलंकाराणामित्यन्त क-ख-पुस्तकयोर्नास्ति.

तदभिधाव्यापारेण तदितरोऽलंकारवर्गः समग्र एव लक्ष्यति इति प्रत्येकमलंकाराणां लक्षणकरणे वैयर्थ्यप्रसङ्गः। किं च

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥२२॥'**

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः। यस्माद्ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसंपन्नसमीहितार्थाः संपन्नाः स्मः। येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुस्तेऽपि न परीक्ष्यवादिनः। यत उक्तया नीत्या वक्ष्यमाणया

---

निरूपिते कुत्रेदानीमलंकाराणां व्यापारः। यथा हेतुबलात्कार्यं जायत इति तार्किकैरुक्ते किमिदानीमीश्वरप्रभृतीनां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरालम्बः स्यात्। तदाह—**लक्षणकरणे वैयर्थ्यप्रसङ्ग इति**। मा भूद्वा पूर्वोन्मीलनम्। पूर्वोन्मीलितमेवास्माभिः सम्यङ्निरूपितं तथापि को दोष इत्यभिप्रायेणाह—**किं चेत्यादि। प्रागेवेति**। अस्मत्प्रयत्नादिति शेषः। एवं त्रिप्रकारमभाववादं, भक्त्यन्तर्भूततां च निराकुर्वता लक्षणीयत्वमेतन्मध्ये निराकृतमेव। अत एव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते। वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति—**येऽपीत्यादिना**। उक्तया नीत्या 'यत्रार्थः शब्दो वा-' इति सामान्यलक्षणं प्रतिपादितम्। वक्ष्यमाणया तु नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे संक्रमितं'-इत्यादिना। तेनात्र प्रथमोद्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण

---

१. 'तदितरालंकार' ग. २. 'करणवैयर्थ्य' ग. ३. 'वादिनः' क-ख.

---

१. 'करणवैयर्थ्य' ग. २. 'इति' क-ख.पुस्तकयोर्नास्ति. ३. 'असात' ग, ४. 'निराकुर्वत एव' ग. ५. 'परिपूरणाय स्वकण्ठे' ग. ६. यत्रार्थ इत्यारभ्य नीत्या इत्यन्तं क-ख-पुस्तकयोर्नास्ति.

च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां प्रसक्तम् । यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः स्वरूपमा[1]ख्यायते तत्तेऽपि युक्ताभिधायिन एव ।

इति [2]श्रीराजानकानन्दवर्धनाचार्यविरचिते [3]ध्वन्यालोके प्रथम उद्[4]द्योतः ।

---

कृतम् । द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं [1]सूचितवान् । तदाशयानुसारेण तु [2]वृत्तिकृदत्रैवोद्द्योते [3]मूलविभागमवोचत् 'स च द्विविधः' इति । **सर्वेषामिति** । लौकि[4]कानां शास्त्रीयाणां चेत्यर्थः । **अतिशयोक्त्येति** । तथा 'तान्यक्षराणि हृदये किमपि स्फुरन्ति' [5]इतिवदतिशयोक्त्यानाख्येयतोक्ता [6]सारभूततां प्रतिपादयितुमिति शिवम् ।

किं लोचनं विना लोको भाति चन्द्रिकयापि हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥
यदुन्मीलनश[7]क्त्यैव विश्वमुन्मीलति क्षणात् ।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ॥

इति श्रीमहामाहेश्वरा[8]चार्यवर्याभिनवगुप्तो[9]न्मीलिते सहृदयालोक( ध्वन्यालोक)-लोचने ध्वनिसंकेते प्रथम उद्द्योतः ।

---

१. 'अतिशयितं स्वरूपं' ग. २. 'श्रीमदानन्द' क-ख. ३. 'काव्यालोके' क, 'सहृदयालोकनाम्नि काव्यालंकारे' ग. ४. 'संकेतः' ख.

---

१. 'सूचितम्' क-ख. २. 'वृत्तिर्यदत्र' क-ख. ३. 'मूलभागं' ग. ४. 'लौकिकीयानां शब्दानां शास्त्रीयाणां' क-ख. ५. 'इत्यतिशयो' क.-ख. ६. 'साररूपतां' ग. ७. 'युक्त्यैव' क.ग. ८. 'चार्याभिनव' ग. ९. 'विरचिते काव्यालोकलोचने प्रथमः' ग.

द्वितीय उद्योतः ।

एवमविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वे ध्वनिर्द्विप्रकारः प्रकाशितः । तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥१॥'

---

या स्मर्यमाणा श्रेयांसि सूते ध्वंसयते रुजः ।
तामभीष्टफलोदारकल्पवल्लीं स्तुवे शिवाम् ॥

वृत्तिकारः संगतिमुद्योतस्य कुर्वाण उपक्रमते—**एवमित्यादि । प्रकाशित इति** । मया वृत्तिकारेण सतेति भावः । न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—**तत्रेति** । द्विप्रकारप्रकाशने वृत्तिकारकृते यन्निमित्तं बीजभूतमिति संबन्धः । यदिवा तत्रेति पूर्वशेषः । तत्रेति प्रथमोद्योते वृत्तिकारेण प्रकाशितो विवक्षितवाच्यस्य यः प्रभेदोऽवान्तरप्रकारस्तत्प्रतिपादनायेदमुच्यते । तदवान्तरभेदप्रतिपादनद्वारेणैव चानुवादद्वारेणाविवक्षितवाच्यस्य यः प्रभेदो विवक्षितान्यपरवाच्यात्प्रभिन्नत्वं तत्प्रतिपादनायेदमुच्यते । भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि संमतमेवेति भावः । संक्रमितमिति णिचा व्यञ्जनाव्यापारे यः सहकारिवर्गस्तस्यायं प्रभेद इत्युक्तम् । तिरस्कृतशब्देन च येन वाच्येनाविवक्षितेन सताविवक्षितवाच्यो ध्वनिर्व्यपदिश्यते तद्वाच्यं द्विधेति संबन्धः । योऽर्थ उपपद्यमानोऽपि तावतैवानुपयोगाद्धर्मान्तरसंवलनयान्यतामिव गतोऽपि लक्ष्यमाणोऽनुगतधर्मी सूत्रन्यायेनास्ते स रूपान्तरपरिणत उक्तः । यस्त्वनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृत इति । ननु व्यङ्ग्यात्मनो

---

१. 'अविवक्षितार्थ' क-ख.

---

१. 'एवमिति' ग. २. 'भेदः' क-ख. ३. 'संक्रमितेऽपि णिचा व्यञ्जनव्यापारो यः' क-ख. ४. 'प्रभावः' क-ख. ५. 'अविवक्षितवाच्येनावस्थितेन सता' ग. ६. 'अनुप्रयोगा' ग. ७. 'धर्मिसूत्र' क-ख.

तथाविधाभ्यां[1] च ताभ्यां व्यङ्ग्यस्यैव विशेष इति[2] व्यङ्ग्यप्रकाशनपरस्य ध्वनेरेवायं प्रकारः ।

तत्रार्थान्तरसंक्रमितवाच्यो यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।

---

यदा ध्वनेर्भेदो निरूप्यते तदा वाच्यस्य द्विधेति भेदकथनं[1] न संगतमित्याशङ्क्याह— **तथाविधाभ्यां चेति** । चो[2] यस्मादर्थे । व्यञ्जकवैचित्र्याद्वियुक्तं व्यङ्ग्यवैचित्र्यमिति भावः । व्यञ्जके त्वर्थे यदि ध्वनिशब्दस्तदा न कश्चिद्दोष इति भावः[3] । **तत्रार्थान्तरेति**[4] । अत्र श्लोके रामशब्दसंगतिः[5] । स्निग्धया जलसंबन्धसरसया श्यामलया द्रविडवनितोचितासितवर्णया कान्त्या[6] कालवर्णेन लिप्तमाच्छुरितं वियन्नभो[7] यैः । वेल्लन्त्यो विजृम्भमाणास्तथा चलन्त्यः परभागवशात्प्रहर्षवशाच्च[8] बलाकाः सितपक्षिविशेषा येषुं[9] त एवंविधा मेघाः । एवं नभस्तावद्दुरालोकं वर्तते । दिशोऽपि[10] दुःसहाः । यतः सूक्ष्मजलकणोद्गारिणो[11] वाता इति मन्दमन्दत्वमेषामनियतदिग्भागगमनं[12] च बहुवचनेन सूचितम् । तर्हि गुहासु क्वचित्प्रविश्यास्यतामित्यत आह—पयोदानां ये सुहृदस्तेषु च सत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो[13] मधुराः केकाः शब्दविशेषाः । ताश्च सर्वं पयोदवृत्तान्तं दुःसहं[14] स्मारयन्ति स्वयं च दुःसहा इति भावः । एवमुद्दीपनविभावोद्बोधितो विप्रलम्भः[15] । परस्पराधिष्ठानत्वाद्रतेः । विभावानां साधारणतामभिमान्य[16] इतः[17] एव प्रभृति

---

१. 'वाच्याभ्यां' क-ख. २. 'इति' क ख-पुस्तकयोर्नास्ति.

---

१. 'कथं' ग. २. 'च' क-ग. ३. 'भावः । भेदप्रतिपादकेने.........नाम्ना .........णमपि सिद्धमित्यभिप्रायेणोदाहरणमाह' ग. ४. 'अर्थान्तरसंक्रमितवाच्यो यथेति' ग. ५. 'शब्द इति' ग. ६. 'कान्त्या चाकचक्येनानुलिप्तं' ग. ७. 'वियत' क-ख.पुस्तकयोर्नास्ति. ८. 'पूर्णहर्ष' क-ख. ९. 'येषु सत्सु' ग. १०. 'अपि' क-खपुस्तकयोर्नास्ति. ११. 'जलोद्गारिणः' ग. १२. 'दिगागमं बहु' क-ख. १३. 'संवादिनो' क-ख. १४. 'दुःसहं' ग-पुस्तके नास्ति. १५. 'उद्बोधितविप्र' ग. १६. 'साधारण्यं' ग. १७. 'एव इतः' क-ख.

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

इत्यत्र रामशब्दः । अनेन हि व्यङ्ग्यधर्मान्तररूपपरिणतः संज्ञी प्रत्याय्यते, न [2]संज्ञामात्रम् ।

यथा च ममैव विषमबाणलीलायाम्—

---

प्रियतमां हृदये निधायैव स्वात्मवृत्तान्तं तावदाह—**कामं सन्त्विति** । दृढमिति सातिशयम् । **कठोरहृदय इति** । रामशब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदयपदम् । यथा 'तद्गेहं' इत्युक्ते[1]ऽपि 'नतभित्ति' इ[2]ति । अन्यथा रामपदं दशरथकुलोद्भवत्वकौसल्यास्नेहपात्रत्वबाल्यच[3]रितजानकीलाभादिधर्मान्तरपरिणतमर्थं कथं न[4] ध्वनेदिति । **अस्मीति** । स एवाहं भवामीत्यर्थः । भविष्यतीति क्रियासामान्यम् । तेन किं करिष्यतीत्यर्थः । अथ च भवनमेवास्या असंभाव्यमित्युक्तप्रकारेण हृदयनिहितां प्रियां स्मरणशब्दविकल्पपरम्परया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं ससंभ्रममाह—**हहा हेति** । **देवीति** । युक्तं तव धैर्यमित्यर्थः । **अनेनेति** । रामशब्देनानुपयुज्यमानेनार्थेनेति भावः । व्यङ्ग्यं ध[5]र्मान्तरप्रयोजनरूपं राज्यनिर्वासनाद्यसंख्येयम् । त[6]च्चासंख्यत्वादभिधाव्यापारेणाशक्यसमर्पणम् । क्रमेणार्प्यमाणमप्येकधीविषयभावाभावान्न चित्र[7]चर्वणापदमिति न चारुत्वातिशयकृत् । प्रतीयमानं तु तदसंख्यमनुद्भिन्नविशेषत्वेनैव किं किं रूपं न सहत इति चित्रपानकरसधूपर्गुडमोदकस्थानीयविचित्रचर्वणाप[8]दं भवति । यथोक्तम्—'उक्त्यन्तरेणाशक्यं यत्' इति । एष एव सर्वत्र प्रयोजनस्य प्रतीयमानत्वेनोत्कर्षहेतुर्मन्तव्यः । मात्रग्रहणेन संज्ञी नात्र तिरस्कृत इत्याह—**यथा चेत्यादि** । ताल[9]

---

१. 'इत्यत्रानेन रामशब्देन हि' क ख. २. 'संज्ञि' ग.

---

१. 'अपि' ग-पुस्तके नास्ति. २. 'इत्यादि' ग. ३. 'परिचित' ग. ४. 'न' ग-पुस्तके नास्ति. ५. 'धर्मान्तरं' क-ख. ६. 'अशक्यत्वात्' क-ख. ७. 'चित्रं' क-ख. ८. 'कुलकामोदस्थानीय' क-ख. ९. 'परं' ग.

'[1]ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति।
रइकिरणानुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥'

अत्र द्वितीयः कमलशब्दः।

अत्यन्ततिरस्कृतवाच्यो[2] यथादिकवेर्वाल्मीकेः—

'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इति[3]।

अत्रान्धशब्दः।

---

तदा। जाला यदा। घेप्पन्ति[1] गृह्यन्ते। अर्थान्तरन्यासमाह—**रइकिरणेति**। कमलशब्दो[2] लक्ष्मीपात्रत्वादिधर्मान्तरशतचित्रतापरिणतं संज्ञिनमाहेत्यर्थः। तेन शुद्धेऽर्थे[3] मुख्ये बाधा निमित्तं तत्रार्थे तद्धर्मिसमवायः। तेन निमित्तेन रामशब्दो धर्मान्तरपरिणतमर्थं लक्षयति। व्यङ्ग्यान्यसाधारणान्य[4]शब्दवाच्यानि धर्मान्तराणि। एवं कमलशब्दः[5]। गुणशब्दस्तु संज्ञिमात्रमाहेति। तत्र तद्बलात्कैश्चिदारोपितं तदप्रातीतिकम्। अनुपयोगबाधितो ह्यर्थोऽस्य ध्वनेर्विषयो लक्षणामूलस्य[6]। यत्तु हृदयदर्पण उक्तम्—'हहा हेति संरम्भार्थोऽयं चमत्कारः' इति। तत्रापि संरम्भ आवेगो विप्रलम्भव्यभिचारीति रसध्वनिस्तावदुपगतः। न च रामशब्दाभिव्यक्त्यार्थसाहायकेन विना संरम्भोल्लासोऽपि। अहं सहे तस्याः किं वर्तेत इत्येवमात्मा हि संरम्भः। कमलपदे[7] च कः संरम्भ इत्यास्तां तावत्। अनुपयोग्यात्मिका च मुख्यार्थबाधात्रास्तीति लक्षणामूलत्वादविवक्षितवाच्यभेदतास्योपपन्नैव[8]। शुद्धार्थस्याविवक्षणात्। न च तिरस्कृतत्वं शुद्धस्य[9]। तस्यापि तावत्यनुगमात्। अत एव च[10] परिणतवाचोयुक्त्या[11] व्यवहृतम्—**अत्यन्तेत्यादि**[12]। आदिकवेरिति ध्वनेर्लक्ष्यप्रसिद्धतामाह—**रवीति**[13]। हेमन्तवर्णने पञ्चवट्या रामस्योक्तिरियम्। अन्ध इति[14]

---

१. 'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' इति च्छाया.
२. 'वाच्यार्थो ध्वनिर्यथा' ग. ३. 'इति' क-ख पुस्तकयोर्नास्ति.

---

१. 'घेव्वन्ति' ग. २. 'शब्द इति' ग. ३. 'शुद्धोक्त' क-ख. ४. 'असाधारणान्य' ग. ५. 'शब्दे' क-ख. ६. 'लक्षणामूलं ह्यस्य' क-ख. ७. 'कमलशब्देन च' ग. ८. 'अविवक्षितत्वात्' ग. ९. 'धर्मिरूपेण' ग. १०. 'च' ग-पुस्तके नास्ति. ११. 'वचो' क-ख. १२. 'अत्यन्तेत्यादि' ग-पुस्तके नास्ति. १३. 'रविसंक्रान्त—श्लोकः' ग. १४. 'इत्युपसंहृत' क-ख.

'गँअणं च मत्तमेहं धाराललिअज्जुणाइँ अ वणाइँ ।[1]
णिरहंकारमिअङ्का हरन्ति नीलाओ[2] वि णिसाओ ॥'

अत्र मत्तनिरहंकारशब्दौ ।

---

चोपहतदृष्टिः । जात्यन्धस्यापि गर्भे दृष्ट्युपघातात्[1] । अन्धोऽयं पुरोऽपि न पश्यतीत्यतस्तत्र तिरस्कारोऽन्धार्थस्य[2] न त्वत्यन्तम् । इह त्वादर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमिति । अन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं[3] निसित्तीकृत्यादर्श[4]लक्षणया प्रतिपादयति । असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं[5] प्रयोजनं व्यनक्ति । भट्टनायकेन तु यदुक्तम्—'इवशब्दयोगाद्गौणताप्यत्र न काचित्' इति, तच्छ्लोकार्थमपरामृश्य । आदर्शचन्द्रमसोर्हि सादृश्यमिवशब्दो द्योतयति । निःश्वासान्ध इति चादर्शविशेषणम् । इवशब्दस्यान्धार्थत्वेन योजने आदर्शश्चन्द्रमा इत्युदाहरणं भवेत् । योजनं चैतदिवशब्दस्य क्लिष्टम् । न च निःश्वासेनान्ध इवादर्शः स इव चन्द्र इति कल्पना युक्ता । जैमिनीयसूत्रे[6] ह्येवं योज्यते न काव्येऽपीत्यलम् । गँअणमिति । '[ गगनं च मत्तमेघं धाराललितार्जुनानि च वनानि । निरहंकारमृगाङ्का हरन्ति नीला अपि निशाः ॥' इति च्छाया । ] चशब्दोऽपिशब्दार्थे । गगनमपि मत्तमेघमपि न केवलं तारकितम्[7] । धाराललितार्जुनवृक्षाण्यपि वनानि न केवलं[8] मलयमारुतान्दोलितसहकाराणि । निरहंकारमृगाङ्का नीला अपि निशा न केवलं सितकरकरधवलिता[9] हरन्ति । उत्सुकयन्तीत्यर्थः । मत्तशब्देन सर्वथैवेहा[10]संभवत्स्वार्थेन बाधितमद्योपयोगक्षीबात्मक[11]मुख्यार्थेन सदृशान्मेघांल्लक्षयतासमञ्जसकारित्वदुर्निवारत्वादिधर्मसहस्रं ध्वन्यते । निरहंकारशब्देनापि चन्द्रं लक्षयता तत्पारतन्त्र्यविच्छायत्वानुजिगमिषारूपजिगीषा[12]त्यागप्रभृतिर्ध्वन्यते[13] । अविवक्षितवाच्यस्य प्रभिन्नत्वमिति यदुक्तं तत्कुतो[14] भवतीत्याशङ्क्य विवक्षितवाच्यादेवास्य भेदो भवति । विवक्षा तदभावयोर्विरोधादित्यभिप्राये-

---

१. 'यथा च श्लोकः गअणं च' ग. २. 'लीलाइ वि' क-ख.

---

१. 'दृष्टेरुपघातात्' क. २. 'अन्वर्थस्य' क-ख. ३. 'न दृष्टदृष्टिगतत्वं' क-ख. ४. 'आदर्शत्वं' क-ख. ५. 'धर्मान्तमसंख्यं' ग. ६. 'सूत्रं—काव्यमित्यलं' ग. ७. 'यथाचेति' ग. ८. 'केवलमन्दमारुता' ग. ९. 'सितकिरणधवलिता' ग. १०. 'सर्वथैव' ग-पुस्तके नास्ति. ११. 'क्षेमात्मक' क-ख. १२. 'विच्छायत्वोज्जिगमिषा' क-ख. १३. 'ध्वन्यते' ग-पुस्तके नास्ति. १४. 'कृतो नहि स्वरूपादेव भेदो भविष्यति—' क-ख.

'असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २ ॥'

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा । स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया [1]तुल्यं प्रकाशते, कश्चित्क्रमेणेति द्विधा मतः ।

तत्र

'रसभावतदाभासतत्प्रशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ३ ॥'

---

णाह—**असंलक्ष्येति** । सम्यङ् न लक्षयितुं शक्यः क्रमो यस्य तादृश [1]उद्द्योत उद्द्योतनव्यापारोऽस्येति [2]बहुव्रीहिगर्भो बहुव्रीहिः । ध्वनिशब्दसांनिध्याद्विवक्षिताभिधेयत्वेना[3]न्यपरत्वमत्राक्षिप्तमिति स्वकण्ठेनोक्तम् । **ध्वनेरिति** । व्यङ्ग्यस्येत्यर्थः । **आत्मेति** । पूर्वश्लोकेन व्यङ्ग्यस्य वाच्यमुखेन भेद उक्तः । इदानीं तु द्योतनव्यापार[4]मुखेन द्योत्यस्य [5]स्वार्थनिष्ठ एवेत्यर्थः । व्यङ्ग्यस्य [6]ध्वनेर्द्योतने स्वात्मनि कः क्रम इत्याशङ्क्याह—**वाच्यार्थापेक्षयेति** । वाच्योऽर्थो विभावादिः । **तत्रेति** । [7]तयोर्मध्यादित्यर्थः । यो रसादिरर्थः स एव [8]क्रमो ध्वनेरात्मा न त्वक्रम [9]एव सः । अक्रमत्वमपि हि तस्य कदाचिद्भवति । [10]तदा चार्थशक्त्युद्भवानुस्वा[11]नरूपभेदेनेति वक्ष्यते । आत्मशब्दः स्वभाववचनः प्रकारमाह । तेन [12]रसादिर्योऽर्थः स ध्वनेरक्रमो नामभेदः । असंलक्ष्यक्रम इति यावत् । [13]ननु किं [14]सर्वदैव रसादिरर्थो ध्वनेः प्रकारः । नेत्याह—[15]**भासमान इति** । किं तु [16]यदाङ्गित्वेन प्रधानत्वेनावभासमानः । एतच्च सामान्यलक्षणे [17]गुणीकृतस्वार्थावित्यत्र यद्यपि निरूपितम्, तथापि [18]रसवदाद्यलंकारप्रकाशनाव-

---

१. 'तुल्यं' ग-पुस्तके नास्ति.

---

१. 'उद्द्योत' इति क-ख-पुस्तकयोर्नास्ति. २. 'बहुव्रीहिगर्भो' इति क-ख-पुस्तकयोर्नास्ति. ३. 'परमप्याक्षिप्तं' क-ख. ४. 'भेदेन' क-ख. ५. 'स्वात्मनिष्ठ' क-ख. ६. 'ध्वनेर्द्योतने' क-ख-पुस्तकयोर्नास्ति. ७. 'मध्यं' ग. ८. 'अक्रमो' ग. ९. 'एव सक्रमत्वमपि' क-ख. १०. 'तथा' ग. ११. 'भेदत्वेति' क-ख. १२. 'रसादिभ्योऽर्थः' क-ख. १३. 'ननु' ग. पुस्तके नास्ति. १४. 'सदैव' ग. १५. 'भासमान इति' ग-पुस्तके नास्ति. १६. '[illegible]' क-ख. १७. 'गुणीभूत' क-ख. १८. 'रसवदाद्यलंकारतत्त्वप्रकटनायावकाशदानायानूदितम्' क-ख.

काशदानायोदितम् । स च रसादिध्वनिर्व्यवस्थित एव । नहि तच्छून्यं काव्यं[1] किंचिदस्ति । यद्यपि च[2] रसेनैव सर्वं जीवति काव्यम्, तथापि तस्य रसस्यैकघनचमत्कारात्मनोऽपि कुतश्चिदंशात्प्रयोजकीभूतादधिकोऽसौ चमत्कारोऽपि[3] भवति । तत्र यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो[4] व्यभिचारी चमत्कारातिशयप्रयोजको भवति तदा भावध्वनिः । यथा—'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः । तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं सा चात्यन्तमगोचरं[5] नयनयोर्यातेति कोऽयं विधिः ॥' अत्र हि विप्रलम्भरससद्भावेऽपीयति[6] वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः । व्यभिचारिण उदयस्थितिलयपायत्रिधर्मकाः । यदाह—'विविधमाभिमुख्येन चरन्तीति व्यभिचारिणः' इति[7] । तत्रोदयावस्थाप्रयुक्तः कदाचित्, यथा—'याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया[8] निर्यातं[9] परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम् । भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया[10] तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः ॥' अत्र हि प्रणयकोपस्यैवोज्जिगमिषयैव यदवस्थानं न तु पारित इत्युदयावकाशनिराकरणात्तदेवास्वादजीवितम्[11] । स्थितिः पुनरुदाहृता 'तिष्ठेत्कोपवशात्—'इत्यादिना । क्वचित्तु व्यभिचारिणः प्रशमावस्थया प्रयुक्तश्चमत्कारः । यथोदाहृतं प्राक् 'एकस्मिञ्शयने पराङ्मुखतया—' इति । अयं[12] तत्प्रशम इत्युक्तः । अत्र चेर्ष्याविप्रलम्भस्य रसस्यापि प्रशम इति शक्यं योजयितुम् । क्वचित्तु[13] व्यभिचारिणः संधिरेव चर्वणास्पदम् । यथा—'ईसंसु[14] केसुम्भिआए मह चुम्बिउ जेण । असिअरसो घोण्टाण पडिजाणिउ तेण ॥ (?) त्यक्ते[15] तु कोपे कोपकषायगद्गदमन्दरुदिताया येन मुखं चुम्बितं तेनामृतरसनिगरणविश्रान्तिपरम्पराणां[16] तृप्तिर्ज्ञातेति[17] कोपप्रसादसंधिश्चमत्कारस्थानम् । क्वचिद्व्यभिचार्यन्तरशबलतैव विश्रान्तिपदम् । यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां

१. 'काव्यं' क-ख-पुस्तकयोर्नास्ति. २. 'च' ग-पुस्तके नास्ति. ३. 'अपि' ग-पुस्तके नास्ति. ४. 'अप्रतिपन्नो' ग. ५. 'अदर्शनं' ग. ६. 'रस' क-ख-पुस्तकयोर्नास्ति. ७. 'इति' क-ख-पुस्तकयोर्नास्ति. ८. 'अनुप्राप्तयोर्निर्वातं' ग. ९. 'निर्ध्यातं' क. १०. 'शिथिलं' ग. ११. 'आह्लाद' ग. १२. 'योऽयं' ग. १३. 'तु' क-ख-पुस्तकयोर्नास्ति. १४. 'सुरसुंभिआइ सहु चुंबिते जेण अपहु भव्वोट्ट डाइजतजाणित्ते तेन' क-ख. १५. 'त्यक्तेऽपि कोपकषाय' क-ख. १६. 'तेनामृतस्य रसविश्रान्तिनिगरणपरम्पराणां' क-ख. १७. 'जातेति' ग.

प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं सुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥' अत्र हि वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये [1]स्मृतिचिन्तने परस्परं बाध्यबाधकभावेन द्वन्द्वशो [2]भवन्ती पर्यन्ते तु चिन्ताया एव प्रधानतां ददती परमा[3]स्वादस्थानम् । एवमन्यदप्यु[4]त्प्रेक्ष्यम् । एतानि चोदयसंधिशबलत्वादिकानि कारिकायामादिग्रहणेन गृहीतानि । नन्वेवं विभावानुभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति विभावध्वनिरनुभावध्वनिश्च वक्तव्यः । [5]मैवम् । विभावानुभावौ तावत्स्वशब्दवाच्यावेव । तच्चर्वणापि चित्तवृत्तिष्वेव पर्यवस्यतीति रसभावेभ्यो [7]नाधिकं चर्वणीयम् । [6]यदि तु विभावानुभावाव[8]पि व्यङ्ग्यौ भवतस्तदा वस्तुध्वनिरपि किं न सह्यते । यदा तु वि[9]भावानुभावाभासाद्रत्याभासोदयस्तदा विभावानुभावाभासै[10]श्चर्वणाभास इति रसाभासस्य विषयः । यथा रावणकाव्याकर्णने शृङ्गाराभासः । यद्यपि 'शृङ्गारानुवृत्तिर्या तु स हासः' इति मुनिना निरूपितं तथाप्यौत्तरकालिकं त[11]त्र हास्यरसत्वम् । 'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना ।' इत्यत्र तु न हास्यचर्वणावसरः । ननु नात्र रतिः स्थायिभावोऽस्ति । प[12]रस्परावस्थाबन्धाभावात् केनैतदुक्तं रतिरिति । रत्याभासो हि सः । अतश्चाभा[13]सो येनास्य सीता मय्य[14]युपेक्षिका द्विष्टा वेति प्रतिपत्तिर्हृद[15]यं न स्पृशत्येव । [16]तत्स्पर्शे हि तस्याप्यभिलाषो विलीयेत[17] । न च मयीयमनुरक्तेत्यपि निश्चयेन कृतं कामकृतान्मोहात् । अत एव तदाभासत्वम् । वस्तुतस्तन्न स्थाप्यते । शुक्तौ रजताभासवत् । ए[18]तच्च शृङ्गारा[19]नुकृतिं प्रयुञ्जानो मुनिरपि सूचितवान् । अनुकृतिरमुख्यता आभास इति ह्येकोऽर्थः । अत एवाभिलाषे एकतरनिष्ठेऽपि शृङ्गारशब्देन त[20]त्र तत्र व्यवहारस्तदाभासतया म[21]न्तव्यः । शृङ्गारेण वीरादीना[22]मप्याभास-

१. 'वृत्तचिन्तने' क-ख. २. 'भवन्ति तत्पर्यन्ते—ददति' ग. ३. 'आह्लाद' ग. ४. 'अपि' क-ख-पुस्तकयोर्नास्ति. ५. 'न' ग-पुस्तके नास्ति. ६. 'यदा' ग. ७. 'एव' ग. ८. 'अपि' ग-पुस्तके नास्ति. ९. 'विभावाभासरत्याभासादयः' ग. १०. 'भासाश्चर्वं' क-ग. ११. 'तु' क-ख. १२. 'परास्परावस्थाबाधाभावात्' क-ख. १३. 'आभासतः' ग. १४. 'उपेक्षिता' ग. १५. 'न हृदयं न च' क-ख. १६. 'तत्स्वक्षोभितस्यापि' ग. १७. 'लीयेत' क-ख. १८. 'अतश्च' क-ख. १९. 'नुकृतिर्यथाशब्दं प्रयुञ्जानो' ग. २०. 'एकवारमेव तत्रेति' क-ख-पुस्तकयोः २१. 'मन्तव्यम्' ग. २२. 'अपि' क-ख-पुस्तकयोर्नास्ति.

रसादिरर्थो हि सहैव वाच्येनावभासते । स चाङ्गित्वेनावभासमानो ध्वनेरात्मा ।

इदानीं रसवदलंकारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति प्रदर्श्यते—

---

रूपतोपलक्षितैव । एवं रसध्वनेरेकस्यैवामी भावध्वनिप्रभृतयो निःस्यन्दा आस्वादे प्रयोजनम् । प्रयोजकमेवमेव भावादिकमंशं विभज्य पृथग्व्यङ्ग्यं स्थाप्यते । यथा गन्धयुक्तिज्ञैरेकसंमूर्च्छितामोदोपभोगेऽपि शुद्धमांस्यादिप्रयुक्तमिदं सौरभमिति । रसध्वनिस्तु स एव योऽत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवास्वादप्रकर्षः । यथा—'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःस्पन्दतामागता । मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥' अत्र हि नायिकानुवर्ण्यमानस्वात्मप्रकृतिपविचित्रितचित्रफलकावलोकनाद्वत्सराजस्य परस्परावस्थाबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनवशेन चर्वणारूढ इति । तदलं बहुना । स्थितमेतत्—'रसादिरर्थोऽङ्गित्वेन भासमानोऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकार' इति । **सहैवेति** । इवशब्देन संलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याता । **वाच्येनेति** । विभावानुभावादिना । नन्वङ्गित्वेनावभासमान इत्युच्यते तत्राङ्गत्वमपि किमस्ति रसादेर्येन तन्निराकरणायैतद्विशेषणमित्यभिप्रायेणोपक्रमते—**इदानीमित्यादिना** । अङ्गत्वमस्ति रसादीनां रसवत्प्रेयऊर्जस्विसमाहितालंकाररूपतायामिति भावः । अनया च भङ्ग्या

---

१. 'अव' क-ख-पुस्तकयोर्नास्ति. २. 'अलंकारादौ' क-ख.

---

१. 'एकस्य' क-ख. पुस्तकयोर्नास्ति. २. 'निःष्यन्द आस्वादे प्रधानम्' क-ख. ३. 'पृथग्व्यवस्थाप्यते' क-ख. ४. 'भोगोपरि' क-ख. ५. 'यत्र' क-ख. ६. 'कृच्छ्रात्' ग. ७. 'नायिकाकारानु' क-ख. ८. 'आदिना' ग-पुस्तके नास्ति. ९. 'अपि' क-ख. १०. 'प्रेयस्व्यूर्जस्वि' क-ख. ११. 'च' क-ख-पुस्तकयोर्नास्ति.

'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः॥ ४॥'

रसवदादिष्वलंकारेषु रसादिध्वनेर्नान्तर्भाव इति सूचयति[1]—**वाच्येति**। पूर्वं हि सामसोक्त्यादिषु वस्तुध्वनेर्नान्तर्भाव इति दर्शितम्। वाच्यं च वाचकं च तच्चारुत्वहेतवश्चेति द्वन्द्वः। वृत्तावपि शब्दाश्चार्थाश्चालंकाराश्चेति द्वन्द्वः[2]। **मत इति**। पूर्वमेवैतदुक्तमित्यर्थः। ननूक्तं भट्टनायकेन—"रसो यदा परगततया प्रतीयते[3]र्हि ताटस्थ्यमेव स्यात। न च स्वगतत्वेन रामादिचरितमयात्काव्यादसौ प्रतीयते। स्वात्मगतत्वेन च प्रतीतौ स्वात्मनि[4]रसस्योत्पत्तिरेवाभ्युपगता स्यात्। सा चायुक्ता। सामाजिकं प्रत्यविभावत्वात्। कान्तात्वं साधारणं वासनाविकासहेतुर्विभावनायां प्रयोजकमिति चेत्, देवतावर्णनादौ तदपि कथम्। न च स्वकान्तास्मरणं मध्ये संवेद्यते। अलोकसामान्यानां च रामादीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयुः। न चोत्[5]साहादिमात्रं स्मर्यते। अननु[6]रूपत्वात्। शब्दादपि तत्प्रतिपत्तौ न[7] रसोपजनः। प्रत्यक्षादिव नायकमिथुनप्रतिपत्तौ। उत्पत्तिपक्षे च करुणस्योत्पादा[8]द्दुःखित्वे करुणप्रेक्षासु पुनरप्रवृत्तिः स्यात्। त[9]न्न। उत्पत्तिरपि नाप्यभिव्यक्तिः। शक्तिरूपस्य हि शृङ्गारस्याभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि[10] किं स्वगतोऽभिव्यज्यते प[11]रगतो वेति पूर्ववदेव दोषः। तेन न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः। किं त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य। त्र्यंशताप्रसादात्। तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं र[12]सादिविषयम्, भोक्तृत्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः। तत्राभिधाभागो [13]यदि शुद्धः स्या[14]त्तन्त्रादिभ्यः शास्त्रन्यायेभ्यः श्ले[15]षाद्यलंकाराणां [16]को भेदः।

१. 'सूचयति' इत्यारभ्य 'नान्तर्भाव इति' इतिपर्यन्तं क-ख-पुस्तकयोर्नास्ति. २. 'द्वन्द्वः' क-ख-पुस्तकयोर्नास्ति. ३. 'तत्' ग. ४. 'रसस्यैव' क-ख. ५. 'उत्साहादिमान् रामः' क-ख. ६. 'भूतत्वात्' क-ख. ७. 'न' क-ख-पुस्तकयोर्नास्ति. ८. 'अदुःखित्वे' ग. ९. 'तन्न' इत्यारभ्य 'स्यात्' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. १०. 'च किं न स्वागतो व्यज्यते' क-ख. ११. 'परगतो' इत्यारभ्य 'नाभिव्यज्यते' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. १२. 'रसविषयम्' ग. १३. 'ऽयमशुद्धः' ग. १४. 'तत्' ग-पुस्तके नास्ति. १५. 'श्लेषालंकाराणां' ग. १६. 'एको भेदः' ग.

वृत्तिभेदवैचित्र्यं चाकिंचित्करम्[1] । श्रुतिदुष्टादिवर्जनं च किमर्थम् । तेन रसभावनाख्यो द्वितीयो व्यापारः । यद्वशादभिधापि लक्षणैव । तच्चैतद्भावकत्वं नाम यत्[2]काव्यस्य तद्विभावादीनां साधारणत्वापादनं[3] नाम । भाविते च रसे तस्य भोगः । योऽनुभव[4]स्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुति[5]विस्तरविकासनामा रजस्तमोवैचित्र्यानुविद्ध[6]सत्त्वमयनिजचित्स्वभावनिवृत्तिद्रुति[7]विश्रान्तिलक्षणः परब्रह्मास्वादसचिवः[8] । स एव च प्रधानभूतोऽंशः[9] सिद्धिरूप इति । व्युत्पत्तिर्नामाप्रधानमेवेति ।"

अत्रोच्यते—रसस्वरूप एव तावद्विप्रतिपत्तयः प्रतिवादिनाम् । तथाहि पूर्वावस्थायां यः स्थायी स एव व्यभिचारिसंपातादिना प्राप्तपरिपोषोऽनुकार्यगत एव रसः । नाट्ये तु[10] प्रयुज्यमानत्वान्नाट्यरस इति केचित् । प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेर्वृत्त्यन्तरेण[11] कः परिपोषार्थः । विस्मयशोकक्रोधादेश्च क्रमेण तावन्न परिपोष इति नानुकार्ये रसः । नानु[12]कर्तरि च तद्भावेन[13] लयाद्यनुकरणं स्यात् । सामाजिकगते वा कश्चमत्कारः । प्रत्युत करुणादौ दुःखप्राप्तिः । तस्मान्नायं पक्षः । कस्तर्हि । इहानन्त्यान्नियतस्यानुकारो न शक्यः, निष्प्रयोजनश्च विशिष्टताप्रतीतौ । ताटस्थ्येन व्युत्पत्त्यभावात् । तस्मा[14]दनियतावस्थात्मकं स्थायिनमुद्दिश्य विभावानुभावव्यभिचारिभिः संयुज्यमानै[15]रयं रामः सुखीति स्मृतिविलक्षणा स्थायिनि प्रतीतिगोचरतयास्वादरूपा[16] प्रतिपत्तिरनुकर्त्रालम्बना[17] नाट्यैकगामिनी रसः । स च न[18] व्यतिरिक्त[19]माधारमपेक्षते । किं त्वनुकार्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिक इत्येतावन्मात्र[20]मदः । तेन नाट्य एव रसः[21], नानुकार्यादिष्विति केचित्[22] । अन्ये तु—अनुकर्तरि यः स्थाय्यवभासोऽभिनयादिसामग्र्यादिकृतो भित्तावि[23]व हरितालादिना स्वावभासः स एव लोकातीततयास्वादापरसंज्ञया प्रतीत्या रस्यमानो रस इति नाट्याद्रसा नाट्यरसाः ।

---

१. 'चापि किंचित्' क-ख. २. 'यः' क-ख. ३. 'पादनान्नाम' ग. ४. 'अनुभाव' क-ख. ५. 'दूती' ग. ६. 'विशुद्ध' ग. ७. 'द्रुति' क-ख-पुस्तकयोर्नास्ति. ८. 'सविधः' क-ख. ९. 'प्रधानरूपोऽशेषसिद्ध' ग. १०. 'तु' क-ख-पुस्तकयोर्नास्ति. ११. 'चित्तवृत्त्यन्तरेण' ख. १२. 'न' क-ख-पुस्तकयोर्नास्ति. १३. 'भावे लयाद्यनुसरणं' क-ख. १४. 'तस्मान्नियतात्मकं' ग. १५. 'मानोऽयं रसः' क, 'मानोऽयं रामः' ख. १६. 'रूपप्रति' क-ख. १७. 'लम्बनानाट्यैक' क., 'लम्बनाद्यैक' ग. १८. 'न' ग-पुस्तके नास्ति. १९. 'रिक्तसाधारणमपे' क-ख. २०. 'मात्रभेदः' ख. २१. 'रसाः' ग. २२. 'केचित्' क-ख-पुस्तकयोर्नास्ति. २३. 'भिन्नव्यवहारतालादिना' क-ख.

अपरे पुन[1]र्विभावमनुभावमेव विशिष्टसामग्र्या समर्प्यमाणं तद्विभावनीयानुभावनीयस्थायिरूपचित्तवृ[2]त्त्युपचितवासनानु[3]षक्तं स्वनिर्वृतिचर्व[4]णाविशिष्टमेव रसः । त[5]न्नाट्यमेव रसाः । अन्ये तु शुद्धं विभावम्, अ[6]परे शुद्धमनुभावम्, केचि[7]त्तु स्थायिमात्रम्, इतरे [8]व्यभिचारिणम्, अन्ये त[9]त्संयोगम्, एकेऽनुकार्यम्, केचि[10]त् सकलमेव समुदायं रसमाहुरित्यलं बहुना । काव्येऽपि च लोकनाट्य[11]धर्मिस्थानीये स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव र[12]सवार्ता । अस्तु वा नाट्याद्विचि[13]त्ररूपा रसप्रतीतिः । उपायवैलक्षण्यादियमेव तावदत्र सरणिः । एवं स्थिते प्रथमपक्ष एवैतानि दूषणानि । प्रतीतेः स्वपर[14]गतत्वादिविकल्पने [15]सर्वपक्षेषु प्रतीतिरपरिहार्या । रसस्य [16]प्रतीतं हि पिशाचवदव्यवहार्यं स्या[17]त् । किं तु य[18]था प्रतीतिमात्रत्वेनाविष्टत्वेऽपि प्रा[19]त्यक्षिकी आनुमानिकी आ[20]गमोत्था प्रतिभानकृता योगिप्र[21]त्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव तद्वदियमपि प्रतीतिश्चर्वणास्वादनभोगापरनाम भ[22]वतु । तन्निदानभूताया हृ[23]दयसंवादाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वाद्रसाः प्रतीयन्त इति । ओदनं पचतीतिवद्व्यवहारः । प्रतीयमान एव हि र[24]सः । प्रतीतिरेव विशिष्टा रसना । सा च नाट्ये लौकिकानुमानप्रतीतेर्वि[25]लक्षणतां प्र[26]मुखे उपायतया संदधाना । एवं काव्ये शा[27]ब्दप्रतीतेश्च विलक्षणतां प्रमुखतामुपेक्ष्यमाणा । तस्मा[28]दनुत्थानोपहतः पूर्वपक्षः । रा[29]मादिचरितं तु न सर्वस्य हृदयसंवादीति महत्साहसम् । चित्र[30]वासनाविशिष्टत्वाच्चेतसः । यदाह—

---

१. 'तुपुन' ग. २. 'वृत्त्युचित' क-ख. ३. 'सक्तं' क-ख. ४. 'चर्वणाविष्टं' क-ख. ५. 'तन्नाट्यमेव रसाः' क-ख-पुस्तकयोर्नास्ति. ६. 'अपरे तु' ग. ७ 'केचित्स्थायि' क-ख. ८. 'व्यभिचारिणः' ग. ९. 'तत्त्वसंयोगं' ग. १०. 'केचित्' ग. ११. 'धर्मे स्थानीयेन' क-ख. १२. 'रसवार्तास्तु । तत्र' क-ख. १३. 'विरचितरूपा' ग. १४. 'गतादि' क-ख. १५. 'न सर्वपक्षेषु च' क-ख. १६. 'अप्रतीतं' क-ख. १७. 'स्यात्' क-ख-पुस्तकयोर्नास्ति. १८. 'यया' ख. १९. 'प्रात्यक्षी' क-ख. २०. 'आगमोर्था' क-ग. २१. 'प्रत्यक्षजाता प्रतीति' क-ख. २२. 'भवतु' ग-पुस्तके नास्ति. २३. 'सहृदय' क-ख. २४. 'रसप्रतीतिरेव' क-ख. २५. 'विलक्षणा तां च मुखे' ग. २६. 'प्रमुखे' ख. २७. 'शब्दप्रतीतेर्विलक्षणा तां च प्रमुखतां' ग. २८. 'अनुमानोपहतः पूर्वः' ग. २९. 'रसादि' ग. ३०. 'च्चिद्वासना' ग.

'तासामनादित्वं [1]चात्मनो नित्यत्वात् । जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्' इति । तेन प्रतीतिस्तावद्रसस्य सिद्धा । सा च रसनारूपा प्रतीतिरुत्पद्यते । वाच्यवाचकयोस्तत्राभिधादिविविक्तो व्यञ्जनात्मा ध्वननव्यापार एव । भोगीकरणव्यापारश्च [2]काव्यात्मकरसविषयो ध्वननात्मैव । नान्यत्किंचित् । भावकत्वमपि समुचितगुणालंकारपरि[3]ग्रहात्मकमस्माभिरेव वितत्य वक्ष्यते । किमे[4]वमपूर्वं काव्यं च रसान्प्रति [5]भावकत्वमिति यदुच्यते तत्र भवत [6]इति भावनादुत्पत्तिपक्ष एव प्रत्युज्जीवितः । न च काव्यश[7]ब्दानां केवलानां भावकत्वम् । अर्थापरिज्ञाने तदभावात् । न च केवलाना[8]मर्थानाम् । शब्दान्तरेणार्प्यमाणत्वे तदयोगात् । द्वयोस्तु [9]भावकत्वमस्माभिरेवोक्तम् 'यत्रार्थः शब्दो वा तमर्थं—व्यङ्क्तः' इत्यत्र । तस्माद्व्यञ्जकत्वाख्येन [10]व्यापारेण गुणालंकारौचित्यादिकयेतिकर्तव्यतया काव्यं [11]भावकं रसान्भावयति । इति त्र्यंशायामपि भावनायां [12]कारणांशे ध्वननमेव निपतति । भोगोऽपि न काव्यशब्देन क्रि[13]यते अपि तु घनमोहान्ध्यसं[14]कटनादिनिवृत्तिप्रवृत्तिद्वारेणास्वादापरनाम्नि । अलौकिके [15]द्रुतविकासात्मनि भोगे कर्तव्ये लोकोत्तरो ध्वननव्यापार एव मूर्धाभिषिक्तः । तच्चेदं भोग[16]कृत्त्वं रसस्य ध्वननीयत्वे [17]सिद्धे सिद्ध्येत् । रस्यमानोदितचमत्कारानतिरिक्तत्वाद्भोगस्येति । सत्त्वादीनां [18]चा[19]ङ्गाङ्गिभाववैचित्र्यस्यानन्त्याद्द्रुत्यादित्वेनास्वादगणना [20]न युक्ता । परब्रह्मास्वादस[21]ब्रह्मचारित्वं वास्त्वस्य रसास्वादस्य । व्युत्पादनं च [22]शासनप्रतिपादनाभ्यां शास्त्रेतिहासकृताभ्यां विलक्षणम् । यथा रामस्तथाहमित्युपमानातिरिक्तां रसास्वादोपायस्वप्रतिभाविजृम्भणारूपां व्युत्पत्तिमन्ते करोतीति कमुपालभामहे । तस्मात्स्थितमेतत्—अभिव्यज्यन्ते रसाः प्रतीत्यैव च रस्यन्त इति । तत्राभिव्यक्तिप्रधानतया [23]भवतु, अप्रधानतया वा ।

---

१. 'चाविशेषो' क-ख. २. 'काव्यस्य रस' क-ख. ३. 'ग्रहणात्मक' ग. ४. 'किमेतदपूर्वं' क-ख. ५. 'भावकं' क-ख. ६. 'एव' ग. ७. 'शब्दान्तानां' क-ख. ८. 'अर्थानामर्थान्तरेण' क-ख. ९. 'भावकत्वाद्' ग. १०. 'व्यापारेणौचित्यादिकतयेति' ग. ११. 'भावुकं' क-ख. १२. 'करणांशेन' क-ख. १३. 'क्रियत इति घन' क-ख. १४. 'संघटनावृत्तिद्वारेण' क-ख. १५. 'दूत' क., 'इति' ग. १६. 'भोगकृतं क., 'भोगकत्वं' ग. १७. 'सिद्धे मखदन्तवदसिद्धम्' ग. १८. 'वा' ख. १९. 'अङ्गाङ्गितावैचित्र्य' ग. २०. 'न' क-ख-पुस्तकयोर्नास्ति. २१. 'चारित्वं चास्वादस्य रसा' ग. २२. 'शास[illegible]' ग. २३. 'सा भवति' क-ख.

रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दा[1]र्थालंकारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः ।

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ ५ ॥'

यद्यपि रसवदलंकारस्या[2]न्यैर्दर्शितो विषयस्तथापि यस्मिन्काव्ये प्रधानतयान्योऽर्थो वाक्यार्थीभूतस्तस्य चाङ्गभूता ये[3] रसादयस्ते रसादेरलंकारस्य वि[4]षय इति मा[5]मकीनः पक्षः । तद्यथा चाटुषु प्रेयोलंकारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते ।

---

प्रधानत्वे ध्वनिः अन्यथा रसाद्यलंकाराः । तदाह—**र[1]सभावेत्यादि । व्यवस्थिता इति** । पूर्वोक्तयुक्तिभिर्विभागेन व्यवस्थापितत्वादिति भावः । **अन्यत्रेति** । रसस्वरूपे वस्तुमात्रेऽलंकारतायोग्ये वा । **मे मतिरिति** । अन्यपक्षं दूष्यत्वेन हृदि निधायाभीष्टत्वात्स्वपक्षं पूर्वं दर्शयति वृ[2]त्तिकारः—**य[3]द्यपीत्यादि** । स हि परदर्शितो विषयो भाविनीत्या नोपपन्न इति भावः । यस्मिन्काव्ये इ[4]ति स्पष्टत्वेनासं[5]गतं वाक्यमित्थं योजनीयम्—यस्मिन्काव्ये ते पूर्वोक्ता रसादयोऽङ्[6]गभूता वाक्यार्थीभूतश्चान्यः। चशब्दस्तुशब्दस्यार्थे । तस्य काव्यस्य संबन्धिनो ये रसादयोऽङ्गभूतास्[7]ते रसादेरलंकारस्य रसवदाद्यलंकारशब्दस्य विषयाः । स एवालंकारशब्दवाच्यो भवति योऽङ्गभूतः, न त्वन्य इति यावत् । अत्रोदाहरणमाह—**तद्यथेति** । तदित्यङ्गत्वम । यथा वक्ष्यमाणोदाहरणे तथान्यत्रापीत्यर्थः । भामहाभिप्रायेण तु[8] चाटुषु प्रेयोलंकारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्त इतीदमेकं वाक्यम् । भाम-

---

१. 'शब्दालंकारा अर्थालंकारा गुणाश्च' क-ख. २. 'अन्यैः' ग-पुस्तके नास्ति. ३. 'ये' ग-पुस्तके नास्ति. ४. 'विषयाः' ग. ५. 'मामकः' ग.

---

१. 'मुख्यमर्थमिति' ग. २. 'वृत्तिकारः' ग-पुस्तके नास्ति. ३. 'तथापीति' ग. ४. 'इति' क-ख-पुस्तकयोर्नास्ति. ५. 'संगतं' ग. ६. 'अधिभूता' ग. ७. 'ते—ऽङ्गभूतः' क-ख-पुस्तकयोर्नास्ति. ८. 'तु' क-ख-पुस्तकयोर्नास्ति.

स च रसादिरलंकारः शुद्धः संकीर्णो वा । तत्राद्यो यथा—

'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः ।

---

हेन हि गुरुदेवनृ[1]पतिपुत्रविषयप्रीतिवर्णनं प्रेयोलंकार इत्युक्तम् । तत्र प्रेयानलंकारो यत्र स प्रेयोलंकारोऽप्यु[2]क्तोऽलंकरणीय इहोक्तः । त[3]त्र न त्व[4]लंकारस्य वाक्यार्थत्वमुक्तम् । यदिवा वाक्यार्थत्वं प्रधानत्वम् । चमत्कारकारितेति यावत् । उ[5]द्भटमतानुसारिणस्तु भ[6]ङ्क्त्वा व्याचक्षते । चाटुषु चाटुविषये वाक्यार्थत्वे चा[7]टूनां वाक्यार्थत्वे प्रेयोलंकारस्यापि विषय इति पूर्वेण संबन्धः । उद्भटमते हि भावालंकार एव प्रे[8]य इत्युक्तः । प्रेम्णा भावाना[9]मुपलक्षणात् । न केवलं रसवदलंकारस्य विषयः यावत्प्रे[10]यःप्रभृतेरपीत्यपिशब्दार्थः । रसवच्छब्देन प्रेयःशब्देन च सर्व एव र[11]सवदलंकार उपलक्षितः । तदेवाह—रसादयोऽङ्गभूता दृ[12]श्यन्त इति । **स चेति ।** उक्तविषय इति शेषः । **शुद्ध इति ।** रसान्तरेणाङ्गभूतेना[13]लंकारान्तरेण न मिश्रः । [14]मिश्रवत्तु संकीर्णः । उदाहरति—(**किमिति ।**) स्व[15]प्नस्यानुभूतसदृशत्वेन भवनमिति हसन्नेव प्रियतमः स्वप्नेऽवलोकितः । न मे प्रयास्यसि पुनरिति । इदानीं त्वां विदितशठभावं बाहुपाशबन्धान्न मोक्ष्यामि । अत एव रिक्तबाहुवलय इति । स्वीकृतस्य चोपालम्भो युक्त इत्याह—केयं निष्करुणेति । केनासीति । गोत्रस्ख[16]लनादावपि न मया कदाचित्खेदितोऽसि । स्वप्नान्तेषु स्वप्नायितेषु सु[17]प्तप्रलपितेषु पुनः पु[18]नरुद्भूततया बहुष्विति वदन्युष्माकं संबन्धी रिपुस्त्रीजनः प्रियतमे विशेषेणासक्तः कण्ठग्रहो येन तादृश एव सन्बुद्धा शून्यवलयाकारीकृतबाहुपाशः संस्तारं

---

१. 'नृपविषय' क-ख. २. 'ऽप्युक्तो' ग-पुस्तके नास्ति. ३. 'तत्र' ग पुस्तके नास्ति. ४. 'अलंकारवाक्यार्थत्वम्' ग. ५. 'औद्भट' ग. ६. 'भक्त्या' ग. ७. 'चाटूनां वाक्यार्थत्वे' ग-पुस्तके नास्ति. ८. 'प्रेयस्वी' ग. ९. 'उपलक्षणत्वात्' क-ख. १०. 'प्रेयस्विप्रभृते' ग. ११. 'रसाद्यलंकारा उपलक्षिताः' ग. १२. 'दृश्यन्ते' ग-पुस्तके नास्ति. १३. 'अलंकारेण' क-ख. १४. 'मिश्रवस्तुसंकीर्णः' ग. १५. 'स्वप्नस्याङ्गभूत' क-ख. १६. 'स्खलितादावपि कदाचिन्मया' ग. १७. 'सुप्त' क-ख-पुस्तकयोर्नास्ति. १८. 'पुनर्भूत' क-ख.

स्वप्नान्तेष्विति ते[1] वदन्प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥'

इत्यत्र करुणरसस्य शुद्धस्या[2]ङ्गभावात्स्पष्टमेव रसवदलंकारत्वम् । एव-मेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः । [3]संकीर्णो रसादि-रङ्गभूतो यथा—

---

मुक्तकण्ठं रोदितीति । अत्र शोकस्थायिभावेन स्वप्नदर्शनोद्दीपितेन करुणरसेन चर्व्यमाणेन सुन्दरीभूतो नरपतिप्रभावो भातीति करुणः[1] शुद्ध एवालंकारः । नहि त्वया रिपवो हता इति यादृगनलंकृतोऽयं वाक्यार्थस्तादृगयम्, अपि तु[2] सुन्दरीभूतः । अत्रार्थसौन्दर्यं च करुणरसकृतमेवेति । चन्द्रादिना वस्तुना तथा वस्त्वन्तरं वदनाद्यलंक्रियते तदुपमितत्वेन चारुतयावभासात् । तथा[3] रसेनापि वस्तु[4] वा रसान्तरं वोपस्कृतं सुन्दरं भाति । इति रसस्यापि वस्तुन इवालंकारत्वे को विरोधः । ननु रसेन किं[6] कुर्वता प्रकृतोऽर्थोऽलंक्रियते । तर्हि उपमयापि किं कुर्वत्यालंक्रियेत । ननु तयोपमीयते प्रस्तुतोऽर्थः रसेनापि तर्हि सरसीक्रियते सोऽर्थ इति स्वसंवेद्यमेतत् । तेन यत्केचिदचूचुदन् 'अत्र[10] रसेन विभावादीनां मध्ये किमलंक्रियते' [11]इति त[12]दनभ्युपगमपराहतम् । प्रस्तुतार्थस्या[13]लंकार्यत्वेनाभिधानात् । अस्यार्थस्य भूयसा लक्ष्ये[14] सद्भाव इति दर्शयति—**एवमिति** । यत्र[15] राजादेः प्र[16]भावख्यापनं

---

१. 'वो' क-ख. २. 'शुद्धस्य' ग-पुस्तके नास्ति. ३. 'संकीर्णे' क-ख.

---

१. 'करुणस्तु' ग. २. 'अपि सुन्दरीभूतो वाक्यार्थः । सौन्दर्यं च करुणस्य कृतमेव' ग. ३. 'अतथा' ग. ४. 'वस्तुना रसान्तर' ख. ५. 'वा' क-ख पुस्तकयोर्नास्ति. ६. 'किं' क-ख-पुस्तकयोर्नास्ति. ७. 'प्रस्तुतो' ग. ८. 'क्रियते' क-ख. ९. 'प्रस्तुतोऽर्थः' क-ख-पुस्तकयोर्नास्ति. १०. 'अत्र' क ख-पुस्तकयोर्नास्ति. ११. 'इति' ग-पुस्तके नास्ति. १२. 'तदभ्युपगम' क-ख. १३. 'स्यालंकारत्वेन' क-ख. १४. 'भूयसार्थसद्भावः' क-ख. १५. 'अत्र' ग. १६. 'प्रभाव' क-ख-पुस्तकयोर्नास्ति.

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्यादंदानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहित-स्याङ्गभाव इत्येवंविध एव रसवदाद्यलंकारस्य न्याय्यो विषयः । अत एव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोषः ।

---

तादृश इत्यर्थः । संकीर्णरसाद्यलंकारमुदाहरति—क्षिप्त इति । कामिपक्षेऽनादृतः, इतरत्र धुतः । अवधूत इति न प्रतीप्सितः प्रत्यालिङ्गनेन, इतरत्र सर्वाङ्गधूननेन विशरारुकृतः । साश्रुत्वमेकत्रेर्ष्यया अन्यत्र निष्प्रत्याशतया । कामीवेत्यनेनोपमानेन श्लेषानुगृहीतेनेर्ष्याविप्रलम्भो य आकृष्टस्तस्य श्लेषोपमासहितस्याङ्गत्वम्, न केवलस्य । यद्यत्र करुणो रसो वास्तवोऽप्यस्ति तथापि स तच्चारुत्वप्रतीतौ न व्याप्रियत इत्यनेनाभिप्रायेण श्लेषसहितस्येतावदेवावोचत् । न तु करुणसहितस्येत्यपि ॥ एतमर्थमपूर्वतयोत्प्रेक्षितं द्रढीकर्तुमाह—अत एवेति । यतोऽत्र विप्रलम्भस्यालंकारत्वं न तु वाक्यार्थता अतो हेतोरित्यर्थः । न दोष इति । यदि ह्यन्यतरस्य रसादेः प्राधान्यमभविष्यन्न द्वितीयो रसः समाविशेत् । रतिस्थायिभावत्वेन तु सापेक्षभावो विप्रलम्भः । स च शोकस्थायिभावत्वेन निरपेक्षभावस्य करुणस्य विरुद्ध एव । एवमलंकारशब्दप्रसङ्गेन समावेशं प्रसाध्य एवंविध एवेति यदुक्तं

---

१. 'तश्चा' ग. २. 'आदधानो' क-ख. ३. 'रसवदलंकारस्य' ग. ४. 'समावेशे' क-ख.

---

१. 'संकी—रति' ग-पुस्तके नास्ति. २. 'द्रुतः' ख, 'भूतः' ग. ३. 'विशरारुकः' ग. ४. 'य आकृ—केवलस्य' ग-पुस्तके नास्ति. ५. 'एवंविध एवेति' ग. ६. 'ततो' क-ख. ७. 'रसादेः' ग-पुस्तके नास्ति. ८. 'तु' क-ख-पुस्तकयोर्नास्ति. ९. 'स च' क-ख-पुस्तकयोर्नास्ति.

यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलंकारत्वम् । अलंकारो हि चारुत्वहेतुः[1] प्रसिद्धः । न त्वसावात्मैवात्मनश्चारुत्वहेतुः[2] ।

तथा[3] चायमत्र संक्षेपः—

'रसभावादितात्पर्यमाश्रित्य विनिवेशनम्[4] ।
अलंकृतीनां सर्वासामलंकारत्वसाधनम् ॥ ६ ॥

तस्माद्यत्र रसादयो वाक्यार्थीभूताः सर्वे[5] ते न रसादेरलंकारस्य वा विषयाः स ध्वनेः प्रभेदः । तस्योपमादयोऽलंकाराः । यत्र तु[6] प्राधान्येनार्थान्तरस्य[7] वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलंकारताया[8] विषयः ।

---

तत्रैवकारस्याभिप्रायं व्याचष्टे—**यत्र हीति** । सर्वासामुपमादीनाम्[1] । अयं भावः—उपमादीनामलंकारत्वे यादृशी वार्ता[2] तादृश्येव रसादीनाम् । तदवश्यमनेनालंकार्येण भवितव्यम् । तच्च यद्यपि वस्तुमात्रमपि भवति तथापि तस्य पुनरपि विभावादिरूपतात्पर्यावसानाद्रसादितात्पर्यमेवेति सर्वत्र[3] रसध्वनेरेवात्मभावः । तदुक्तं—**रसभावादितात्पर्यमिति** । तस्येति प्रधानस्यात्मभूतस्य । एतदुक्तं भवति—उपमया यद्यपि वाच्योऽर्थोऽलंक्रियते तथापि तस्य[4] तदेवालंकरणं यद्व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति[5][6] । वस्तुतो ध्वन्यात्मैवालंकार्यः । कटककेयूरादिभिरपि हि शरीरसमवायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयालंक्रियते[7] । तथाह्यचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति । अलंकार्यस्याभावात् । यतिशरीरं कटकादियुक्तं हास्यावहं भवति । अलंकार्यस्यानौचित्यात् । न च

---

१. 'चारुत्वे सिद्धिहेतुः' क-ख. २ 'न त्वात्मैवात्मनः । तथा' क-ख. ३. 'तथायमत्र' ग. ४. 'विनिवेशितम्' क-ख. ५. 'सर्वे—विषयाः' क-ख-पुस्तकयोर्नास्ति. ६. 'तु' क-ख-पुस्तकयोर्नास्ति. ७. 'अर्थान्तरवाक्यार्थी' क-ख. ८ 'अलंकारताविषयः' क-ख.

---

१. 'सर्वासामित्युपमा' ग. २. 'वाक्' ग. ३. 'तत्र' ग. ४. 'तस्य' क-ख-पुस्तकयोर्नास्ति. ५. 'तदेवालंकरणीयं [illegible]' क-ख. ६. '[illegible]धानमिति' क-ख. ७. 'सूचनायात्मतया' क-ख.

एवं ध्वनेरुपमादीनां रसवदलंकारस्य च विभक्तविषयता भवति । यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलंकारस्य विषय इत्युच्यते

---

देहस्य किंचिदनौचित्यमिति वस्तुत आत्मैवालंकार्यः । अहमलंकृत इत्यभिमानात् । रसादेरलंकारताया इति व्यधिकरणषष्ठ्यौ । रसादेर्यालंकारता तस्याः स एव विषयः । एतदनुसारेणैव पूर्वत्रापि वाक्ये योज्यम् । रसादिकर्तृकस्यालंकरणक्रियात्मनो विषय इति । **एवमिति** । अस्मदुक्तेन विषयविभागेनेत्यर्थः । यत्र रसस्यालंकार्यता रसान्तरं चाङ्गभूतं नास्ति तत्र शुद्धा एवोपमादयः । तेन सृष्ट्या नोपमादीनां विषयापहार इति भावः । **रसवदलंकारस्य चेति** । अनेन भावाद्यलंकारा अपि प्रेयस्व्यूर्जस्विसमाहितादयो गृह्यन्ते । तत्र भावालंकारस्य शुद्धस्योदाहरणं यथा— 'तव शतपत्रपत्रमृदुताम्रतलश्चरणश्चलकलहंसनूपुरकलध्वनिना मुखरः । महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतामयमम्ब गतः ॥' इत्यत्र देवतास्तोत्रे वाक्यार्थीभूते वितर्कविस्मयादिभावस्य चारुत्वहेतुतेति तस्याङ्गत्वाद्भावालंकारस्य विषयः । रसाभासस्यालंकारता यथा ममैव स्तोत्रे—'समस्तगुणसंपदः सममलंक्रियाणां गुणैर्भवन्ति यदि भूषणं तव तथापि नो शोभसे । शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेस्तदेव ननु वाणि ते जगति सर्वलोकोत्तरम् ॥' अत्र हि परमेशस्तुतिमात्रं वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाराभासश्चारुत्वहेतुः श्लेषसहितः । नह्ययं पूर्णः शृङ्गारो नायिकाया निर्गुणत्वे निरलंकारत्वे च भवति । 'उत्तमयुवप्रकृतिरुज्ज्वलवेषात्मकः' इति चाभिधानात् । भावाभासाङ्गता यथा—'स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु । लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥' अत्र रौद्रप्रभृतीनामनुचितस्त्रासो भगवत्प्रभावकारणकृत इति भावाभासः । एवं तत्प्रशमस्याङ्गत्वमुदाहार्यम् । मे मतिरित्यनेन यत्परमतं सूचितं तद्दूषणमुपन्यस्यति—**यदीत्यादिना** । परस्य चायमाशयः—अचेतनानां चित्तवृत्तिरूपरसाद्यसंभवात्तद्वर्णनेन रसवदलंकारस्यानाशङ्क्यत्वात्तद्विभक्त एवोपमा-

---

१. 'विविक्त' ग. २. 'इति' ग-पुस्तके नास्ति.

---

१. 'समाहितलक्षणादयो' ग. २. 'तत्र' ग-पुस्तके नास्ति. ३. 'रव' क-ख. ४. 'कस्य' ग. ५. 'न हृदयं' क-ख. ६. 'पूर्वः' ग. ७. 'तद्वर्णने रसवदाद्यलंकारस्य' ग.

तर्ह्यु[1]पमादीनां प्रविरलविषयता निर्विषयता वाभिहिता स्यात् । तस्माद-चेतनवस्तुवृत्ते[2] वाक्यार्थीभूते पुनश्चेतनवस्तुवृत्तान्त[3]योजनया यथाकथंचि-द्भवितव्यम् । अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवदलंकारस्य विषय इत्युच्यते । ननु महतः काव्यप्रबन्धस्य रसनिधा-नभूतस्य नीरसत्वमभिहितं स्यात् । यथा—

'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसंधाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥'

---

दीनां विषय इति । एतद्दूषयति—**तर्हीति**[1] । तस्माद्वचनाद्धेतोरित्यर्थः । नन्वचेतन[2]-वर्णनं विषय इत्युक्तमित्याशङ्क्य हेतुमाह—**यस्मादिति** । यथाकथंचिदिति विभा-वादिरूपतया । **तस्यामिति** । चेतनवृत्तान्तयोजनायाम् । **नीरसत्वमिति**[3] । यत्र हि रसस्तत्रावश्यं रसवदलंकार इति परमतम्[4] । ततो न रसवदलंकारश्चेन्नूनं तत्र रसो नास्तीति परमताभिप्रायान्नीरसत्वमुक्तम्[5] । न त्वस्माकं रसवदलंकाराभावे नीरसत्वम् । अपि तु ध्वन्यात्मभूतरसाभावे । तादृग्रसोऽत्रास्त्येव[6] । परपक्षदूषणा[7]-योदाहरति—**यथा—तरङ्गेति** । तरङ्गा एव भ्रूभङ्गा यस्याः । विकर्षन्ती विल-म्बमानं बलादाक्षिपन्ती । वसनमंशुकम् । प्रियतमावलम्बननिषेधायेति भावः । बहुशो यत्स्खलितं येऽपराधास्तानभिसंधाय हृदयेनैकीकृत्यासहमाना मानिनीत्यर्थः ।

---

१. 'तदुपमा' क-ख. २. 'वृत्तान्ते' क-ख. ३. 'वृत्तान्त' क-ख-पुस्तकयो-र्नास्ति ४. 'नयना' क-ख. ५. 'नदीभावेन' क-ख.

---

१. 'तदिति' क-ख. २. 'ननु चेतन' क-ख. ३. 'नीरसत्वमिति' क-ख-पुस्तकयो-र्नास्ति. ४. 'परस्य' क-ख. ५. 'परमताभिप्राय' क-ख. ६. 'रसो नास्त्येव' क-ख. ७. 'पर—तरङ्गेति' ग-पुस्तके नास्ति. ८. 'विरोधाः' ग. ९. 'तत्तदभि' क-ख.

यथा वा—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते[1]
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥'

यथा वा[2]—

'तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥'

---

अथ च मद्वियोगपश्चात्तापासहिष्णुस्तापशान्तये नदीभावं गतेति । **तन्वीति ।** वियोगकृशाप्यनुतप्ता चाभरणानि लजति । स्वकालो वसन्तग्रीष्मप्रायः । उपाय-[1]चिन्तनार्थं मौनं किमिति पादपतितमपि दयितमवधूतवत्यहमिति च चिन्तया मौनम् । चण्डी कोपना । एतौ श्लोकौ नदीलतावर्णनपरौ तात्पर्येण पुरूरवस उन्मादाक्रान्तस्योक्तिरूपौ । **यथा वा—तेषामिति ।** हे भद्र, तेषामिति ये ममैव हृदये स्थितास्तेषाम् । गोपवधूनां गोपीनां ये विलाससुहृदो नर्मसचिवास्तेषाम् । प्रच्छन्नानुरागिणीनां हि नान्यो नर्मसुहृद्भवति । राधायाश्च[2] सातिशयं प्रेमस्थानमित्याह—राधासंभोगानां ये साक्षाद्द्रष्टारः । कलिन्दशैलतनया यमुना तस्यास्तीरे लतागृहाणां क्षेमं कुशलमिति काक्वा[3] प्रश्नः । एवं तं[4] पृष्ट्वा गोपदर्शनप्रबुद्धसंस्कार आलम्बनोद्दीपनविभावस्मरणात्प्रबुद्धरतिभावमात्मगतमौत्सुक्यगर्भमाह द्वारकागतो भगवान्कृष्णः—स्मरतल्पस्य मदनशय्यायाः कल्पनार्थं मृदु सुकुमारं कृत्वा यच्छेदत्रोटनं स एवोपयोगः साफल्यम् । अथवा स्मरतल्पे यत्कल्पनं कॢप्तिः स एव मृदुः सुकुमार उत्कृष्टश्छेदोपयोगस्त्रोटनफलं तस्मिन्विच्छिन्ने । मय्यनासीने का स्मरतल्पकल्पनेति भावः । अत एव परस्परानुरागनिश्चयगर्भमेवाह—ते जान इति ।

---

१. 'दृश्यते' ग. २. 'यथा वा' ग-पुस्तके नास्ति.

---

१. 'उपायच्चिन्ता तन्मौनं चिन्तामौनं' ग. २. 'राधा च सातिशयप्रेम' क-ख. ३. 'कथं' ग. ४. 'तं' ग-पुस्तके नास्ति.

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चे[1]तनवस्तुवृत्तान्तयोजनास्त्येव । अ[2]थ यत्र चेतनवस्तुवृत्तान्तयोजनास्ति तत्र रसादिरलंकारः। तदेवं सत्युपमादयो निर्विषयाः प्रविरलविषया वा स्युः । यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो वि[3]भावत्वेन । [4]तस्मादङ्गत्वेन च रसादीनामलंकारता । यः पुनरङ्गी रसो भावो वा सर्वाकारमलंकार्यः स ध्वनेरात्मेति ।

---

वाक्यार्थस्यात्र कर्मत्वम् । अधुना जरठीभवन्तीति । मयि तु संनिहितेऽनवरत[1]कलिकोपयोगान्नेमे जीर्णताखलीकारं कदाचिदवाप्नुवन्तीति भावः । विगलन्ती नीला त्विड्येषामित्यनेन कतिपयकालप्रोषितस्याप्यौत्सुक्यनिर्भरत्वं ध्वनितम् । एवमात्मगतेयमुक्तिर्यदिवा गोपं प्रत्येव संप्रधारणोक्तिः । बहुभिरुदाहरणैर्महतो भूयसः प्रबन्धस्येति यदुक्तं तत्सूचितम् । **अथेत्यादि** । नी[2]रसत्वमत्र मा भूदित्यभिप्रायेणेति शेषः । ननु यत्र चे[3]तनवस्तुवृत्तस्य सर्वथा नानुप्रवेशः स उपमादेर्विषयो भविष्यतीत्याशङ्क्याह—**यस्मादित्यादि** । स्तम्भपुलकाद्यचेतनमपि वर्ण्यमानम[4]नुभावत्वाच्चेतनमाक्षिपत्येव । तावत्किमत्रोच्यते । अतिजडोऽपि चन्द्रोद्यानप्र[5]भृतिस्वविश्रान्तोऽपि वर्ण्यमानोऽवश्यं चित्तवृत्तिवि[6]भावतां त्यक्त्वा काव्येऽनाख्येय एव स्यात् । शास्त्रेतिहासयोर[7]पि वा । एवं परमतं दूषयित्वा स्वमतमेव प्रत्याम्नायोपसंहरति—**तस्मादिति** । यतः प[8]रोक्तो विषयविभागो न युक्त इत्यर्थः । [9]**यः पुनरिति । भावो वेति** । भा[10]वग्रहणात्तदाभासतत्प्रशमादयः । सर्वाकारमिति क्रियाविशेषणम् । तेन सर्वप्रकारमित्यर्थः । अलंकार्य इत्यत्रैव, नालंकार इति भावः । अलंकार्यव्यतिरिक्तश्चालंकारोऽभ्युपगन्तव्यः । लोके तथासिद्धत्वात् । यथा गुणिव्यतिरिक्तो गुणः । गुणालंकारव्यवहारश्च गुणिन्यलंकार्ये च सति । स चास-

---

१. 'सचेतन' **क-ख.** २. 'अत्र यत्र' **ग.** ३. 'विभातत्वेन' **क-ख.** ४. 'तस्मादङ्गत्वेन च' **ग**-पुस्तके नास्ति.

---

१. 'कथितोपयोगान्ते मञ्जर्यो जीर्णता' **क-ख.** २. 'नीरसत्वमात्रं' **क-ख.** ३. 'चेतनवृत्तस्य' **ग.** ४. 'अनुभवत्वाच्चेतनमाक्षिपतीत्येव, तावदत्र किमुच्यते' **क-ख.** ५. 'प्रभृतिस्वविश्रान्तौ' **क-ख.** ६. 'विभावनां' **क-ख.** ७. 'इति वा' **क-ख.** ८. 'परोक्ते' **क-ख.** ९. 'यः पुनरिति' **ग**-पुस्तके नास्ति. १०. 'वाग्रहणात्' **क-ख.**

किंच ।

'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥ ७ ॥'

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः शौर्यादिवत् । वाच्यवाचकलक्षणान्यङ्गानि ये पुनराश्रितास्तेऽलंकारा मन्तव्याः । कटकादिवदिति ।

तथा च—

'शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ८ ॥'

शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात्प्रकाशनपरः ।

---

तपक्ष एवोपपन्न इत्यभिप्रायेणाह—किं चेत्यादि । न केवलमेतावद्युक्तिजातं रसस्याङ्गित्वे यावदन्यदपीति समुच्चयार्थः । तमर्थमिति । कारिकाप्यभिप्रायद्वयेनैव योज्या । न केवलं प्रथमाभिप्राये प्रथमकारिकार्थदृष्टान्ताभिप्रायेण व्याख्येयम् । एवं वृत्तिग्रन्थोऽपि योज्यः । ननु शब्दार्थयोर्माधुर्यादयो गुणास्तत्कथमुक्तं रसादिकमङ्गिनं गुणा आश्रिता इत्याशङ्क्याह—तथा चेत्यादि । तेन वक्ष्यमाणेन बुद्धिस्थेन परिहारप्रकारेणोपपद्यते चैतदित्यर्थः । शृङ्गार एवेति । मधुर इत्यत्र हेतुमाह—परः प्रह्लादन इति । रतौ हि समस्तदेवतिर्यङ्नरादिजातिष्वविच्छिन्नैव वासनास्त इति न कश्चित्तत्र तादृग्यो न हृदयसंवादमयः । रतेरपि हि तच्चमत्कारोऽस्त्येव । अत एव मधुर इत्युक्तः । मधुरो हि शर्करादिरसो विवेकिनो वा स्वस्थ-

---

१. 'योऽङ्गिनं ते गुणाश्रिताः' ग. २. 'पुनस्तदाश्रिताः' ग. ३. 'कुण्डलादिवदिति' ग. ४ 'यथा च' क. ५. 'एको' ग. ६. 'तद्धूयं' ग.

---

१. 'अभिप्रायद्वयेनाह' ग. २. 'तमर्थमिति' ग-पुस्तके नास्ति. ३. ''कारिकेयमभिप्रायद्वारेणैव' क-ख. ४. 'कारिकापूर्वदृष्टा' क-ख. ५. 'ननु च' क-ख. ६. 'यथा च' क. ७. 'उपपद्यत एव चेत्यर्थः' ग. ८. 'शृङ्गार एवेति' क-ख. पुस्तकयोर्नास्ति. ९. 'जातिषु च्छिन्नैव' क-ख. १०. 'कश्चिदत्र' क-ख.

शब्दार्थयोः काव्यस्य स माधुर्यलक्षणो गुणः। श्रव्यत्वं पुनरोजसोऽपि साधारणमिति।

'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥ ९॥'

---

स्यातुरस्य वा झटिति रसनानिपतितस्तावदभिलषणीय एव भवति। तन्मयमिति। स शृङ्गार आत्मत्वेन प्रकृतो यत्र व्यङ्ग्यतया। काव्यमिति। शब्दार्थावित्यर्थः। प्रतितिष्ठतीति। प्रतिष्ठां गच्छतीति यावत्। एतदुक्तं भवति—वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुणः। तन्मधुराभिव्यञ्जकयोः शब्दार्थयोरुपचरितम्। मधुरशृङ्गाररसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्यमिति हि लक्षणम्। तस्माद्युक्तमुक्तमर्थमित्यादि। कारिकार्थं वृत्त्याह—**शृङ्गार इति**। ननु 'श्रव्यं नातिसमस्तशब्दार्थं मधुरमिष्यते' इति माधुर्यस्य लक्षणं नेत्याह—**श्रव्यत्वमिति**। सर्वं लक्षणमुपलक्षितम्। **ओजसोऽपीति**। 'यो यः शस्त्रं' इत्यत्र हि श्रव्यत्वमसमस्तत्वं चास्त्येवेति भावः। संभोगशृङ्गारान्मधुरतरो विप्रलम्भः ततोऽपि मधुरतमः करुण इति तदभिव्यञ्जनकौशलं शब्दार्थयोर्मधुरतरमधुरतमत्वं चेत्यभिप्रायेणाह—**शृङ्गार इत्यादि**। करुणे चेति चशब्दः क्रममाह। प्रकर्षवदिति। उत्तरोत्तरं तरतमयोगेनेति भावः। आर्द्रतामिति। सहृदयस्य चेतः स्वाभाविकमनाविष्टत्वात्मकं काठिन्यक्रोधादिदीप्तरूपं विस्मयहासादिरागित्वं च त्यजतीत्यर्थः। **अधिकमिति**। क्रमेणेत्याशयः। तेन करुणेऽपि सर्वथैव चित्तं द्रवतीत्युक्तं भवति। ननु करुणेऽपि यदि मधुरिमास्ति तर्हि पूर्वकारिकायां शृङ्गार एवेत्येवकारः किमर्थः। उच्यते—नानेन रसान्तरं व्यवच्छिद्यते। अपि त्वात्मभूतस्य रसस्यैव परमार्थतो गुणा माधुर्यादयः, उपचारेण तु शब्दार्थयोरित्येवकारेण द्योत्यते।

---

१. 'शब्दार्थतया' **ग.** २. 'श्राव्यत्वं' **ग.** ३. 'मतः' **ग.**

---

१. 'एव' क-ख. पुस्तकयोर्नास्ति. २. 'उपचित्तं माधुर्यम्' क-ख. ३. 'तल्लक्षणम्' क-ख. ४. 'कारिका—इति' ग-पुस्तके नास्ति. ५. 'सकलं' ग. ६. 'समस्तत्वं चास्ति वेति' क-ख. ७. 'इत्यर्थः' क-ख. ८. 'काठिन्यमत्क्रोधादि' क-ख.

विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत् । सहृदयहृदयावर्जनातिशयनिमित्तत्वादिति[1] ।

'रौद्रादयो रसा दीप्त्या[2] लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्योजो व्यवस्थितम् ॥१०॥'

रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त[3] एव दीप्तिरित्युच्यते । तत्प्रकाशनपरः शब्दो दीर्घसमासरचनालंकृतं वाक्यम् । यथा—

'चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥'

---

वृत्त्यार्थमाह—**विप्रलम्भेति** । **रौद्रेत्यादि** । आदिशब्दः प्रकारे । तेन वीराद्भुतयोरपि ग्रहणम् । दीप्तिः प्रतिपत्तुर्हृदये विभास[1]विस्तारप्रज्वलत्स्वभावा । सा च मुख्यतया ओजः[2]शब्दवाच्या । तदास्वादमया रौद्राद्यास्तया दीप्त्यास्वादविशेषात्मिकया[3] कार्यरूपया लक्ष्यन्ते रसान्तरात्पृथक्तया । तेन कारणे[4] कार्योपचाराद्रौद्रादिरेवौजः[5]शब्दावाच्यः । ततो लक्षितलक्षणया तत्प्रकाशनपरः शब्दो[6] दीर्घसमासरचनवाक्यरूपोऽपि दीप्तिरित्युच्यते । उदाहरति—**यथा चञ्चदिति** । चञ्चद्भ्यां वेगादावर्तमानाभ्यां भुजाभ्यां भ्रमिता येयं[7] चण्डा दारुणा गदा तया योऽभिर्तः सर्वत ऊर्वो-

१. 'इति' **ग** पुस्तके नस्ति.　२. 'दीप्ता' **क-ख**.　३. 'लक्षणया त एव' **क-ख**पुस्तकयोर्नास्ति.

१. 'विकास' **क-ख**.　२. 'तेजः' **क-ख**.　३. 'विशेषात्मतया' **क**.　४. 'कारणेन कार्येऽपि च रौद्रा' **क-ख**.　५. 'तेजः' **क-ख**.　६. 'शब्दो' **क-ख**. पुस्तकयोर्नास्ति.　७. 'येयं' **क-ख**-पुस्तकयोर्नास्ति.　८. 'योऽभिभूतः सर्वत' **क-ख**. 'योऽभिघातः संतत' **ग**.

[1]तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः।

यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।

---

र्घातस्तेन सम्यक् चूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलं युगपदेवोरुद्वयं यस्य तं सुयोधनमनादृत्यैव स्त्यानेनाश्यानतया न तु कालान्तरशुष्कतयावबद्धं हस्ताभ्यामविगे[1]लद्रूपमत्यन्तमाभ्यन्तरतया घनं न तु रसमात्रस्वभावं यच्छोणितं रुधिरं तेन शोणौ लोहितौ पाणी यस्य सः। अत एव भीमः कातरत्रासदायी। तवेति। यस्यास्तत्तदपमानजातं कृतं देव्यनुचितमपि तस्यास्तव कचानुत्तंसयिष्यत्युत्तंसवतः करिष्यतीति वेणीत्वमपहरन्करै[2]र्विधृतशोणितशकलैर्लोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा। देवी[3]त्यनेन कुलकलत्रखलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति नात्र शृङ्गारशङ्का कर्तव्या। सुयोधनस्य चानादरणं द्वितीयगदाघातदा[4]नायेनुद्यमात्। स च संचूर्णितोरुत्वादेव। स्त्यानग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा सूचिता। समासेन च संततवेगवहनस्वभावात् तावत्येव मध्ये विश्रान्तिमलभमाना चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिरे[5]कत्वेनैव भवतीत्यौ[6]द्धत्यस्य परं परिपोषिका। अन्ये तु सुयोधनस्य संबन्धि यत्स्त्यानावबद्धं घनं शोणितं तेन शोणपाणिरिति व्याचक्षते। [7]तत्प्रकाशनपरश्चार्थः प्रसन्नैर्गमकैर्वाचकैरभिधीयमानः [8]समासानपेक्ष्यपि दीप्तिरुच्यते। उदाहरति—**य इति**। स्वभुजयोर्गुरुर्मदो यस्य। चमूनां मध्येऽर्जुनादिरित्यर्थः। पाञ्चालराजपुत्रेण धृष्टद्युम्नेन द्रोणस्य व्यापादनात्तत्कुलं प्रत्यधिकः क्रोधावेशोऽश्वत्थाम्नः। तत्कर्मसाक्षीति कर्णप्रभृतिः। रणे सङ्ग्रामे

---

१. 'तत्प्रकाशितश्चार्थो' क-ख.

---

१. 'चलद्रूप' क-ख. २. 'विच्युतशोणितशकलेन' ग. ३. 'देवीत्यत्र' क-ख. ४. 'अनुमानात्' ख, 'अनुद्यमः' ग. ५. 'एका घनैव' क. ६. 'औद्धत्यपरिपोषकाः' क-ख. ७. 'तत्प्रकाशनपरः' क-ख. ८. 'समासमनपेक्ष्यापि' ग. ९. 'तं प्रति' क-ख.

यो यस्तत्कर्मसाक्षी चरति[1] मयि रणे यश्च यश्च प्रतीपः

क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥'

इत्यादौ द्वयोरोजस्त्वम्[2] ।

'समर्पकत्वं काव्यस्य यत्तु सर्वरसान्प्रति ।

स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ ११ ॥'

प्रसादस्तु स्वच्छता शब्दार्थयोः[3] । स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्चेति[4] व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः[5] ।

---

कर्तव्ये यो मयि मद्विषये प्रतीपं चरति[1] समरविघ्नमाचरति । यद्वा मयि चरति सति[2] सङ्ग्रामे यः प्रतीपं प्रतिकूलं कृत्वास्ते स एवंविधो यदि सकलजगदन्तको भवति तस्याप्यहमन्तकः किमुतान्यमनुष्यस्य[3] देवस्य वा । अत्र पृथग्भूतैरेव क्रमाद्विमृष्यमाणैरर्थैः[4] पदात्पदं[5] क्रोधः परां[6] धारामाश्रित इत्यसमस्ततैव दीप्तिनिबन्धनम् । एवं माधुर्यदीप्ती परस्परप्रतिद्वन्द्वितया स्थिते शृङ्गारादिरौद्रादिगते इति प्रदर्शकतया तत्समावेशवैचित्र्यं हास्यभयानकबीभत्सशान्तेषु दर्शितम् । हास्यस्य शृङ्गाराङ्गतया माधुर्यं प्रकृष्टं विकासधर्मतया चौजोऽपि प्रकृष्टमिति साम्यं द्वयोः । भयानकस्य मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्ततया ओजः[7] प्रकृष्टं माधुर्यमल्पम् । बीभत्सेऽप्येवम् । शान्ते तु विभाववैचित्र्यात्कदाचिदोजः प्रकृष्टं कदाचिन्माधुर्यमिति विभागः । समर्पकत्वं सम्यगर्पकत्वं हृदयसंवादेन प्रतिपत्तॄन्प्रति[8] स्वात्मावेशेन व्यापकत्वम् । झगिति शुष्ककाष्ठाग्निदृष्टान्तेनाकलुषोदकदृष्टान्तेन च तदकालुष्यं प्रसन्नत्वं नाम सर्वरसानां गुणः । उपचारात्तु तथाविधे व्यङ्ग्येऽर्थे यच्छब्दार्थयोः समर्पकत्वं तदपि प्रसादः । तमेव व्याचष्टे—**प्रसादेति** । ननु रसगतो गुणस्तत्कथं शब्दार्थयोः स्वच्छतेत्याशङ्क्याह—**स चेति** । चशब्दोऽवधारणे । सर्व-

---

१. 'चलति' क-ख. २. 'तयोः' ग. ३. 'शब्दार्थयोरिति' क-ख. ४. 'इति' ग-पुस्तके नास्ति. ५. 'मुख्यतया द्रष्टव्यः' ग.

---

१. 'चलति' क-ख.　२. 'सति' क-ख-पुस्तकयोर्नास्ति.　३. 'मानुषस्य' ग. ४. 'अर्थैः' क-ख-पुस्तकयोर्नास्ति.　५. 'पादात्पादे क्रोधात्परां' क-ख.　६. 'परां दीप्तिं गतः' ग.　७. 'तेजः' क-ख.　८. 'हृदयस्य' ग.

'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥ १२॥'

अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्तेऽपि[1] न वाच्यार्थमात्रे न च व्यङ्ग्ये शृङ्गारे शृङ्गारव्यतिरेकिणि वा ध्वनेरनात्मभावे[2]। किं तर्हि ध्वन्यात्मन्येव शृङ्गारेऽङ्गितयाव्यङ्ग्ये ते[3] हेया इत्युदाहृताः। [4]अन्यथा हि तेषामनित्यदोषतैव[5] न स्यात्। एवमयमसंलक्ष्यक्रमोद्द्योत्य[6][7]ध्वनेरात्मा प्रदर्शितः सामान्येन।

---

रससाधारण्यमेव गुणः। स एव च गुण एवंविधः सर्वा चेयं रचना शब्दगतार्थगता चेति समस्ता चासमस्ता च तत्र साधारणः। अर्थस्य तावत्समर्पकत्वं व्यङ्ग्यं प्रत्येव संभवति नान्यथा। शब्दस्यापि स्ववाच्यात्मकत्वं नाम कियदलौकिकं येन गुणः स्यादिति भावः। एवं माधुर्यौजःप्रसादास्त्रयो गुणा उपपन्नाः। भामहाभिप्रायेण ते च प्रतिपन्नास्वादमया मुख्यतया तत आस्वाद्ये उपचरिता रसे ततस्तद्व्यञ्जकयोः शब्दार्थयोरिति तात्पर्यम्। एवमस्मत्पक्ष एव गुणालंकारव्यवहारो विभागेनोपपद्यत इति प्रदर्श्य नित्यानित्यदोषविभागोऽप्यस्मत्पक्ष एव संगच्छत इति दर्शयितुमाह—**श्रुतिदुष्टादय इत्यादि**। वान्तादयोऽप्यसभ्यस्मृतिहेतवः। श्रुतिदुष्टा अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिणः। यथा—'छिद्रान्वेषी महांस्तब्धो घातायैवोपसर्पति'। कल्पना दुष्टा तु द्वयोः पदयोः कल्पना। यथा 'कुरु रुचिम्' इत्यत्र क्रमव्यत्यासे। श्रुतिकष्टस्तु अधाक्षीत् अक्षौत्सीत् तृणेढि इत्यादि। शृङ्गार इत्युचितरसोपलक्षणार्थम्। वीरशान्ताद्भुतादावपि तेषां वर्जनात्। **सूचिता इति**। न त्वेषां विषयविभागप्रदर्शनेनानित्यत्वं भिन्नवृत्तादिदोषेभ्यो विविक्तं प्रदर्शितम्। नापि गुणेभ्यो व्यतिरिक्तं दोषत्वम्। बीभत्सहास्यरौद्रादौ त्वेषामस्माभिरुपगमात् शृङ्गारादौ च वर्जनादनित्यत्वं समर्थितमेवेति भावः। वृत्त्यार्थं प्रकाशयति—**अनित्या इति**। इत्थमसंलक्ष्यक्रमव्यङ्ग्यं सामान्येन प्रदर्श्योपसंहरन्नाह—**एवमित्यादि**।

---

१. 'तेऽपि वाच्येऽर्थमात्रे' क-ख. २. 'ध्वन्यात्मभूते किं तर्हि' क-ख. ३. 'ये ते' क-ख. ४. 'तस्याहि' ग. ५. 'अनित्यत्वदोषमेव' क-ख. ६. 'अयं' क-ख-पुस्तकयोर्नास्ति. ७. 'क्रमद्योतो' क-ख.

'तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसंबन्धपरिकल्पने ॥ १३ ॥'

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलंकाराणां ये प्रभेदा निरंवधयो[1] ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निःसीमानो विशेषास्तेषामन्योन्यसंबन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसंख्यातुं न शक्यन्ते किमुत सर्वेषाम् । तथा हि शृङ्गारस्यैवाङ्गिनस्तावदाद्यौ[2] द्वौ[3] भेदौ—संभोगो विप्रलम्भश्च । संभोगस्य च परस्परप्रेमदर्शनसुरतविहरणादि[4]लक्षणाः प्रकाराः[5] । विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः । तेषां च प्रत्येकं[6] विभा-

---

अङ्गानामित्यलंकाराणाम् । **स्वगता इति** । आत्मगताः संभोगविप्रलम्भाद्या आत्मीयविभावादिगतास्तेषां निष्ठाप्रकारेणाङ्गाङ्गिभावे का गणनेति भावः । वृत्त्यार्थं प्रकाशयति—**अङ्गितयेत्यादिना** । **परस्परप्रेमदर्शनेति** । परस्परं प्रेम्णा दर्शनमित्युपलक्षणं संभाषणादेरपि । सुरतं चातुःषष्टिक[1]मालिङ्गनादि । विहरणमुद्यानगमनम् । आदिग्रहणेन जलक्रीडापानकचन्द्रोदयक्रीडादि । अभिलाषविप्रलम्भो द्वयोरप्यन्योन्यं जीवितं सर्वस्वाभिगमात्मिकायां[2] रतावुत्पन्नायां[3] कुतश्चिद्धेतोरप्राप्तसमागमत्वे मन्तव्यः । यथा सुखयतीति किमुत इत्यतः प्रभृति वत्सराजरत्नावल्योः, न तु पूर्वं रत्नावल्याः । तदा हि कामाभावे रत्यवस्थामात्रं तत् । ईर्ष्याविप्रलम्भः

---

१. 'निरवयवा' **ग.** २. 'शृङ्गारस्य तावदाद्यौ' **ग.** ३. 'द्वौ' **क ख**-पुस्तकयोर्नास्ति. ४. 'विरहणादि' **ग.** ५. 'प्रकारा लक्षणाः' **क-ख.** ६. 'प्रत्येकं' **ग**-पुस्तके नास्ति.

---

१. 'चतुष्षष्टिकां' **क-ख.** २. 'सर्वस्वाभिगमात्मिकायां' **क-ख.** ३. 'अनुत्पन्नायां' **ग.**

वानुभावव्यभिचारिभेदाः। तेषां च देशकालाद्याश्रयावस्थाभेदा इति स्वगतभेदापेक्षयैव तस्यापरिमेयत्वम्, किं पुनरङ्गप्रभेदकल्पनया। ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेदसंबन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति।

**'दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम्।**
**बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ १४ ॥'**

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे कर्तव्येऽलंकारेऽङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति।

---

प्रणयखण्डनादिना खण्डितया सह। विरहविप्रलम्भः पुनः खण्डितायाः प्रसाद्यमानाया अपि प्रसादमगृह्णन्त्यास्ततः पश्चात्तापपरीतत्वेन विरहोत्कण्ठितया सह मन्तव्यः। प्रवासविप्रलम्भः प्रोषितभर्तृकया सहेति विभागः। प्रवासविप्रलम्भादीत्यादिशब्दग्रहणाच्छापादिकृतो विप्रलम्भ इव विप्रलम्भः। विडम्बनायां ह्यभिलाषितोऽपि विषयो न लभ्यते। एवमत्रेति (मन्येऽपि)। **तेषां चेति**। एकत्र संभोगादीनामपरत्र विभावादीनाम्। आश्रयो मलयादिमारुतादीनामिति यदुच्यते तद्देशशब्देन गतार्थम्। तस्मादाश्रयः कारणम्। यथा ममैव—'दयितया ग्रथिता स्रगियं मया हृदयधामनि नित्यनियोजिता। गलति शुष्कतयापि सुधारसं विरहदाहरुजां परिहारकम् ॥' तस्येति शृङ्गारस्य। अङ्गिनां रसादीनां प्रभेदस्तत्संबन्धकल्पनेत्यर्थः।

**येनेति**। दिङ्मात्रोक्तेनेत्यर्थः। **सचेतसामिति**। महाकवित्वं सहृदयत्वं च प्रेप्सूनामिति भावः। **सर्वत्रेति**। सर्वेषु रसादिष्वासादित आलोकोऽवगमः सम्य-

---

१. 'भेदः' ग. २. 'कालाश्रया' क-ख. ३. 'भेद इति स्वगतापेक्षयैतस्य' ग. ४. 'कल्पनायां' ग. ५. 'कल्पनेन' ग. ६. 'रसभेदेऽङ्गाङ्गिभाव' ग.

---

१. 'भावादिकृतो' ग. २. 'तदुद्देशेन' क-ख. ३. 'आश्रयकारणात्' क-ख. ४. 'एकस्येति' ग. ५. 'रसादिना' ग.

तत्र—

'शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ १५ ॥'

अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदास्तेषु सर्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः । अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह ।

'ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ १६ ॥'

ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाश्यमानस्तस्मिन्यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम् । प्रमादित्वमित्यनेनैतद्दर्श्यते—काकतालीयेन कदाचित्कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नालंकारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य इति । विप्रलम्भे विशेषत इत्यनेन विप्रलम्भे

---

व्युत्पत्तिर्ययेति संबन्धः । **तत्रेति** । वक्तव्ये दिङ्मात्रे सतीत्यर्थः । **यत्नादिति** । यत्नतः क्रियमाणत्वादिति हेत्वर्थोऽभिप्रेतः ऐकरूपत्वानुबन्धं त्यक्त्वा विचित्रानुप्रासोऽनुबध्यमानो न दोषाय । एकरूपग्रहणं वृत्त्या विवृणोति—**अङ्गिन इति** । वृत्तिकारो वक्ष्यमाणकारिकाभिप्रायं दर्शयन्नाह—(**अङ्गिन इति** ।) यमकादीत्यादिशब्दः प्रकारवाची । दुष्करेति मुरजचक्रबन्धादिः । **शब्दभङ्गश्लेषेति** । अर्थश्लेषो न दोषाय 'रक्तस्त्वं–'इत्यादौ ।

---

१. 'सर्वेष्वेव प्रभेदेष्वेक' **क.ख.** २. 'प्रवृत्तानुप्रासो' **ग.** ३. 'अङ्गिरूपस्य शृङ्गारस्य' **क.ख.** ४. 'ध्वनेरात्मभूतः' **ग**-पुस्तके नास्ति. ५. 'दुष्टम् । शब्द' **ग.** ६. 'दृश्यते' **ग.** ७. 'कस्यचित्' **ग**-पुस्तके नास्ति. ८. 'विप्रलम्भशृङ्गारे' **ग.**

---



१. 'एकरूपं त्वनुबन्धं' **क-ख.**

सौकुमार्यातिशयः [1]ख्याप्यते । तस्मिन्द्योत्ये [2]यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य [3]इति ।

[4]अत्र युक्तिरभिधीयते—

'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥ १७ ॥'

निष्पत्तावाश्चर्यभूतो[5]ऽपि यस्यालंकारस्य [6]रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत्सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलंकारो मतः । तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः ।

यथा—

'कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।

---

शब्दभङ्गोऽपि क्लिष्ट एव दुष्टः, न [1]त्वशोकसशोकादौ । **युक्तिरिति** । सर्वव्यापकं वस्त्वित्यर्थः । **रसेति** । [2]रससमवायेन विभावादिघटनामेव [3]कुर्वंस्तु नान्तरीयकतया यमासादयति स एवात्रालंकारो [4]रसमार्गे नान्यमतेन वीराद्भुतादि.........ति यमकादिकवेः प्रतिपत्तुश्च रसविघ्नकार्येव । सर्वत्र गड्डरिकाप्रवाहोपहतसहृदयधुराधिरोहणविहीनलोकावर्जनाभिप्रायेण तु मया शृङ्गारे विप्रलम्भे च विशेषत इत्युक्तमिति भावः । तथा च 'रसेऽङ्गत्वं तस्मादेषां न विद्यते' इति सामान्येन वक्ष्यति । **निष्पत्ताविति** । प्रतिभानुग्रहात्स्वयमेव संपत्तौ निष्पादनानपेक्षायामित्यर्थः । **आश्चर्यभूत इति** । [5]कथमेव निबद्ध [6]इत्यद्भुतस्थानम् । [7]उदाहरति—करकिस-

---

१. 'ख्याप्यते प्रकाश्यते' ग. २. 'यमकस्याङ्गभूतस्य' ग. ३. 'इति' क-ख-पुस्तकयोर्नास्ति. ४. 'तत्र' क. ५. 'अपि' ग-पुस्तके नास्ति. ६. 'साक्षिततया' ख.

---

१. 'त्वशोकादौ' क-ख. २. 'रससमाधानेन' क-ख. ३. 'कुर्वंस्तेनान्तरीयक' क-ख. ४. 'रसमार्गे [illegible]' क-ख-पुस्तकयोर्नास्ति. ५. 'एषां निबन्धः' ग. ६. 'अद्भुतरसस्थानम्' क-ख. ७. 'उदाहरति' ग-पुस्तके नास्ति.

मुहुः कण्ठे लग्नस्तरलयति बाष्पस्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥'

रसाङ्गत्वे[1] च तस्य लक्षणमक्षुण्णमपृथग्यत्नं[2] निर्वर्त्यत इति रसं[3] बन्धुमध्यमसितस्य कवेरलंकारस्तां[4] वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते न[5] रसाङ्गमिति । यमके च प्रबन्धेन बुद्धिपूर्वकं[6] क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणरूपः । अलंकारान्तरेष्वपि तत्तुल्यमिति चेत्, नैवम् । अलंकारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति । यथा कादम्बर्यां कादम्बरीदर्शनावसरे । यथा च मायारामादिशिरो[7]-

---

लयन्यस्तवदना[1] श्वासतान्ता प्रवर्तमानबाष्पभरनिरुद्धकण्ठी अविच्छिन्नरुदितचञ्च[2]लकुचतटा रोषमपरित्यजन्ती चाटूक्त्या यावत्प्रसाद्यते तावदीर्ष्याविप्रलम्भगतानुभावचर्वणावहितचेतस एव वक्तुः श्लेषरूपकव्यतिरेकाद्या अयत्ननिष्पन्नाश्चर्वयितुरपि न रसचर्वणाविघ्नमादधीति । अक्षुण्णमिति । व्यापकमित्यर्थः । प्रबन्धेन क्रियमाण इति संबन्धः । अत एव बुद्धिपूर्वकत्वमवश्यंभावीति बुद्धिपूर्वकशब्द उपात्तः । रससमवधानात् । अन्यो यत्नो यत्नान्तरम् । निरूप्यमाणानि सन्ति दुर्घटनानि । बुद्धिपूर्वं चिकीर्षितान्यपि कर्तुमशक्यानीत्यर्थः । तथा निरूप्यमाणत्वे दुर्घटनानि[3] । कथमेतानि रचितानीत्येवं विस्मयावहानीत्यर्थः । अहं पूर्वे[4] अग्रे । अहमादावहमादौ प्रवर्ते[5] इत्यर्थः । अहंपूर्व इत्यस्य भावोऽहंपूर्विका । अहमिति

---

१. 'रसाङ्गनत्वे' क-ख. २. 'अक्षुण्णं' ग-पुस्तके नास्ति. ३. 'रससंबन्धमध्य' ग. ४. 'कवेर्योऽलंकारः' क-ख. ५. 'स न' क-ख. ६. 'बुद्धिपूर्वके क-ख. ७. 'रामादि' क-ख-पुस्तकयोर्नास्ति.

---

१. 'वेदनाश्वासा परिवर्ते' क-ख. २. 'चञ्चल' क-ख. ३. 'दुर्घटानि विसया–' ग. ४. पूर्वं इति अग्रय इत्यर्थः. ५. 'प्रवृत्त' क-ख.

दर्शनविह्वलायां सीतादेव्यां सेतौ[1] । युक्तं चैतत् । यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः । तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलंकाराः । तस्मान्न[2] तेषां बहिरङ्गत्वं रसाभिव्यक्तौ । यमकदुष्करमार्गेषु[3] तु तत्[4]स्थितमेव[5] । यत्तु रसवन्ति कानिचि[6]द्यमकादीनि दृश्यन्ते तत्र रसादीना[7]मङ्गता यमकादीनां त्वङ्गितैव । रसाभासे[8] चाङ्गत्वमप्यविरुद्धम् । अङ्गिता[9] तु व्यङ्ग्ये रसे नाङ्गत्वम् । पृथक्प्रयत्ननिर्वर्त्यत्वाद्यमकादेः ।

अस्यैवार्थस्य संग्रहश्लोकाः—

'रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते[10] महाकवेः ॥'
'यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते ।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥'
'रसाभासाङ्गभावस्तु यमकादेर्न वार्यते ।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता[11] नोपपद्यते ॥'

---

निपातो विभक्तिप्रतिरूपकोऽस्मदर्थवृत्तिः । **युक्तं चैतदिति** । अहंपूर्विकया परापतनमित्यर्थः । **कानिचिदिति** । कालिदासादिकृतानीत्यर्थः । शक्तस्यापि पृथग्यत्नो जायत इति संबन्धः । **एषामिति** । यमकादीनां ध्वन्यात्मभूते शृङ्गारे...... । प्राधान्येनार्धश्लोकेन संगृहीते—**ध्वन्यात्मभूत इति** ।

---

१. 'इति' **क-ख.** सेतौ सेतुबन्धकाव्य इत्यर्थः. २. 'तस्मात्तेषां किं न बहि' **ग.** ३. 'मार्गे' **क-ख.** ४. 'तत्' **ग**-पुस्तके नास्ति. ५. 'एव बहिरङ्गत्वम्' **क-ख.** ६. 'कानिचिद्वस्तूनि यम' **क-ख.** ७. 'रसानां' **क-ख.** ८. 'रसाभावे' **क-ख.** ९. 'अङ्गितया तु व्यङ्ग्येन' **क-ख.** १०. 'निवर्तन्ते' **क-ख.** ११. 'त्वङ्गता' **क-ख.**

---

१. 'युक्तं चैतत्' इत्यारभ्य ...... इत्यर्थः' इतिपर्यन्तं पाठः **क-ख**-पुस्तकयोस्त्रुटितः.

इदानीं ध्वन्यात्मभूतस्य व्यञ्जकोऽलंकारवर्ग आख्यायते—

'ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलंकारवर्ग एति यथार्थताम् ॥ १८ ॥'

अलंकारो हि बाह्यालंकारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते । वाच्यालंकारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चित्, अलंकाराणामनन्तत्वात्सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्व एव चारुत्वहेतुर्निष्पद्यते ।

एषा चास्य विनिवेशने समीक्षा—

'विवक्षातत्परत्वेन नाङ्गित्वेन कथंचन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ १९ ॥'

'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलंकारवर्गस्याङ्गत्वसाधनम् ॥ २० ॥

---

**इदानीमिति** । हेयवर्ग उक्तः उपादेयवर्गस्तु वक्तव्य इति भावः । **व्यञ्जक इति** । यश्च यथा चेत्यध्याहारः । **यथार्थतामिति** । चारुत्वहेतुतामित्यर्थः । **उक्त इति** । भामहादिभिरलंकारलक्षणकारैः । वक्ष्यते चेत्यत्र हेतुमाह—**अलंकाराणामनन्तत्वादिति** । प्रतिभानन्त्यात् । **कैश्चिदिति** । अन्यैरपि भाविभिरित्यर्थः । समीक्षा इत्यनेन शब्देन कारिकायामुक्तेति भावः । श्लोकपादेषु चतुर्षु श्लोकार्धे चाङ्गत्वसाधनमिदम् । रूपकादेरिति प्रत्येकं संबन्धः । यमलंकारं तदङ्गतया विवक्षति नाङ्गित्वेन यमवसरे गृह्णाति यमवसरे त्यजति यं नात्यन्तं निर्वोढुमिच्छति यं यत्नादङ्गत्वेन प्रत्यवेक्षते स एवमुपनिबध्यमानो रसाभिव्यक्तिहेतुर्भवतीति वितंतं महावाक्यम् । तन्महावाक्यमध्ये चोदाहरणावकाशमुदाहरणस्वरूपं त-

---

१. 'बाह्यालंकारस्याङ्गिनश्च' क-ख. २. 'वा' ग. ३. 'अपि' क ख पुस्तकयोर्नास्ति. ४. 'या चास्य' क, 'यस्य चास्य' ख. ५. 'समीक्षा सा चास्य प्रकाश्यते' क-ख. ६. 'कदाचन' ग.

---

१. 'लक्षण' ग पुस्तके नास्ति. २. 'अनन्तत्वादलंकाराणामिति' क-ख. ३. 'यमकालंकारं प्रसङ्गतया' ग. ४. 'विततवितते' ग.

[1]रसबन्धेष्वत्यादृतमनाः कविर्यमलंकारं तदङ्गतया विवक्षति । यथा—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः[2] ।
करं व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥'

अत्र हि भ्रमरस्वभावोक्तिरलंकारो रसानुगुणः । नाङ्गित्वेनेति[3] प्राधान्येन कदाचिद्रसादितात्पर्येण[4] विवक्षितोऽपि ह्यलंकारः कश्चिदङ्गित्वेन[5] विवक्षितो दृश्यते । यथा—

---

योजनं तत्समर्थनं च निरूपयितुं ग्रन्थान्तरमिति वृत्तिग्रन्थस्य संबन्धः । उदाहरति—**यथेति । चलेति** । हे मधुकर, वयमेवंविधाभिलाषचाटुप्रवणा अपि तत्त्वान्वेषणा[1]द्वस्तुवृत्तेऽन्विष्यमाणे हता आयासमात्रपात्रीभूता जाताः । त्वं खल्विति निपातेनायत्नसिद्धं तवैव चरितार्थत्वमिति शकुन्तलां प्रत्यभिलाषिणो दुष्यन्तस्येयमुक्तिः । त[2]थाहि कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं रहोवचनमाकर्ण्यात्, कथं तु[3] हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवायत्नसिद्धम् । भ्रमरो हि नीलोत्पलधिया तदाशङ्काकातरां दृ[4]ष्टिं पुनःपुनः स्पृशति । श्रवणावकाशपर्यन्तत्वाश्च नेत्रयोरुत्पलशङ्कानपगमात्तत्रैव ध्वन्यमान आस्ते । सहजसौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विकसितारविन्दकुवलयामोदमधुर[5]मधरं पिबतीति । **भ्रमरस्वभावोक्तिरिति** । स्वभावोक्तिरलंकारोऽङ्गतामेव प्रकृतरसस्योपगतः । अन्ये तु भ्रमरस्वभावे उक्तिर्य-

---

१. 'रसबन्धे ध्वन्यध्वन्यादृत' ग. २. 'गतः' क-ख. ३. 'इति' क-ख-पुस्तकयोर्नास्ति. ४. 'केनचित्' क-ख. ५. 'अङ्गित्वेन दृष्टः' क-ख.

---

१. 'इति वस्तु' ग. २. 'तथाहि' ग-पुस्तके नास्ति. ३. 'न' ग- ४. 'दृशं' ग. ५. 'मधुरं' ग-पुस्तके नास्ति.

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासव[१]न्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा रसादितात्पर्ये सत्यपीति । [२]अङ्गित्वेनाविवक्षितमपि य[३]मवसरे गृह्णाति नानवसरे । अवसरे गृहीतिर्यथा—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।

---

स्येति भ्रमरस्वभावोक्तिरत्र रूपकव्यतिरेक इत्याहुः । चक्राभिघात एव प्रसभाज्ञा अलङ्घनीयो नियोगस्तया यो राहुदयितानां रतोत्सवं चुम्बनमात्रशेषं चकार । यत आलिङ्गनमुद्दामं प्रधानं येषु विलासेषु तैर्व[१]न्ध्यः शून्योऽसौ रतोत्सवः । अत्राह कश्चित्—'पर्यायोक्तमेवात्र कवेः प्राधान्येन विवक्षितं न तु रसादि । [२]तत्कथमुच्यते रसादितात्पर्ये सत्यपीति । नैवं, वासुदेवप्रतापो ह्यत्र विवक्षितः । स चात्र चारुत्व-हेतुतया न चकास्ति, अपि तु पर्यायोक्तमेव । यद्यपि चात्र काव्ये न कदाचिद्दो-षाशङ्का तथापि दृष्टं तावदेतत्—यत्प्रकृतस्य पोषणीयस्य स्वरूपतिरस्कारकोऽप्यङ्ग-भूतोऽलंकारः संपद्यते । ततश्च [३]कैश्चिदनौचित्यमागच्छतीत्ययं ग्रन्थकृत आशयः । तथा च ग्रन्थकार एवाग्रे दर्शयिष्यति । महात्मनां [४]दूषणोद्घोषणमात्मन एव दूषणमिति नेदं [५]दूषणोदाहरणं दत्तम् । उद्दामा उद्गताः कलिका यस्याः । उत्कलिकाश्च रुहरुहिकाः । क्षणात्तस्मिन्नेवावसरे प्रारब्धा जृम्भा विकासो यया । जृम्भा च मन्मथकृतोऽङ्गमर्दः । श्वसनोद्गमैर्वसन्तमारुतोल्लासैरात्मनो लतालक्षणस्यायासमाया-सनमान्दोलनयत्नमातन्वतीम् । निःश्वासपरम्पराभिश्चात्मन आयासं हृदयस्थित[६]मा-

---

१. 'शून्यं' क-ख. २. 'अङ्गित्वेना' ग-पुस्तके नास्ति. ३. 'इयमवसरे' क-ख.

---

१. 'वन्ध्यं शून्यं' क-ख. २. 'तत्कथमुच्यते रसादि' क-ख पुस्तकयोर्नास्ति. ३. 'कश्चित्' क-ख. ४. 'दोषोद्भावन' क-ख. ५. 'दोषादि' क-ख. ६. 'संतापं' ग.

अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥'

इत्यत्र श्लेषस्य।

गृहीतमपि च यमवसरे त्यजति तद्रसानुगुणतयालंकारान्तरापेक्षया। यथा—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति। नात्रालंकारद्वयसंनिपातः। किं तर्हि, अलंकारान्तर-

---

तापमातन्वतीं प्रकटीकुर्वाणाम्। सह मदनाख्येन वृक्षविशेषेण मदनेन कामेन च। अत्रोपमाश्लेष ईर्ष्याविप्रलम्भस्य भाविनो मार्गपरिशोधकत्वेन स्थितस्तच्च वर्णाभिमुख्यं कुर्वन्नवसरे रसस्य प्रमुखीभावदशायां पुरःसरायमाणो गृहीत इति भावः। अभिनयोऽप्यत्र प्राकरणिके प्रतिपदम्। अप्राकरणिके तु वाक्यार्थाभिनयेनापाङ्गादिना। न तु सर्वथा नाभिनय इत्यलमवान्तरेण। ध्रुवशब्दश्च भावीर्ष्यावकाशप्रदानजीवितम्। रक्तो लोहितः। अहमपि रक्तः प्रवृद्धानुरागः। तत्र च प्रबोधको विभावस्त्वदीयपल्लवराग इति मन्तव्यम्। एवं प्रतिपादमाद्योऽर्थोऽङ्गिभावत्वेन व्याख्येयः। अत एव हेतुश्लेषोऽयम्। सहोक्त्युपमाहेत्वलंकाराणां हि भूयसा श्लेषानुग्राहकत्वम्। अनेनैवाभिप्रायेण भामहः—'अन्यरूपं यत्तत्सहोक्त्युपमाहेतुनिर्देशात्त्रिविधम्' इत्युक्त्वा 'न त्वन्यालंकारानुग्रहनिराचिकीर्षया······'। रसविशेषमिति विप्रलम्भम्। सशोकशब्देन व्यतिरेकमानयतां शोकसहभूतानां निर्वेदचिन्तादीनां व्यभिचारिणां विप्रलम्भपरिपोषकाणामवकाशो दत्तः। किं तर्हीति।

१. 'तथा' ग.
२. 'प्रधान' क-ख.

मेव श्लेषव्यतिरेकलक्षणं नरसिंहवदिति चेत्, न । तस्य प्रकारान्तरेण व्यवस्थापनात् । यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते स तस्य विषयः । यथा—'स हरिर्नाम्ना देवः सहरिर्वरतुरगनिवहेन' इत्यादौ । अत्र ह्यन्य एव शब्दश्लेषस्य विषयोऽन्यश्च व्यतिरेकस्य । यदि चैवंविधे विषयेऽलंकारान्तरत्वकल्पना क्रियते तत्संसृष्टेर्विषयापहार एव स्यात् । श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेत्, न । व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात् । यथा—

---

संकरालंकार एवायम् । तत्र किं त्यक्तं किंवा गृहीतमिति परस्याभिप्रायः । तस्येति संकरस्य । एकत्र हि विषयेऽलंकारद्वये प्रतिभोल्लासः संकरः । सहरिशब्द एको विषयः । सह हरिः सहरिः । यदि वा सह हरिभिः सहरिरिति । **अत्र हीति ।** श्लेषोऽन्यो व्यतिरेकस्य । हिशब्दस्तुशब्दस्यार्थे । रक्तस्त्वमित्यत्रेत्यर्थः । अन्य इति रक्तेत्यादयः । अन्यश्चेत्यशोकसशोकादयः । नन्वेकं वाक्यात्मकं विषयमाश्रित्यैकविषयत्वादस्तु संकर इत्याशङ्क्याह—**यदीति ।** एवंविधे वाक्यलक्षणे विषये विषय इत्येकत्वं विवक्षितं बोध्यम् । एकवाक्यापेक्षया यद्येकविषयत्वमुच्यते तत्र क्वचित्संसृष्टिः स्यात् । संकरेण व्याप्तत्वात् । ननूपमागर्भो व्यतिरेकः । उपमा च श्लेषमुखेनैवायातेति श्लेषोऽत्र व्यतिरेकस्यानुग्राहक इति संकरस्यैवैकविषयः । यत्र त्वनुग्राह्यानुग्राहकभवो नास्ति तत्रैकवाक्यगामित्वेऽपि संसृष्टिरेव । तदेतदाह—**श्लेषेति ।** श्लेषबलानीतोपमामुखेनेत्यर्थः । एतत्परिहरति—**नेति ।** अयं भावः—किं सर्वत्रोपमायाः स्वशब्देनाभिधाने व्यतिरेको भवत्युत गम्यमानत्वे । तत्राद्यं पक्षं दूषयति—**प्रकारान्तरेणेति ।** उपमाभिधानेन विनापीत्यर्थः । एतदेवोदा-

---

१. 'क्रियते' क-ख. २. 'शब्दः' क. ३. 'क्रियेत ततः संसृष्टेर्विषयापरभार एव' ग.

---

१. 'वक्तव्यं' क-ख. २. 'अलंकारान्तरद्वये' ग. ३. 'सह हरिः सहरिः' ख-क-पुस्तकयोर्नास्ति. ४. 'हीति श्लेषोऽन्यो व्यतिरेकस्य' ग-पुस्तके नास्ति. ५. 'अन्यश्चेत्यशोकसशोकादयः' क-ख-पुस्तकयोर्नास्ति. ६. 'बोद्धव्यम्' क-ख. ७. 'इष्टविषयः' ग.

'नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥'

अत्र हि साम्यप्रपञ्चप्रतिपादनं[1] विनैव व्यतिरेको दर्शितः । नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वम्[2], न स्वतोऽलंकारत्वेनेत्यपि[3] न वाच्यम् । यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव । यथा—

'आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।

हरति—(**नो कल्पेति** ।) शम्या शमयितुं शक्येत्यर्थः । दीपवर्तिस्तु वायुमात्रेण शमयितुं शक्यते । तम एव कज्जलं तेन नो रहिता अपि तु रहितैव । दीपवर्तिस्तु तमसापि युक्ता भवति । अन्ततः[1] प्रकृष्टत्वात्कज्जलेनोपरिचरेण । पतङ्गादर्कात् । दीपवर्तिः पुनः शलभाद्ध्वंसते नोत्पद्यते । **साम्येति** । साम्यस्योपमायाः प्रपञ्चेन प्रबन्धेन यत्प्रतिपादनं स्वशब्देन तेन विनापीत्यर्थः । एतदुक्तं भवति—प्रतीयमानैवोपमा[2] व्यतिरेकस्यानुग्राहिणी भवन्ती नाभिधानं स्वकण्ठेनापेक्षते तस्मान्न श्लेषोपमा व्यतिरेकानुग्राहित्वेनोपात्ता । ननु यद्यप्यत्र[3] नैवं तथापीह तत्प्रावण्येनैव सोपात्ता । तदप्रावण्ये स्वयं चारुत्वहेतुत्वाभावादिति । श्लेषोपमात्र पृथगलंकारभावमेव न भजते । तदाह—**नात्रेति** । एतदसिद्धं स्वसंवेदनबाधितत्वादिति हृदये गृहीत्वा स्वसंवेदनमपह्नुवानं परं श्लेषं[4] विनोपमामात्रेण चारुत्वसंपन्नमुदाहरणान्तरं दर्शयन्निरुत्तरीकरोति—**यत इत्यादिना** । उदाहरणश्लोके तृतीयान्तपदेषु तुल्यशब्दोऽभिसंबन्धनीयः । अन्यत्सर्वं 'रक्तस्त्वं' इतिवद्योज्यम् ।

१. 'प्रतिपादनप्रपञ्चं' ग. २. 'विवक्षितत्वात्' ग. ३. 'अलंकारतेति' ग.

१. 'अल[illegible]' क-ख. २. '[illegible]मानोपमा' ग. ३. 'यद्यप्यत्रैव तथा' ग. ४. 'श्लेषोपमामात्रेण' क-ख.

अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥'

इत्यादौ रसनिर्वहणैकतानहृदयश्च ।

यो यं च नात्यन्तं निर्वोढुमिच्छति यथा—

'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥'

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढं च । परं रसपुष्टये निर्वोढुमिष्टमपि यद्यत्नादङ्गत्वेन प्रत्यवेक्ष्यते यथा—

'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।

---

एवं ग्रहणत्यागौ समर्थ्य 'नातिनिर्वहणैषिता' इति भागं व्याचष्टे—**रसेति**। चकारः समीक्षाप्रकारसमुच्चयार्थः । बाहुलतिकायाः पाशत्वेन रूपणं यदि निर्वाहयेत् दयिता व्याधवधूः वासगृहं कारागारपञ्जरादीति परमनौचित्यं स्यात् । सखीनां पुर इति भवत्यो ऽनवरतं ब्रुवते नायमेवं करोतीति तत्पश्यन्त्विदानीमिति भावः । स्खलन्ती कोपावेशेन कला मधुरा गीर्यस्याः सा । कासौ गीरित्याह—भूयो नैवमित्येवंरूपा । एवमिति यदुक्तं तत्किमित्याह—दुश्चेष्टितं नखपदादिसंसूच्याङ्गुल्यादिनिर्देशेन । हन्यत एवेति न तु सौख्यादिकृतोऽनुनयोऽनुरुध्यते । यतोऽसौ हसनं निमित्तीकृत्य निह्नुतिपरः प्रियतमश्च । तदीयं व्यलीकं का सोढुं समर्थेति । **निर्वोढुमिति** । निःशेषेण परिसमापयितुमित्यर्थः । (**श्यामास्विति** ।) श्यामासु सुगन्धिप्रियङ्गुलतासु । पाण्डिम्ना तनिम्ना कण्टकितत्वेन च योगात् । शशिनीति

---

१. 'हृदयो यश्च नात्यन्तं' ग. २. 'अनिर्व्यूढः' ग. ३. 'संपरिपुष्टये' ग. ४. 'यं यत्नात्' क-ख. ५. 'हरिण' क-ख. ६. 'वक्र' ग.

---

१. 'इत्यर्थः' क-ख. २. 'श्यामास्विति' ग.

उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥'

इत्यादौ स एवमुपनिबध्यमानोऽलंकारो रसाभिव्यक्तिहेतुः कवेर्भवति। उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः संपद्यते । लक्ष्यं च तथाविधमपि महाकविप्रबन्धेषु दृश्यते बहुशः। तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम् । किं तु रूपकादेरलंकारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये लक्षणादिग्दर्शिता तामनुसरन्स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रमपतितमनन्तरोक्तमेवं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेतास्तदस्यात्मलाभो भवति महीयानिति ।

---

पाण्डुरत्वात् । उत्पश्यामीति यत्नेनोत्प्रेक्षे । जीवितसंधारणायेत्यर्थः । हन्तेति कष्टम् । एकस्य सादृश्याभावे हि दोलायमानोऽहं सर्वत्र स्थितो न कुत्रचिदेकत्र धृतिं लभे इति भावः । भीर्विते । यो हि कातरहृदयो भवति नासौ सर्वस्वमेकस्थं धारयतीत्यर्थः । अत्र ह्युत्प्रेक्षायास्तद्भावाध्यारोपरूपाया अनुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भरसपोषकमेव जातम् । तत्तु लक्ष्यं न प्रदर्शितमिति संबन्धः । प्रत्युदाहरणे ह्यदर्शितेऽप्युदाहरणानुशीलनदशाकृत- ......ति दर्शयति—**किं त्विति । अन्यल्लक्षणमिति ।** परीक्षाप्रकारमित्यर्थः । तद्यथावसरे त्यक्तस्यापि पुनर्ग्रहणमित्यादि । यथा ममैव—'शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं संप्लुष्यन्त्यथ ते) कालकूटपटलीसंवाससंदूषिताः। किं प्राणान्न हरन्त्युत प्रियतमासंजल्पमन्त्राक्षरै रक्षन्ते किमु मोहमेमि हहहा नो वेद्मि केयं गतिः ॥' इत्यत्र हि रूपकसंदेहनिदर्शनास्त्यक्त्वा पुनरुपात्ता रसपरिपोषायेत्यलम् । एवं विवक्षितान्यपरवाच्यध्वनेः प्रथमं भेदमलक्ष्यक्रमं विचार्य

---

१. 'चण्डि' ग. २. 'महतां' क-ख. ३. 'व्यञ्जकत्वेन' क-ख. ४. 'क्रमं प्रतिभम-' ख, 'क्रमप्रतिभम-' ग. ५. 'एनं' ग. ६. 'तस्यात्म' ग.

---

१. 'एकस्य' क-ख. २. 'वृत्ति' क-ख. ३. 'तद्भद्भावव्यापाररूपायाः' क-ख. ४. 'रसापेक्ष' ग. ५. 'कस्तु' — 'किं त्विति' क-ख-पुस्तकयोर्नास्ति. ६. 'संवादसंरूपिताः' ग. ७. 'उक्त्वा' क-ख.

'क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसंनिभः ।
शब्दार्थशक्तिमूलत्वात्सोऽपि द्वेधा व्यवस्थितः ॥ २१ ॥'

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः स क्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः ।

ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्, नापहृत इत्याह—

'आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥२२॥'

यस्मादलंकारो न वस्तुमात्रं यस्मिन्काव्ये शब्दशक्त्या प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितः[1] । वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः । यथा—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजंगहारवलयो गङ्गां च योऽधारयत् ।

---

द्वितीयं भेदं विभक्तुमाह—**क्रमेणेत्यादि** । प्रथमपादोऽनुवादभागो हेतुत्वेनोपात्तः । घण्टाया अनुरणनमभिघातजशब्दापेक्षया[1] क्रमेणैव भाति । **सोऽपीति** । न केवलं मूलतो ध्वनिर्द्विविधः[2] । नापि केवलं विवक्षितान्यपरवाच्यो द्विविधः[3] । अयमपि द्विविध एवेत्यपिशब्दार्थः । विवृणोति—**अस्येत्यादिना**[4] । कारिकागतं हिशब्दं व्याचष्टे—**यस्मादिति** । अलंकारशब्दस्य व्यवच्छेद्यं दर्शयति[5]—**न वस्तुमात्रमिति** । **वस्तुद्वये चेति**[6] । चशब्दस्तुशब्दस्यार्थे ।

**येनेति** । येन ध्वस्तं बालक्रीडायामनः शकटम् । अभवेनाजेन सता । बलिनो दानवान्यो जयति तादृग्येन कायो वपुः पुराऽमृतहरणकाले स्त्रीत्वं प्रापितः । यश्चो-

---

१. 'विवक्षितम्' ग.

---

१. 'रणनमेवं' ग. २. 'ध्वनेर्द्विभेदः' ग. ३. 'ध्वनिनापि केवलमविवक्षितवाच्यो द्विविधः' क-ख. ४. 'विवृणोति—अस्येत्यादिना' ग-पुस्तके नास्ति. ५. 'दर्शयति' क-ख-पुस्तकयोर्नास्ति. ६. 'वस्तुद्वये चेति' क-ख-पुस्तकयोर्नास्ति.

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

नन्वलंकारान्तरप्रतिभायामपि श्लेषव्यपदेशो[1] भवतीति दर्शितं भट्टोद्भटेन तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश[2] इत्याशङ्क्येदमुक्तं 'आक्षिप्तः' इति । तदयमर्थः—यत्र शब्दशक्त्या साक्षादलंकारं वाच्यं सत्प्रतिभासते स सर्वः श्लेषविषयः[3] । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालंकारान्तरं[4] प्रकाशते स ध्वनेर्विषयः । शब्दशक्त्या साक्षादलंकारान्तरप्रतिभा यथा—

---

द्वृत्तं समदं कालियाख्यं भुजंगं हतवान् । रवे शब्दे लयो यस्य । 'अकारो विष्णुः' इत्युक्तेः । यश्चागं गोवर्धनपर्वतं गां च भूमिं पातालगतामधारयत् । यस्य च नाम स्तुत्यमृषय आहुः । किं तत् । शशिनं मथ्नातीति क्विप् । राहुः । तस्य शिरोहरो मूर्धापहारकः । स त्वां माधवो विष्णुः सर्वदः पायात् । कीदृक् । अन्धकनाम्नां जनानां येन[2] क्षयो निवासो द्वारकायां कृतः । यदि वा मौसले इषीकाभिस्तेषां क्षयो विनाशो येन कृतः । द्वितीयोऽर्थः—येन ध्वस्तकामेन सता बलिजितो विष्णोः संबन्धी कायः पुरा त्रिपुरनिर्दहनावसरे[3]ऽस्त्रीकृतः शरत्वं नीतः । उद्वृत्ता भुजंगा एव हारा वलयानि च यस्य । मन्दाकिनीं च योऽधारयत् । यस्य च ऋषयः शशिमच्चन्द्रयुक्तं शिर आहुः । हरः इति च[4] नाम स्तुत्यमाहुः । स भगवान्स्वयमेवान्धकासुरस्य विनाशकारी त्वां सर्वदा सर्वकालमुमाया धवो वल्लभः पायादिति । अत्र वस्तुमात्रं द्वितीयं प्रतीतं नालंकार इति श्लेषस्यैव विषयः । आक्षिप्तशब्दस्य कारिकागतस्य व्यवच्छेद्यं दर्शयितुं चोद्येनोपक्रमते—**नन्वलंकारेत्यादिना** । तस्या

---

१. 'श्लेषस्य व्यपदेश इति' क ख. २. 'निरवकाशः' ग पुस्तके नास्ति. ३. 'श्लेषः' क ख. ४. 'अव्यङ्ग्यं' ग.

---

१. 'शशिमत् । शशिनं' ग. २. 'येन स्वयं द्वारकाख्यः क्षयो निवासः कृतः' ग. ३. 'संमर्दनावसरे' ग. ४. 'च नाम स्तुत्यमाहुः' ग. ५. 'उमावल्लभः' क-ख. ६. 'चोपक्रमते' क-ख.

'तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥'

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालंकारश्च प्रतिभासत[1] इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः । अलक्ष्यक्रमव्यङ्ग्यप्रतिभासस्य[2] तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव । यथा ममैव—

'श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दध-
त्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥'

---

विनापीति । अपिशब्दोऽयं विरोधमाचक्षाणोऽर्थद्वयेऽप्यभिधाशक्तिं नियच्छति । हरतो हृदयम्[1]वश्यमिति हारिणौ । हारो विद्यते ययोस्तौ हारिणाविति । अत एव विस्मयशब्दस्यैवार्थस्योपोद्बलकः । अपिशब्दाभावे तु तत्रै[2]वार्थद्वयाभिधा स्यात् । स्वसौन्दर्यादेव स्तनयोर्विस्मयहेतुत्वोपपत्तेः । विस्मयाख्यो भाव इति दृष्टान्ताभिप्रायेणोपात्तम् । यथा विस्मयः शब्देन प्रतिभाति । विस्मय इत्यनेन श[3]ब्देन तथा विरोधोऽपि प्रतिभात्यपीत्यनेन शब्देन । ननु किं सर्वथात्र ध्वनिर्नास्तीत्याशङ्क्याह—**अलक्ष्येति । विरोधेन वेति ।** वाग्रहणेन श्लेषविरोधसंकरालंकारोऽयमिति दर्शयति । अनुग्रहयोगादेकतरत्यागग्रहणनिमित्ताभावो हि वाशब्देन सूच्यते । सुदर्शनं चक्रं करे यस्य । व्यतिरेकपक्षे सुदर्शनौ श्लाघ्यौ करावेव यस्य चरणार-

---

१. 'भातीति' क-ख. २. 'क्रमप्रतिभस्य' ग.

---

१. 'अवश्यं' क-ख-पुस्तकयोर्नास्ति. २. 'न तत एव' क-ख. ३. 'शब्देन' क-ख-पुस्तकयोर्नास्ति.

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते[1]। यथा च—

'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्[2]।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥'

यथा वा—

'चमहिअमाणसकञ्चणपङ्कअणिम्महिअपरिमला जस्स[3]।
अखण्डिअदाणपसारा बाहुप्पलिहा व्विअ गइन्दा ॥'

अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते।

स चाक्षिप्तोऽलंकारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपस्तत्र शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः। तत्र वक्रोक्त्यादिवाच्यालंकारव्यवहार एव। यथा—

---

विन्दस्य ललितं त्रिभुवनाक्रमणक्रीडा। चन्द्ररूपं चक्षुर्धारयन्। **वाच्यतयैवेति**। स्वतनोरपश्यदधिकामिति शब्देन व्यतिरेकस्योक्तत्वात्। भुजगशब्दार्थपर्यालोचनाबलादेव विषशब्दो जलमभिधायापि न विरन्तुमुत्सहते। अपि तु द्वितीयमर्थं हालाहललक्षणमाह। तदभिधानेन विनाभिधाया एवासमाप्तत्वात्। भ्रमिप्रभृतीनां तु मरणान्तानां साधारण एवार्थः। **(चमहीति।)** निराशीकृतत्वेन खण्डितानि यानि मानसानि शत्रुहृदयानि तान्येव काञ्चनपङ्कजानि। सुसारत्वात्। तैर्हेतुभूतैः। णिम्महिअपरिमला इति प्रसृतप्रतापसारा अखण्डितवितरणप्रसरा बाहुपरिघा एव यस्य। गजेन्द्रा इति। गजेन्द्रशब्दवशाचमहिअशब्दः परिमलशब्दो दानशब्दश्च त्रोटनसौरभमर्दलक्षणानर्थान्प्रतिपाद्यापि न परिसमाप्ताभिधाव्यापारा भवन्तीत्युक्तरूपं द्वितीयमप्यर्थमभिदधत्येव। एवमाक्षिप्तशब्दस्य व्यवच्छेद्यं प्रदर्श्यैवकारस्य व्यवच्छेद्यं दर्शयितुमाह—**स चेति**। उभयार्थप्रतिपादनशक्तशब्दप्रयोगे, यत्र तावदेकतरविषयनियमनकारणमभिधाया नास्ति यथा 'येन ध्वस्तमनोभवेन' इति।

---

१. 'प्रतीयत एव' क-ख. २. 'सादं च' क-ख. ३. '......मानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य। अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्राः॥' इति छाया.



---

१. 'पदावलोचना' क-ख. २. विश्राणन' क-ख.

'दृष्ट्या केशव गोपरागहृतया किंचिन्न दृष्टं मया
तेनैव स्खलितास्मि नाथ पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥'

---

यत्र वा प्रत्युत द्वितीयाभिधाव्यापारसद्भावावेदकं प्रमाणमस्ति यथा 'तस्या विना-' इत्यादौ । 'चमहिअ' इत्यत्र तावत्सोऽर्थोऽभिधेय एवेति स्फुटमध्यः । यत्राभिधाया एकत्र नियमहेतुः प्रकरणादिर्विद्यते तेन द्वितीयस्मिन्नर्थे नाभिधा संक्रामति तत्र द्वितीयोऽर्थोऽसावाक्षिप्त इत्युच्यते । तत्रापि यदि पुनस्तादृक्शब्दो विद्यते येनासौ नियामकः प्रकरणादिरपहृतशक्तिकः संपद्यते । अत एव साऽभिधाशक्तिर्बाधितापि सती प्रतिप्रसूतेव तत्रापि न ध्वनेर्विषय इति तात्पर्यम् । चशब्दोऽपिशब्दार्थे भिन्नक्रमः । आक्षिप्तोऽप्याक्षिप्ततया झगिति संभावयितुमारब्धोऽपीत्यर्थः । न त्वसावाक्षिप्तः किं तु शब्दान्तरेणान्येनाभिधायाः प्रतिप्रसवनादभिहितस्वरूपः संपन्नः । पुनर्ग्रहणेन प्रतिप्रसवं व्याख्यातुं सूचयति । तेनैवकार आक्षिप्ताभासं निराकरोतीत्यर्थः । हे केशव, यतो गोधूलिर्हृतया दृष्ट्या न किंचिद्दृष्टं मया तेन कारणेन स्खलितास्मि । मार्गे तां पतितां सतीं मां किं नाम कः खलु हेतुर्यन्नालम्बसे हस्तेन । यतस्त्वमेवैकोऽतिशयेन बलवान्निम्नोन्नतेषु सर्वेषामबलानां बालवृद्धाङ्गनादीनां खिन्नमनसां गन्तुमशक्नुवतां गतिरालम्बनाद्युपाय इत्येवंविधेऽर्थे यद्यप्येते प्रकरणेन नियन्त्रिताभिधाशक्तयः शब्दास्तथापि द्वितीयेऽर्थे व्याख्यास्यमानेऽभिधाशक्तिर्निरुद्धा सती सलेशमित्यनेन प्रत्युज्जीविता । अत्र सलेशं ससूचनमित्यर्थः । अल्पीभवनं हि सूचनमेव । हे केशवगोप स्वामिन्, रागहृतया दृष्ट्येति वा संबन्धः । स्खलितास्मि खण्डितचरित्रा जातास्मि । पतितामिति भर्तृभावं मां

---

१. 'हतया' ग.

---

१. 'यत्र च न' ग. २. '···मिन्द्रियेत्यन्तेन तत्सर्वथा सोर्थो' ग. ३. 'एकतरत्र' क-ख. ४. 'अपाहित—संपाद्यते' ग. ५. 'बाधिका नापि' ग. ६. 'प्रतिसूतेव' क-ख. ७. 'अक्षिप्तक्रमोऽपि' क-ख. ८. 'हृतया' ग. ९. 'खिन्नमनसां' ग-पुस्तके नास्ति. १०. 'निरुध्यमानापि' क-ख.

एवंजातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषयः। यत्र तु सामर्थ्याक्षिप्तं सदलंकारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः। यथा—

'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।'

यथा च—

'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
पयोधरभरस्तन्व्याः[2] कं न चक्रेऽभिलाषिणम्॥'

---

प्रति। एक इत्यसाधारणसौभाग्यशाली त्वमेव। यतः सर्वासामबलानां मदनविधुरमनसामीर्ष्याकालुष्यनिरासेन सेव्यमानः सन्गतिः। जीवितरक्षोपाय इत्यर्थः। एवं श्लेषालंकारस्य विषयमवस्थाप्य ध्वनेराह—**यत्र त्विति**। कुसुमसमयात्मकं यद्युगं मासद्वयं तदुपसंहरन्। धवलानि हृद्यान्यट्टान्यापणा येन तादृक् फुल्लमल्लिकानां हासो विकसनमिति स यत्र। फुल्लमल्लिका एव धवलाट्टहासोऽस्येति तु व्याख्याने 'जलदभुजगजं' इत्येतत्तुल्यमेतत्स्यात्। महांश्चासौ दिनदैर्घ्यदुरतिवाहतया योगात्कालः समयः। अत्र ऋतुवर्णनप्रस्तावनियन्त्रिता अभिधाशक्तयः। अत एव 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो[1] महाकालप्रभृतयः शब्दा एकमेवार्थमभिधाय कृतकृत्या एव। तदनन्तरमर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात्। तत्र केचिन्मन्यन्ते—'यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्तथाविधेऽर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यात्मत्वं[2] चेत्यविरुद्धम्'। अन्ये तु—'साभिधैव द्वितीयार्थसामर्थ्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते' इति। एके तु—'शब्दश्लेषे तावद्भेदे सति शब्दार्थश्लेषेऽपि शक्तिभेदा-

---

१. हर्षचरिते द्वितीयोच्छ्वासे गद्यमेतत्. २. 'तन्वाः' ग.



---

१. 'न्यायमपाकुर्वन्तो' क-ख. २. 'व्यङ्ग्यत्वं' क-ख.

यथा वा—

'[1]दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
　पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
　गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥'

[2]एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासं[3]बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादि[4]त्यर्थाक्षिप्तोऽयं श्लेषो न

---

च्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिदभिधाव्यापारात् यथोभयोत्तरदानाय 'श्वेतो धावति' इति प्रश्नोत्तरादौ वा । तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात्प्रतीयमानमेव युक्तम्' इति । इतरे तु—'द्वितीयपक्षव्याख्यातं यदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिसूयते ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यते तदनन्तरं तु तस्य द्वितीयार्थश्च प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा तावद्भात्येव न चान्यतः शब्दादिति सा ध्वननव्यापारात् । तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात् । तस्यां च द्वितीया शब्दशक्तिर्मूलम् । तया विना तस्या रूपणाया अनुत्थानात् । अत एवालंकारध्वनिरयमिति युक्तम् । वक्ष्यते च 'असंबद्धार्थाभिधायित्वं मा प्रसाङ्क्षीत्' इत्यादि । पूर्वत्र तु सलेशपदेनैवासंबद्धता निराकृता । 'येन ध्वस्त–' इत्यत्रासंबद्धता नैव भाति । 'तस्या विनापि–' इत्यत्रापिशब्देन 'श्लाघ्या–' इत्यत्राधिकशब्देन 'भ्रमिं–' इत्यादौ च रूपकेणासंबद्धता निराकृतेति तात्पर्यम् । पयोभिरिति पानीयैः क्षीरैश्च । संहारो ध्वंसः, एकत्र ढौकनं च । गावो रश्मयः सुरभय इव । **असंबद्धार्थाभिधायित्वमिति** । असंबध्यमानमेवेत्यर्थः । **उपमानोपमेयभाव इति** । तेनोपमारूपेण व्यतिरेचननिह्नवादयो व्यापारमात्ररूपा एवात्रास्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं न तूपमेयादीति सर्वत्रालंकारध्वनौ मन्तव्यम् । **सामर्थ्यादिति** ।

---

**१. सूर्यशतकस्थं पद्यम्. २. 'एतेषु' क-ख. ३. 'संबन्धा' ग. ४. 'इत्याक्षिप्तोऽयं क-ख.**

शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः । अन्येऽपि चालंकाराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ संभवन्त्येव । तथाहि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते[1] । यथा स्थाण्वीश्वराख्यजनपदवर्णने भट्टबाणस्य—

'[2]यत्र च मत्तमातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च (चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च अभुजंगगम्याः कञ्चुकिन्यश्च पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च लावण्यवत्यो मधुरभाषिण्यश्च अप्रमत्ताः प्रसन्नोज्वलरागाश्च अकौतुकाः प्रौढाश्च) प्रमदाः ।

अत्र हि वाच्यो विरोध[3]स्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम् । साक्षाच्छब्देन विरोधालंकारस्याप्रकाशितत्वात् । यत्र हि साक्षा[4]च्छब्दावेदितो विरोधालंकारस्तत्र हि श्लिष्टोक्तौ वाच्यालंकारस्य विरोधस्य श्लेषस्य वा विषयत्वम् । यथा हर्ष[5]चरिते—

'समवाय इव विरोधिनां पदार्थानाम् । तथाहि—संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ ।

---

ध्वननव्यापारादित्यर्थः । **मत्तमातङ्गेति** । मत्तमातङ्गवद्गच्छन्ति तांश्च[1] गच्छन्तीति विरोधः । विभवेषु रता विभवमहादेवस्थानेषु (?) स्थिताः । पद्मरागरत्नयुक्ताः पद्मसदृशलौहित्ययुक्ताश्च । धवलैर्द्विजैर्दन्तैः शुचि निर्मलं वदनं यासां धवलद्विज[2]वदुत्कृष्टविप्रवच्छुचि वदनं यासां । **यत्र हीति** । यस्यां श्लेषोक्तौ काव्यरूपायां तत्र यो विरोधः श्लेषो वेति संकरः । तस्य विषयत्वं । स विषयोऽत्र भवतीत्यर्थः । [3]तत्रैव विरोधश्लेषे वाच्यालंकारत्वं सुवचमिति यावत् । उदाहरति—**समेति** । वालेषु के-

१. 'दृश्यत एव' क-ख. २. हर्षचरिते तृतीयोच्छ्वासे गद्यमेतत्. ३. 'विरोधच्छाया' क-ख. ४. 'शब्दनिवेदितो' क-ख. ५. प्रथमोच्छ्वासे.

१. 'मात[illegible]' ग. [illegible] इति' क-ख. पुस्तकयोर्नास्ति. ३. 'तस्य वाच्यालंकारस्य वाच्यालंकृतेरलंकारत्वं' ग.

यथा वा ममैव—

'सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥'

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते । एवंविधो व्यतिरेकोऽपि दृश्यते । यथा ममैव—

'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥'

एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सन्ति ते सहृदयैः स्वयमनुसर्तव्याः । इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः ।

---

शेष्वन्धकारः कार्ष्ण्यं । बालः प्रलम्बश्चान्धकारस्तमः । ननु मातङ्गेत्यादावपि धर्मद्वये यश्चकारः स विरोधद्योतक एव । अन्यथा प्रतिधर्मं सर्वधर्मान्ते वा न क्वचिच्चकारः स्यात् । यदि समुच्चयार्थः स्यादित्यभिप्रायेणोदाहरणान्तरमाह—**यथेति** । शरणं गृहमक्षयरूपमगृहं कथम् । यो न धीशः स कथं धियामीशः । यो हरिः कपिलः स कथं कृष्णः । चतुरः पराक्रमयुक्तो यस्यात्मा स कथं निष्क्रियः । अरीणामरयुक्तानां यो नाशयिता स कथं चक्रं बहुमानेन धारयति । **विरोध इति** । विरोधनमित्यर्थः । **प्रतीयत इति** । स्फुटं नोच्यते केनचिदिति भावः । नखैरुद्भास्यन्ते अवश्यं खे गगने उद्भासन्ते । उभये रश्म्यात्मानोऽङ्गुलीपार्ष्ण्याद्यवयवरूपाश्चेत्यर्थः । एवं शब्दशक्त्युद्भवं ध्वनिमुक्त्वार्थशक्त्युद्भवं दर्शयति—**अर्थेति** । अन्य इति शब्द-

---

१. 'एवं विरोधव्यतिरेकेऽपि' क-ख. २. 'मूर्धनि' ग. ३. 'श्रियै' ग. ४. 'नः' क-ख. ५. 'रूपा ध्वनिप्रकाराः' क-ख. ६. 'संभवन्ति' क-ख. ७. 'तत्' क-ख-पुस्तकयोर्नास्ति.

---

१. 'चमत्कारः' क-ख. २. 'चमत्कारो यदि' क-ख. ३. 'उद्भासन्ते' ग. ४. 'स्पष्टशब्द' क-ख. ५. 'व्याख्याय द्वितीयं निरूपयितुमाह—' ग.

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः संप्रकाशते ।**
**यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः ॥ २३ ॥**

यथार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः ।

यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥'

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति । न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः । यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः स तस्य केवलस्य मार्गः ।

---

शक्त्युद्भवात् । स्वतस्तात्पर्येणेत्यभिधाव्यापारनिराकरणपरमिदं ध्वननव्यापारमाह न तु तात्पर्यशक्तिम् । सा हि वाच्यार्थप्रतीतावेवोपक्षीणेत्युक्तं प्राक् । अनेनैवाशयेन वृत्तौ व्याचष्टे—**यत्रार्थः स्वसामर्थ्यादिति** । स्वत इति शब्दः स्वशब्देन व्याख्यातः । उक्तिं विनेति व्याचष्टे—शब्दव्यापारं विनैवेति । उदाहरति—**यथा एवमिति** । अर्थान्तरमिति लज्जात्मकम् । **साक्षादिति** । व्यभिचारिणो यत्रालक्ष्यक्रमतया व्यवधिवन्ध्यैव प्रतिपत्तिः संबन्धीत्येव स्वविभावादिबलात्तत्र साक्षाच्छब्दनिवेदितत्वं विवक्षितमिति न पूर्वापरविरोधः । पूर्वं ह्युक्तं व्यभिचारिणां विभावत्वान्न स्वशब्दतः प्रतिपत्तिरित्यादि विस्तरतः । एतदुक्तं भवति—यद्यपि रसभावादि-

---

१. 'ध्वनति' ग.

---

२. 'प्रतीतां वोप—' क-ख. २. 'उदाहरति यथा—एवमिति' ग-पुस्तके नास्ति. ३. 'प्रतिप[illegible]' क, 'अपि भावत्वाद' ख. ५. 'शब्दतः' क-ख.

यथा कुमारसंभवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसंधानपर्यन्तं शंभोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि साक्षाच्छब्दनिवेदितम्। इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः। तस्मादयमन्यो ध्वनेः प्रकारः। यत्र च शब्द-

---

र्थो ध्वन्यः मान एव भवति न वाच्यः कदाचिदपि तथापि न सर्वो लक्ष्यक्रमस्य विषयः। यत्र हि विभावानुभावेभ्यः स्थायिगतेभ्यो व्यभिचारिगतेभ्यश्च पूर्णेभ्यो झटित्येव रसव्यक्तिस्तत्रास्त्वलक्ष्यक्रमः। यथा—'निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन। अनुप्रयाता वनदेवताभिरदृश्यत स्थावरराजकन्या ॥' इत्यादौ संपूर्णालम्बनोद्दीपनविभावतायोग्यस्वभाववर्णनम्। 'प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च। संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥' इत्यनेन विभावतयोपयोग उक्तः। 'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः। उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥' अत्र हि भगवत्याः प्रथममेव तत्प्रवणत्वात्तस्य चेदानीं तदुन्मुखीभूतत्वात्प्रणयिप्रियतया च पक्षपातस्य सूचितस्य गाढीभावाद्रत्यात्मनः स्थायिभावस्यौत्सुक्यावेगचापल्यहर्षादेश्च व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशित इति विभावानुभावचर्वणैव व्यभिचारिचर्वणायां पर्यवस्यति। व्यभिचारिणां पारतन्त्र्यादेव स्रक्सूत्रकल्पस्थायिचर्वणाविश्रान्तेरलक्ष्यक्रमत्वम्। इह तु पद्मदलगणनमधोमुखत्वं चान्यथापि कुमारीणां संभाव्यत इति झटिति न लज्जायां विश्रमयति हृदयमपि तु प्राग्वृत्ततपश्चार्यादिवृत्तान्तानुसरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव। रसस्त्वत्रापि दूर एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षया लक्ष्यक्रमतैव। लज्जापेक्षया तु तत्र लक्ष्यक्रमत्वम्। अमुमेव भावमेवशब्दः केवलशब्दश्च सूचयति। उक्तिं विनेति यदुक्तं तद्व्यवच्छेद्यं दर्शयितुमुपक्रमते—**यत्र चेति**।

---

१. 'निवेशितेभ्यः' क-ख.

---

१. 'भवति' ग-पुस्तके नास्ति. २. 'तथा न' क-ख. ३. 'पूर्वं' ग. ४. 'पर्यवस्यन्ती' क-ख. ५. 'अत्रातिदूर' क-ख. ६. 'नालक्ष्यक्रमत्वम्' क-ख. ७. 'तदवच्छेदं' ग.

व्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषयः । यथा—

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम् ।

तथा च—

**शब्दार्थशक्त्या वाक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः ।**
**यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥ २४ ॥**

शब्दशक्त्यार्थशक्त्या शब्दार्थशक्त्या वाक्षिप्तोऽपि व्यङ्ग्योऽर्थः

---

चशब्दस्तुशब्दस्यार्थे । **अस्येति** । अलक्ष्यक्रमस्तु तत्रापि स्यादेवेति भावः । उदा[1]हरति—**संकेतेति । व्यञ्जकत्वमिति** । प्रदोषसमयं प्रतीति शेषः । **उक्त्यैवेति** । आद्यपादत्रयेणेत्यर्थः । यद्यपि चात्र शब्दान्तरसंनिधानेऽपि प्रदोषार्थं प्रति न कस्यचिदभिधानशक्तिः पदस्येति व्यञ्जकत्वं न विघटितं तथापि शब्देनैवो[2]क्तमयमर्थान्तरस्य व्यञ्जक इति । ततश्च ध्वनेर्यद्गोप्य[3]मानतोदितचारुत्वात्मकत्वं प्राणितं तदपहस्तितम् । यथा कश्चिदाह—'गम्भीरोऽहं न मे कृत्यं कोऽपि वेद सुसूचितम् । किंचिद्ब्रवीमि-' इति । तेन गाम्भीर्यसूचनार्थः प्रत्युत धिक्कृ[4]त एव । अत एवाह व्यञ्जकत्वमिति उक्त्यैवेति च । प्रक्रान्तप्रकारद्वयोपसंहारं तृतीयप्र[5]कारसूचनं चैकेनैव यत्नेन करोमीत्याशयेन साधारणमवतरणपदं प्रक्षिपति वृत्तिकृत्-[6]**तथा चेति** । तेन चोक्तप्रकारद्वयेनायमपि तृतीयः प्रकारो म[7]न्तव्य इत्यर्थः । शब्दश्चार्थश्च शब्दार्थावित्येकशेषः (?) । **सान्यैवेति** । [8]न ध्वनिरसौ । अपि तु श्लेषा-

1. शक्त्यापि क्षिप्तो' ग.

१. 'उदाहरति—संकेतेति' ग-पुस्तके नास्ति. २. 'उक्तसमर्थमर्थान्तरस्य' क-ख. ३. 'मार्नं नोदित' क-ख. ४. 'अधिकृत एव' क-ख. ५. 'प्रमासूचनं ग. ६. 'तथा चेति' क-ख-पुस्तकयोर्नास्ति. ७. 'मन्थमुग्धः' ग. ८. 'न' ग-पुस्तके नास्ति.

कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनुस्वानोपमव्यङ्ग्याद्ध्वनेरन्य[१] एवालंकारः । अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः । सति संभवे स तादृगन्योऽलंकारः ।

तत्र शब्दशक्त्या यथा—

'वत्से मा गा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं[२]
　कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
　यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां[३] पयोधिः ॥'

अर्थशक्त्या यथा—

'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
　निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र ।
अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
　पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥'

---

दिरलंकार इत्यर्थः । अथवा ध्वनिशब्देन लक्ष्यक्रमः । तस्यालंकार्यस्याङ्गिनः[१] स व्यङ्ग्योऽर्थोऽन्यो[२] वाच्यमात्रालंकारापेक्षया द्वितीयो लोकोत्तरश्चालंकार इत्यर्थः । एवमेव वृत्तौ द्विधा व्याख्यास्यति[३] शब्दशक्त्येत्यादिना[४] । विषमत्तीति विषादः । ऊर्ध्वप्रवृत्तमग्निमित्यत्र चार्थो मन्तव्यः । कंपोऽपांपतिः को ब्रह्मा वा तव गुरुः । बलभिदा इन्द्रेण जृम्भितेन ऐश्वर्येणेत्यर्थः[५] । जृम्भितं च गात्रसंमर्दनात्मकं बलं भिनत्ति । आयासकारित्वात् । **प्रत्याख्यानमिति** । वचसैवात्र द्वितीयोऽर्थोऽभिधीयत इति निवेदितम्[६] । **कारयित्वेति** । सा हि कमला पुण्डरीकाक्षमेव हृदये निधायोत्थितेति स्वयमेव देवान्तराणां प्रत्याख्यानं करोति । स्वभावसु-

---

१. 'एव क्रमः' क-ख. २. 'संवृणूर्ध्वं' ग. ३. 'मन्थमुग्धः' ग.

---

१. 'अलक्ष्यक्रमस्तस्यालंकारस्यालिङ्गिनः' क-ख. २. 'अन्यो' क-ख.पुस्तकयोर्नास्ति. ३. 'व्याचक्षते' क-ख. ४. 'शब्दशक्त्येत्यादिना' ग.पुस्तके नास्ति. ५. 'ऐश्वर्येणेत्यर्थः' क-ख-पुस्तकयोर्नास्ति. ६. 'उक्तम्' ग.

उभयशक्त्या यथा—'दृष्ट्या केशवगोपरागहृतया—' इत्यादौ ।

प्रौढोक्तिमात्रनिष्पन्नशरीरः संभवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥ २५ ॥

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्यापि

---

कुमारतया तु मन्दरान्दोलितजलधितरङ्गभङ्गपर्याकुलीकृता तेन प्रतिबोधिता तत्सम-र्थाचरणमन्यत्र दोषोद्घाटनेनात्र याहीति चाभिनयविशेषेण सकलगुणादरदर्शकेन कृतम् । अत एव मन्थमूढामित्याह । इत्युक्तप्रकारेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं मन्थमूढां लक्ष्मीं[1] कारयित्वा पयोधिर्यस्मै तामदात्स वो युष्माकं दुरितं दहत्विति संबन्धः । अत्रैकैकस्य पदस्य व्यञ्जकत्वं सहृदयैः सुकल्प्यमिति स्वकण्ठेन नोक्तम् । व्याजशब्दोऽत्र स्वोक्तिः । एवमुपसंहारव्याजेन प्रकारद्वयं सोदाहरणं निरूप्य तृतीयं प्रकारमाह—**उभयेति** । शब्दशक्तिस्तावद्गोपरागादि । शब्द-श्लेषवशात् । अर्थशक्तिस्तु प्रकरणवशात् । यावदत्र राधारमणस्याखिलतरुणीजन-च्छन्नानुरागगरिमास्पदत्वं न विदितं तावदर्थान्तरस्याप्रतीतेः सलेशमिति स्वोक्तिः । एवमर्थशक्त्युद्भवस्य सामान्यलक्षणं कृतम्[2] । श्लेषाद्यलंकारेभ्यश्चास्य[3] विभक्तो विषय उक्तः[4] । अधुनास्य[5] प्रभेदनिरूपणं करोति—**प्रौढोक्तीत्यादिना** । योऽर्थान्तरस्य दीपको व्यञ्जकोऽर्थ उक्तः सोऽपि द्विविधः[6] । न केवलमनुस्वानोपमो द्विविधः[7] यावत्तद्भेदो यो द्वितीयः सोऽपि व्यञ्जकार्थद्वैविध्यद्वारेण द्विविध इत्यपिशब्दस्यार्थः[8] । प्रौढोक्तेरप्यवान्तरभेदमाह वृत्त्या[9]—**अर्थशक्तीत्यादिना** । तेनैते त्रयो भेदा

---

१. 'व्यङ्ग्यध्वनौ' क-ख.

---

१. 'मन्थमूढां लक्ष्मीं' ग-पुस्तके नास्ति. २. 'उक्तम्' क-ख. ३. 'श्लेषाद्यलंकारश्चास्य' क-ख, 'श्लेषालंकारेभ्यश्चास्य' ग. ४. 'इत्युक्तः' क-ख. ५. 'अर्थ' ग-पुस्तके नास्ति. ६. 'द्वितीयः' क-ख. ७. 'यो यावत्तद्भेदो यो द्वितीयः' ग. ८. 'शब्दार्थः' क-ख. ९. 'आह—कतेरिति । तेनैते' ग.

द्वौ प्रकारौ । कवेः कविनिबद्धस्य वा वक्तुः[1] प्रौढोक्तिमात्रनिष्पन्नशरीर एकः स्वतः संभवी च द्वितीयः ।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

'सज्जेहि[2] सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खसुहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स शरे ॥'

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो[3] यथा—'शिखरिणि–' इत्यादौ ।

यथा वा—

'साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिम् ।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुह थणेहिम् ॥'

---

भवन्ति[1] प्रकर्षेण ऊढः संपादयितव्येन वस्तुना प्राप्तस्तत्कुशलः प्रौढः । उक्तिरपि समर्पयितव्यवस्त्वर्पणोचिता प्रौढेत्युच्यते । 'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसुखान् । अभिनवसहकारमुखान्नवपल्लवपत्त्र[2]लाननङ्गस्य शरान् ॥' अत्र वसन्तो[3]ऽचेतनोऽनङ्गस्य सखा सज्जयति[4] न केवलं तावदर्पयतीत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमानं मन्मथोन्माथस्या[5]रम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति । अन्यथा वसन्ते सपल्लवसहकारोद्गम इति वस्तुमात्रं न व्यञ्जकं स्यात् । एषा च कवेरेवोक्तिः प्रौढा । **शिखरिणीति** । अत्र लोहितं बिम्बफलं शुको दशतीति न व्यञ्जकता काचित् । यदा तु कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तुरित्थं प्रौढोक्तिस्तदा व्यञ्जकत्वम् । 'सादरवितीर्णयौवनहस्तालम्बं [कृत्वा] समुन्नमद्भ्याम् । अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥' स्तनौ तावदिह प्रधानभूतौ ततोऽपि गौरवितः कामस्ताभ्यामभ्युत्थानेनोपचर्यते । यौवनं चानयोः परिचारकभावेन

---

१. 'वस्तु' ग. २. 'स्कन्धकं नाम च्छन्दः.' ३. 'निष्पन्नो यथा' ग.

---

१. 'संभवन्ति' क-ख. २. 'यन्तलाननङ्गाय' ग. ३. 'वसन्तश्चेतनो' ग. ४. 'जयति' ग. ५. 'माथकस्य' क-ख.

स्वतः संभवी य औचित्येन [1]बहिरपि संभाव्यमानसद्भावो न केवलं भणितिवशेनैवा[2]भिनिष्पन्नशरीरः । यथोदाहृतम् 'एवंवादिनि'—इत्यादि । यथा वा—

'सिहिपिञ्छकण्णपूरा [3]जाआ वाहस्स गव्विरी भमइ ।
मुत्ताफलरइअपसाहणाणँ मज्झे सवत्तीणम् ॥'

**अर्थशक्तेरलंकारो यत्राप्यन्यः प्रतीयते ।**
**अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ २६ ॥**

---

स्थितमित्येवंविधेनोक्तिवैचित्र्येण तदीयस्तनावलोकनप्र[1]वृद्धमन्मथावस्थः को न भवतीति भङ्ग्या स्वाभिप्रायध्वननं कृतम् । तव तारुण्येनोन्नतौ स्तनाविति हि वचनेन व्यञ्जकता न केवलमित्युक्तिवैचित्र्यं तावत्सर्वथोपयोगि भवतीति भावः । 'शिखिपिच्छकर्णपूरा [2]जाया व्याधस्य ग[3]र्विणी भ्रमति । मुक्ताफलरचित-प्रसाधनानां मध्ये सपत्नीनाम् ॥' शिखिमात्रमारणमेव तदासक्तस्य कृत्यम् । अन्यास्तु त्वासक्तो हस्तिनोऽप्यमारयदिति बहुवचनेनोक्तमुत्तमसौभाग्यम् । रचितानि विविधभङ्गीभिः प्रसाधनानीति तासां संभोगव्यग्रिमाभा[4]वाद्विरचनशिल्पकौशलमेव परमिति दौर्भाग्यातिशय इदानीं प्रकाशितः । गर्वश्च बाल्याविवेकादिनापि भवतीति नात्र स्वोक्तिसद्भावः शङ्क्यः । ए[5]ष चार्थो यथायथा वर्ण्यते आस्तां वा वर्णना बहिरपि यदि प्रत्यक्षादिना[6]वलोक्यते तथातथा सौभाग्यातिशयं व्याधवध्वा द्योतयति । एवमर्थशक्त्युद्भवो द्विभेदो वस्तुमात्रस्य व्यञ्जनीयत्वे वस्तुध्वनिरूपतया निरूपितः । इदानीं तस्यैवालंकाररूपे व्यञ्जनीयेऽलंकारध्वनित्वमपि भवतीत्याह—**अर्थेत्यादि** । [ अर्थशक्तेः ] न केवलं शब्दशक्तेरलंकारः प्रतीयते पूर्वोक्तनीत्या

---

१. 'बहिरपि' **ग.** पुस्तके नास्ति. २. 'अभि' **क-ख**-पुस्तकयोर्नास्ति । ३. 'वहुआ' **ग.**

---

१. 'प्रवृत्त' **क-ख.** २. 'वधूः' **ग.** ३. 'गर्वशीला' **ग.** ४. 'भावात्तद्धितरति-प्रदर्शिता । गर्वश्च' **क-ख.** ५. 'स एवार्थो' **ग.** ६. 'अलंक्रियते' **क-ख.**

वाच्यालंकारव्यतिरिक्तो यत्रान्योऽलंकारोऽर्थसामर्थ्यात्प्रतीयमानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्योऽन्यो ध्वनिः । तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते—

> रूपकादिरलंकारवर्गो यो वाच्यतां श्रितः ।
> स सर्वो गम्यमानत्वं बिभ्रद्भूम्ना प्रदर्शितः ॥ २७ ॥

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलंकारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः । तथा च संसंदेहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलंकारान्तरस्यालंकारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम् । इयत्पुनरुच्यत एव—

---

यावदर्थशक्तेरपि । यदि वा न केवलं यत्र वस्तुमात्रं प्रतीयते यावदलंकारोऽपीत्यपिशब्दार्थः । अन्यशब्दं व्याचष्टे—**वाच्येति** ।......देवम् । **आशङ्क्येति** । शब्दशक्त्या श्लेषाद्यलंकारो भासत इति संभाव्यमेतत् । अर्थशक्त्या तु कोऽलंकारो भातीत्याशङ्काबीजम् । सर्व इति प्रदर्शित इति च पदेनासंभावनात्र मिथ्यैवेत्याह । 'उपमानेन तत्त्वं च भेदं च वदतः पुनः । ससंदेहं वचः स्तुत्यै ससंदेहं विदुर्यथा ॥' इति । 'तस्याः पाणिरयं न मारुतचलत्पत्राङ्गुलिः पल्लवः' इत्यादावुपमा रूपकं वा ध्वन्यते । अतिशयोक्तेश्च प्रायशः सर्वालंकारेषु

---

१. 'अनुकरणरूपो व्यङ्ग्यो' क-ख. २. 'अन्यो' ग-पुस्तके नास्ति. ३. 'तत्र' क-ख. ४. 'अन्यवाच्यत्वेन' ग. ५. 'संदेहादिषु' ग. ६. 'अलंकारान्तरत्वे' क-ख. ७. 'प्रतिपाद्यमिति' ग. ८. 'पुनरुक्तं' क-ख. ९. 'एव' क-ख-पुस्तकयोर्नास्ति.

---

१. 'यदि वा केवलं शब्दशक्तेरलंकारः प्रतीयते यावद्यत्रालंकारोऽपीति शब्दार्थः' क-ख. २. 'शब्दार्थं वृत्त्या व्याचष्टे' वाच्येति तत्रेति कोऽलंकारो भवतीत्याशङ्काबीजम्' क-ख.

अलंकारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य[1] नासौ मार्गो ध्वने[2]र्मतः ॥ २८ ॥

अलंकारान्तरस्य[3] रूपकादेरलंकारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः । तथा च दीप[4]कादावलंकारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्या-व्य[5]वस्थानान्न ध्वनिव्यपदेशः ।

---

ध्वन्यमानत्वम् । **अलंकारान्तरस्येति** । यत्रालंकारोऽप्यलंकारान्तरं ध्वनति तत्र वस्तुमात्रेणालंकारो ध्वन्यत इति कियदिदमसंभाव्य[1]मिति तात्पर्येणालंकारान्तर-[2]शब्दो वृत्तिकृता प्रत्युक्तो······कुतोपयोगि (?)। न ह्यलंकारेणालंकारो ध्वन्यत इति प्रकृतमदः । अर्थशक्त्युद्भवे ध्वनौ वस्त्विवालंकारोऽपि व्यङ्ग्य इत्येतावतः प्रकृत[3]-त्वात् । तथा चोपसंहारग्रन्थे 'तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः' इत्यत्र श्लोके वृत्तिकृत् 'ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां' इत्युपक्रम्य 'तत्रेह प्रकर-णाद्ध्व[4]न्यङ्गत्वेनेत्यवगन्तव्यम्' इति वक्ष्यति । अन्तरशब्दोऽत्रोभयत्रापि विशेषप-र्यायः । वैषयिकीसप्तमी । न तु प्राग्व्याख्यायामिव निमित्तसप्तमी । तदयमर्थः—वा-च्यालंकारविशेषविषयेऽप्यन्योऽलंकारविशेषो भा[5]तीत्युद्भटादिभिरुक्तमेवेत्यर्थशक्त्या-लंकारो व्यज्यत इति तैरुपगतमेव । केवलं ते[6]ऽलंकारलक्षणकारत्वाद्वाच्यालंकारविशेष-विषय[7]त्वेनाहुरिति भावः । न तु पूर्वैरेव यदीदमुक्तं किमर्थं तव यत्न इत्याशङ्क्याह—**इयदिति** । अस्माभिरिति वाक्यशेषः । पुनःशब्दस्तदुक्ताद्विशेषद्योतकः ।

---

१. 'काव्यस्य' क-ख. २. 'ध्वनौ' क-ख. ३. 'अलंकारान्तरेषु तु अनुरणन-रूपकालंकार' ग. ४. 'दीपकालंकारे' ग. ५. 'अप्यवस्थानात्' ग.

---

१. 'संभाव्यं' ग. २. 'तात्पर्येणालंकारो ध्वन्यत इति' क-ख. ३. 'प्रस्तुतत्वात्' क-ख. ४. 'व्यङ्ग्यत्वेन' ग. ५. 'भावीत्युद्भटा' ग. ६. 'ते लक्षणकारत्वात्' क-ख. ७. 'विषयत्वेन तेनाहुः' क-ख.

[1]यथा—

'[2]चन्दमऊएहिँ णिसा णलिनी कमलेहिँ कुसुमगुच्छेहिँ लआ ।
हंसेहिँ सरअसोहा कव्वकहा सज्जनेहिँ करइ गरुई ॥

इत्यादिषू[3]पमागर्भत्वेऽपि सति वाच्यालंकारमुखेनैव चारुत्वं व्यवतिष्ठते न व्यङ्ग्यालंकारतात्पर्येण । तस्मात्तत्र वाच्यालंकारमुखेनैव [4]काव्यव्यपदेशो न्याय्यः । यत्र तु व्यङ्ग्यपरत्वेनैव [5]वाच्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः ।

---

चन्दम[1]ऊ इति । चन्द्रमयूखादीनां [2]न निशादिना विना कोऽपि परभागलाभः । सज्जनानामपि काव्यकथां विना कीदृशी साधुजनता । चन्द्रमयूखैश्च निशाया गुरुकी[3]करणं भास्वरत्वसेव्यत्वादि यत्क्रियते, कमलैर्नलिन्याः शोभा परिमललक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि, तत्सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो [3]गुरुः क्रियत इति दीपकबलाच्चकास्ति । [4]कथाशब्दमाह—[5]आसतां तावत्काव्यस्य केचन सूक्ष्मा विशेषाः सज्जनैर्विना काव्यमित्येष शब्दोऽपि ध्वंसते । तेषु तु सत्स्वास्ते सुभगं काव्यं काव्यशब्दव्यपदेशभागपि शब्दसंदर्भमात्रं तथा तथा तैः क्रियते यथा यथादरणीयतां प्रतिपद्यत इति दीपकस्यैव प्राधान्यं नोपमायाः । एवं तु कारिकार्थमुदाहरणेन प्रदर्श्यास्या एव कारिकाया [6]व्यवच्छेद्यबलेन योऽर्थोऽभिमतो यत्र तत्परत्वं स ध्वनेर्मार्ग इत्येवंरूपस्तं व्याचष्टे—**यत्र त्विति** । तत्र च [7]वाच्यालंकारेण कदाचिद्व्यङ्ग्यमलंकारतां यदि वा वाच्यालंकारस्य सद्भावमात्रं न व्यञ्जक......वाच्यालंकारस्याभाव एव वेति त्रिधा विकल्पः । एतच्च यथायोगमुदाहरणेषु योज्यम् । '[8]उदा-

---

१. 'तथाहि' क-ख. २. 'चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता । हंसैः शारदशोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥' इति च्छाया. ३. 'उपमालंकारगर्भत्वे सत्यपि' ग. ४. 'काव्यस्य' क-ख. ५. 'काव्यस्य व्यवस्थापनं' क-ख.

---

१. 'चन्दमऊ' इति ग-पुस्तके नास्ति'. २. 'अपि न' क-ख. ३. 'गुरुकी' क-ख. ४. 'तथाशब्दं' ग. ५. 'आस्तां' ग. ६. 'व्यवच्छेद' ग. ७. 'वाच्यालंकारस्याभाव एव वेति' क-ख. ८. 'उदाहरति' ग पुस्तके नास्ति.

यथा—

प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः॥'

यथा वा ममैव—

'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-
न्स्मेरेऽधुना तव मुखे तरलायताक्षि।

---

हरति—**प्राप्तेति**। कस्मिंश्चिदनन्तबलसमुदायवति नरपतौ समुद्रपरिसरवर्तिनि पूर्णचन्द्रोदयतदीयबलावगाहनादिना निमित्तेन पयोधेस्तावत्कम्पो जातः। सोऽनेन संदेहेनोत्प्रेक्ष्यत इति ससंदेहोत्प्रेक्षयोः संकरात्संकारालंकारो वाच्यः। तेन च वासुदेवरूपता तस्य नृपतेर्ध्वन्यते। यद्यपि चात्र व्यतिरेको भाति तथापि स पूर्ववासुदेवस्वरूपानद्यतनत्वादद्यतनत्वेन भगवतोऽपि प्राप्तश्रीकत्वं नालस्येन सकलद्वीपाधि[1]पतिविजयित्वेन च वर्तमानत्वात्। न च संदेहोत्प्रेक्षानुपपत्तिबलाद्रूपकस्याक्षेपः, येन वाच्यालंकारोपस्कारकत्वं व्यङ्ग्यस्य भवेत्। यो यः संप्राप्तलक्ष्मीको निर्व्याजविजिगीषाक्रान्तः स स मां मथ्नीयादित्याद्यर्थसंभावनात्। न च पुन[2]रपीति पूर्वामिति भूय इति च शब्दैरयमाकृष्टोऽर्थः। पुनरर्थस्य भूयोर्थस्य च कर्तृभेदेऽपि स[3]मुद्रैक्यमात्रेणाप्युपपत्तेः। यथा पृथ्वी पूर्वं कार्तवीर्येण जिता पुनरपि जामदग्न्येनेति। पूर्वा च निद्रां राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवायमिति। शब्दव्यापारं विनैवार्थसौन्दर्यबलाद्रूपणाप्रतिपत्तेः। [6]यथा च—'ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन्सरय्वा वादद्यूतं सुचिरमभवत्सिद्धयूनोः कयोश्चित्। एकोऽवादीत्प्रथमनिहतं केशिनं कंसमन्यो (मत्वा) स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥' इति केचिदुदाहरणम[7]त्र पठन्ति तदसत्। भवतेत्यनेन बलेनात्र त्वं वासुदेव इत्यर्थस्य स्फुटीकृतत्वात्। लावण्यं संस्थानमुग्धिमा। कान्तिः प्रभा। ता[9]भ्यां

१. 'द्वीपाधिपविजयत्वेन' क-ख. २. 'पुनरपीति' ग-पुस्तके नास्ति. ३. 'समुद्रमात्रेण' क-ख. ४. '[illegible]' ग. ५. 'सिद्धा' ग. ६. 'यथा च' ग-पुस्तके नास्ति. ७. 'अत्र' ग-पुस्तके नास्ति. ८. 'इत्यस्फुटी' ग. ९. 'ताभिः' क-ख.

क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥'

इत्येवंविधे विषयेऽनुरणनरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद्रूपकध्वनिरिति व्यपदेशो न्याय्यः ।

उपमाध्वनिर्यथा—

'वीराणं रमइ घुसिणरुणम्मि ण तदा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दूरे ॥'

---

परिपूरितानि संविभक्तानि हृद्यानि संपादितानि दिङ्मुखानि येन । अधुना कोपकालुष्यादनन्तरं प्रसादौन्मुख्येन स्मेरे ईषद्विहसनशीले । [1]तरलायते प्रसादान्दोलनविकाससुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम् । अथ [2]चाधुना न परिवृत्ते तु क्षणान्तरे क्षोभमगमत् । कोपकषायपाटलं स्मेरं च [3]तव मुखं संध्यारुणपूर्णशशधरमण्डलमेवेति भाव्यम् । क्षोभेण चलच्चित्ततया सहृदयस्य [4]न चैति तत्सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः । जलादयः [5]शब्दा भावार्थप्रधाना इत्युक्तम् । अत्र च क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकनेन [6]भवतीतीयत्यभिधाया विश्रान्ततया रूपकं ध्वन्यमानमेव । वाच्यालंकारश्चात्र श्लेषः । स च न व्यञ्जकः । अनुरणनरूपं [7]यत्र यद्रूपकमर्थशक्तिव्यङ्ग्यं तदाश्रयेणेह काव्यस्य चारुत्वं व्यवतिष्ठते । ततस्तेनैव । व्यपदेश इति संबन्धः । [8]तत्तुल्ययोग.........दुपमाध्वन्युदाहरण... ...... ... ...स्वकण्ठेन न योजितम् । 'वीराणां रमते [9]घुसृणारुणे न तथा [10]प्रियास्तनोत्सङ्गे । [11]दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥' प्रसादित-

---

१. 'तरलेआयते आन्दोलन' क-ख. २. 'वा' क-ख. ३. 'तन्मुखं' ग. ४. 'न चैति तत्' ग-पुस्तके नास्ति. ५. 'शब्दा अर्थप्रधानास्तदुक्तं प्राक्' क-ख. ६. 'भवतीत्यभिधाया विश्रान्तत्वात्' क-ख. ७. 'यद्रूपं' क-ख. ८. 'तत्तुल्य—योजितम्' क-ख-पुस्तकयोर्नास्ति. ९. 'कुङ्कुमारुणे' ग. १०. 'प्रियायाः' ग. ११. 'यद्दृष्टिः' ग.

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

'तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥'

आक्षेपध्वनिर्यथा—

'स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान्गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥'

---

प्रियतमाश्वासनपरतया समनन्तरीभूतयुद्धत्वरितमनस्कतया च दोलायमानदृष्टित्वेऽपि युद्धे त्वरातिशय इति व्यतिरेको वाच्यालंकारः । तत्र तु येयं ध्वन्यमानोपमा प्रियाकुचकुड्मलाभ्यां सकलजनत्रासकरेष्वपि शात्रवेषु [1]मत्सरोद्यतेषु गजकुम्भस्थलेष्विष्टा तद्दर्शेन रतिमयानामिव बहुमान इति सैव वी[2]रतातिशयचमत्कारं [3]धत्त इत्युपमायाः प्राधान्यम् । **असुरपराक्रम इति** । त्रैलोक्यविजयो हि तत्रास्य वर्ण्यते । तेषामसुराणां पातालवासिनां यैः पुनः पुनरिन्द्रपुरावमर्दनादि किं किं न कृतं तद्धृदयं येभ्यस्तेभ्योऽतिदुष्करेभ्योऽप्यकमनीयव्यवसायम् । तच्च श्रीसहोदराणामत एवानिर्वाच्योत्कर्षाणामित्यर्थः । तेषां रत्नानामा समन्ताद्धरणे एकरसं तत्परं यद्धृदयं तत्कुसुमबाणेन सुकुमारतरोपकरणसंभारेण प्रियाणां बिम्बाधरे निवेशितम् । तदवलोकनपरिचुम्बनदर्शनमात्रकृतकृत्यताभिमानयोगित्वेन कामदेवेन कृतम् । तेषां हृदयं यदत्यन्तं विजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत् । अत्रातिशयोक्तिर्वाच्यालंकारः । प्रतीयमाना चोपमा । सकलरत्नसारतुल्यो बिम्बाधर इति हि तेषां बहुमानो वास्तव एव । अत एव न रूपकध्वनिः । [4]रूपकस्यारोप्यमाणत्वेनावास्तवत्वात् । तेषामसुराणां वस्तुवृत्त्यैव सादृश्यं [5]स्फुरति । तदेव च सादृश्यं चमत्कारहेतुः प्राधान्येन । गुणानामवर्णनीयताप्रतिपादनमेवाक्षेपस्य

---

१. 'तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' इति च्छाया.

---

१. 'मदनोदितेषु' क-ख. २. 'धीरता' क-ख. ३. 'विधत्ते' क-ख. ४. 'रूपकस्योपचारेण वास्तवत्वात्' क-ख. ५. 'स्फुरितमिति' क-ख.

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्यासाधारणतद्विशेषप्रकाशनपरस्यापक्षेपस्य प्रकाशनम् ।

अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च संभवति । तत्राद्यस्योदाहरणम्—

'देव्वाएत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो[1] ।
कङ्किल्लपल्लवाः पल्लवाणँ अण्णाण ण सरिच्छा ॥'

पदप्रकाशकश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्येऽपि सति न विरोधः । द्वितीयस्योदाहरणं यथा—

'हिँअट्ठाविअमण्णुं अवरुण्णमुहं हि मं पसाअन्त ।
अवरद्धस्स वि ण हु दे पहुजाणअ रोसिउं सक्कम् ॥'[2]

---

रूपमिष्टप्रतिषेधात्मकम् । तस्य प्राधान्यं विशेषद्वारेणाह—**असाधारणेति** । संभवतीत्यनेन प्रसङ्गाच्छब्दशक्तिमूलस्यात्र विचार इति दर्शयति । 'दैवायत्ते तु फले किं क्रियतामेतावत्पुनर्भणामः । रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृशाः ॥' अशोकस्य फलमाम्रादिवन्नास्ति किं क्रियतां पल्लवास्त्वतीव हृद्या इतीयताभिधा समाप्तैव । अत्र फलशब्दस्य शक्तिबलात्समर्थकमस्य वस्तुनः पूर्वमेव प्रतीयते । लोकोत्तरजिगीषातदुपायप्रवृत्तस्यापि हि फलं संपल्लक्षणं दैवायत्तं कदाचिन्न भवेदपीत्येवंरूपं सामान्यात्मकम् । नन्वत्र सर्ववाक्यस्याप्रस्तुतप्रशंसा प्राधान्येन व्यङ्ग्या तत्कथमर्थान्तरन्यासस्य । व्यङ्ग्यताद्वये युगपदेकत्र प्राधान्यायोगादित्याशङ्क्याह—**पदप्रकाशेति** । सर्वो हि ध्वनिप्रपञ्चः पदप्रकाशो वाक्यप्रकाशश्चेति वक्ष्यते[2] । तत्र फलपदेऽर्थान्तरन्यासध्वनिः प्राधान्येन[3] । वाक्ये त्वप्रस.........पि समर्थकभावप्राधान्यमेव भातीत्यर्थान्तरन्यासध्वनिरेवायमिति भावः । हृदये स्थापितो[4] न तु बहिः प्रकटितो मन्युर्यया अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन् हे बहुज्ञ,

---

१. 'भणामि' ख-ग. २. 'हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन् । अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम् ॥' इति च्छाया.

---

१. 'समर्थतमस' ग. २. 'वक्ष्यति' क-ख. ३. 'प्राधान्येन—ध्वनिः' क-ख-पुस्तकयोर्नास्ति. ४. 'स्थितो' ख.

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य कोपः कर्तुमशक्य इति समर्थकमर्थसामान्यमन्वितमन्यत्तात्पर्येण प्रकाशते ।

व्यतिरेकध्वनिरप्युभयरूपः संभवति । तत्राद्यस्योदाहरणं प्राक्प्रदर्शितमेव । द्वितीयस्योदाहरणं यथा—

'जाएज्ज[1] वणुद्देसे खुज्ज विअ पाअवो घडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥'

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं घटित[2]पत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम् । तथाविधादपि पादपात्तादृशस्य पुंस [3]उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति । उत्प्रेक्षाध्वनिर्यथा—

---

अपराधस्यापि तव न खलु रोषकारणं शक्यम् । अत्र बहुज्ञेत्यामन्त्रणार्थो विशेषे पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनाद्यत्सामर्थ्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि । सा हि खण्डिता सती वैदग्ध्यानुनीता तं प्रत्यसूयां दर्शयन्तीत्थमाह । यः कश्चिद्बहुज्ञो धूर्तः स एवं सापराधोऽपि स्वापराधावकाशमाच्छादयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति । [1]**अन्वितमिति** । विशेषसामान्यस्य संबन्धत्वादिति भावः । व्यतिरेकध्वनि.........। अपिशब्देनार्थान्तरन्यासवदेव द्वि[2]प्रकारत्वमाह—**प्रागिति** । 'खं येऽत्युज्ज्वलयन्ति' इति । 'रक्तस्त्वं नवपल्लवैः' इति । जायेय वनोद्देश एव वनस्यैकान्ते गहने यत्र स्फुटतरबहुवृक्षसंपत्त्या प्रेक्षतेऽपि न कश्चित् । कुब्ज इति रूपकघटनादावनुपयोगी । घटितपत्र इति छायामपि न करोति । तस्य का पुष्पफलवत्तेत्यभिप्रायः । तादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी भवेदुलूकादीनां वा निवासायेति भावः । **मानुष इति** । सुलभार्थिजन इति भावः । यत्रालोक्यते सोऽर्थिभिस्तेन...... न किंचिच्छक्यते कर्तुं तन्महद्वैशसम् । ...... । अत्र वाच्यालंकारो न कश्चित् । अत्रेत्यस्मिञ्जाएज्जेत्युदाहरणे । उपमानेत्यनेन व्यतिरेकस्य मार्गपरिशुद्धिं करोति । **आधिक्यमिति** ।

---

१. 'जायेय वनोद्देशे कुब्ज इव पादपो घटितपत्रः । मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥' इति च्छाया. २. 'त्रुटित' क-ख. ३. 'उपमानोपमेयभाव' क-ख.

---

१. 'तेनेति' ग. २. 'द्विप्रकारत्वादित्याह' ग.

'चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान्मधौ मलयमारुतः ॥'

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारित्वं[1] मन्मथोन्माथदायित्वेनैव । तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा[2] लक्ष्यते । न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासंबद्धैवेति[3] शक्यं[4] वक्तुम् । गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् । यथा—

'ईसाकलुसस्स[5] वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअण माइ ॥'

---

व्यतिरेकमित्यर्थः । उत्प्रेक्षितमिति । विषवातेन हि मूर्च्छितो बृंहित उपचितो[1] मोहं करोति । एकश्च मूर्च्छितः पथिकः पथिकमध्येऽन्येषामपि धैर्यच्युतिं विदधन्मूर्च्छां करोतीत्युभयथोत्प्रेक्षा । नन्वत्र विशेषणमधिकीभवद्धेतुतयैव संगच्छते । ततः किमपि हेत्वतः परमार्थतः । तथापि तु हेतुत[3] उत्प्रेक्ष्यत इति[4] यत्किंचिदेतत्[2] । तदिति । तस्येवादेरप्रयोगेऽपि तस्यार्थस्येत्युत्प्रेक्षारूपस्यावगतेः[5] प्रतीतेर्दर्शनात्[6] । एतदेवोदाहरति—यथेति । ईर्ष्याकलुषस्यापीषदरुणच्छायाकस्य यदि त्वप्रसन्नस्य मुखस्य सादृश्यमुद्वहेत्सर्वदा वा तत्किं कुर्यात्त्वन्मुखं त्वेतद्भवतीति मनोरथानामप्यपथमिदमित्यपिशब्दस्याभिप्रायः । अङ्गे स्वदेहे न मात्येव दश दिशः पूरयति । यतोऽद्येयता कालेनैकं दिवसमात्रमित्यर्थः । अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेवोत्प्रेक्ष्यते । ननुशब्देन वितर्कोत्प्रेक्षारूपमाचक्षाणेनासंबद्धता निराकृतेति[7] संभाव-

---

१. 'करणत्वं' क-ख. २. 'रूपव्यङ्ग्या' क-ख. ३. 'संबन्धतैवेति' ग. ४. 'शक्यते' ग. ५. 'ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः । अद्य सदृशत्वं प्राप्याङ्ग इव न भाति ॥' इति च्छाया.

---

१. 'उपचारितो' ग. २ 'ततः किं न हि हेतुतः परमार्थेन तथापि' ग. ३. 'हेतुतापि' क-ख. ४. 'यदि' क-ख. ५. 'तस्योत्प्रेक्षा' क-ख. ६. 'दर्शनं तस्मात्' क-ख. ७. 'अत्र पराकृतेति' क-ख.

यथा वा—

'त्रासाकुलः परिपतत्परितो निकेता-
न्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥'

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम् ।

श्लेषध्वनिर्यथा—

'रम्या इति प्राप्तवतीः पताकाः कामं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥'

---

यमान उदाहरणान्तरमाह—**यथा वेति** । परितः सर्वतो निकेतान्परिपतन्नाक्रमन्न कैश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथापि न क्वचित्तस्थौ त्रासचापलयोगात्स्वाभाविकादेव । तत्र चोत्प्रेक्षा ध्वन्यते—अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हता ईक्षणश्रीः सर्वस्वभूता यस्य यतोऽतो न तस्थौ । नन्वेतदप्यसंबद्धमस्त्वित्याशङ्क्याह—**शब्दार्थेति** । पताका ध्वजपटान्प्राप्तवती । रम्या इति हेतोः पताकाः प्रसिद्धीः प्राप्तवती । किमाकाराः प्रसिद्धीः । रम्या इत्येवमाकाराः । विविक्ता जनसंकुलत्वाभावादित्यतो हेतो रागं संभोगाभिलाषं वर्धयन्तीः । अतो हेतोः विविक्ता विभक्ताङ्ग्यो लटभाः । नमन्ति वलीकानि च्छदिपर्यन्तभागा यासु । नमन्त्यो वल्लयस्त्रिवलीलक्षणा यासाम् । सममिति सहेत्यर्थः । ननु समशब्दात्तुल्यार्थेऽपि प्रतीतिः । सत्यम् । सापि श्लेषबलात् । श्लेषश्च नाभिधावृत्तेराक्षिप्तोऽपि त्वर्थसौन्दर्यबलादेवेति सर्वथा ध्वन्यमान एव श्लेषः । अत एव वध्व इव वलभ्य इत्यभिदधतापि वृत्तिकृतोपमाध्वनिरिति नोक्तम् । श्लेषस्यैवात्र मूल-



१. 'यस्याम्रतः कुतो न' ग.

अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव वलभ्य इति श्लेषप्रतीतिरशब्दाप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्तते ।

यथासंख्यध्वनिर्यथा—

'अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः ।
अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः ॥'

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते । एवमन्येऽप्यलंकारा यथायोगं योजनीयाः ।

---

त्वात् । सममिति यदि स्पष्टं भवेत्तदोपमाया एव स्पष्टत्वाच्छ्लेषस्तदाक्षिप्तः स्यात् । सममिति निपातोऽञ्जसा सहार्थवृत्तिर्व्यञ्जकत्वबलेनैव क्रियाविशेषणत्वेन शब्दश्लेषतामेति । न च तेन विनाभिधाया अपरिपुष्टता काचित् । अत एव समाप्तायामेवाभिधायां सहृदयैरेव स द्वितीयोऽर्थः पृथक्प्रयत्नेनावगम्यते । यथोक्तं प्राक्— 'शब्दार्थशासनज्ञानमात्रेणैव–' इत्यादि । एतच्च सर्वोदाहरणेष्वनुसर्तव्यम् । 'पीनश्चैत्रो दिवा नात्ति' इत्यत्राभिधैवापर्यवसितेति सैव स्वार्थनिर्वाहायार्थान्तरं शब्दान्तरं वाकर्षतीत्यनुमानस्य श्रुतार्थापत्तेर्वा तार्किकमीमांसकयोर्न ध्वनिप्रसङ्ग इत्यलं बहुना । तदाह—**अशब्दापीति । एवमन्येऽपीति ।** सर्वेषामेवार्थालंकाराणां ध्वन्यमानता दृश्यते । यथा च दीपकध्वनिः—'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा । वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥' इत्यत्र बाधिष्टेति भाव्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्प-

---

१. 'कुसुमितः' ग. २. 'अनुद्देशे' क-ख. ३. 'अनति' क-ख.

---

१. 'सम इति' क-ख. २. 'विशेषणतया' ग. ३. 'न परिदुष्टता' क-ख. ४. 'अवगम्यः' ग. ५. 'स्वात्म' क-ख. ६. 'श्रुतार्थापत्तेः' ग. ७. 'मीमांसकपक्षयोः' क-ख. ८. 'तथाह' ग. ९. 'तथा च' क-ख. १०. 'गोप्यमानात्' क-ख.

त्तिः। अप्रस्तुतप्रशंसाध्वनिरपि—'ढुण्ढुल्लन्तो मरिहिसि कण्टअकलिआइँ केअइवणाइं। मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥' प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेवमाहेति भृङ्गस्याभिधायां प्रस्तुतत्वमेव। न चामन्त्रणादप्रस्तुतप्रशंसा। समाप्तायां पुनरभिधायां वाच्यार्थबलादन्यापदेशता ध्वन्यते। यत्सौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुमसदृशी कुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यलब्धप्रसिद्ध्यतिशयशम्भलीकण्टकव्याप्तानि दूरामोदकेतकीवनस्थानीयानि वेश्याकुलानीतश्चेतश्चञ्चूर्यमाणं प्रियतममुपालभते। अपह्नुतिध्वनिर्यथास्मदुपाध्यायभट्टेन्दुराजस्य—'यः कालागुरुपत्रभङ्गरचनावासैकसारायते गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि। विच्छेदानलदीपितोत्कवनिताचेतोधिवासोद्भवं संतापं विनिनीषुरेष विनतैरङ्गैर्नताङ्गि स्मरः ॥' अत्र चन्द्रमण्डलमध्यवर्तिनो लक्ष्मणो वियोगाग्निपरिचितवनिताहृदयोदितप्लोषमलीमसच्छविमन्मथाकारतयापह्नवो ध्वन्यते। अत्रैव ससंदेहध्वनिः—यतश्चन्द्रवर्तिनस्तस्य नामापि न गृहीतम्। अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्रभङ्गविच्छित्त्यास्पदत्वेन यः सारतामुत्कृष्टतामाचरति तन्न च जानीमः किमेतद्वस्त्विति ससंदेहोऽपि ध्वन्यते। पूर्वमनङ्गीकृतप्रणयामनूत्तप्तां विरहोत्कण्ठितां वल्लभागमनप्रतीक्षापरत्वेन कृतप्रसाधनादिविधितया वासकसज्जीभूतां पूर्णचन्द्रोदयावसरे दूतीमुखानीतः प्रियतमस्त्वदीयकुचकलशन्यस्तकालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्तिनी चेयं कुवलयदलश्यामलकान्तिरेवमेव करोतीति प्रतिवस्तूपमाध्वनिरपि। सुधाधामनीति चन्द्रपर्यायतयोपात्तमपि पदं संतापं निनीषुरित्यत्र हेतुतामपि व्यनक्तीति हेत्वलंकारध्वनिरपि। त्वदीयकुचशोभा मृगाङ्कशोभां च सह मदनमुद्दीपयत इति सहोक्तिध्वनिरपि। 'त्वत्कुचसदृशश्चन्द्रश्चन्द्रसमस्त्वत्कुचाभोगः' इत्यर्थप्रतीतेरुपमेयोपमाध्वनिरपि। एवमन्येऽप्यत्र भेदाः शक्योत्प्रेक्षाः। महाकविवाचोऽस्याः कामधेनुत्वात्। यतः—'हेलापि कस्यचिदचिन्त्यफलप्रसूत्यै कस्यापि नालमणवेऽपि फलाय यत्नः। दिग्दन्तिरोमचलनं धरणीं धुनोति खात्संपतन्नपि

१. 'अभिप्रायं' क-ख. २. 'अप्रस्तुतत्वावगतिः प्रत्युतामन्त्रणं तस्य········' ग. ३. 'चञ्चलमानसं' ग. ४. 'विलासोद्भवं' क, 'विकासोद्भवं' ख. ५. 'इति तज्जानीमः' क-ख. ६. 'उक्तं' क-ख. ७. 'शोभाभिः सह' क-ख. ८. 'चन्द्रमसः कुचा' क-ख.

एवमलंकारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते—

शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम् ।
तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥२९॥

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम् । व्यङ्ग्यत्वेऽप्यलंकाराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः । इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते[1] । अङ्गित्वेन व्यङ्ग्यतायामपि ।

---

लतां चलयेन्न भृङ्गः ॥' एषां तु भेदानां संसृष्टित्वं च संकरत्वं यथायोगं चिन्त्यम् । अतिशयोक्तिध्वनिर्यथा ममैव—'केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः । आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः सत्यं सुन्दरि वेधसस्त्रिजगतीसारस्त्वमेकाकृतिः ॥' अत्र हि मधुमासमदनासवानां त्रैलोक्ये सुभगतान्योन्यं परिपोषकत्वेन । ते[2] तु त्वयि लोकोत्तरेण वपुषा संभूय स्थिता इत्यतिशयोक्तिर्ध्वन्यते । आपातेऽपि विकारकारणमित्यास्वादनपरम्[3]पराक्रिययापि विना विकारात्मनः फलस्य संपत्तिरिति विभावनाध्वनिरपि । विभ्रमधोर्धुर्यमिति तुल्ययोगिताध्वनिरपि । एवं सर्वालंकाराणां ध्वन्यमानत्वमस्तीति मन्तव्यम् । न तु यथा [4]कैश्चिन्नियतविषयीकृतम् । **यथायोगमिति** । क्वचिदलंकारः क्वचिद्वस्तु[5] व्यञ्जकमित्यर्थो योजनीयः[6] । ननूक्तास्तावच्चिरंतनैरलंकारास्तेषां तु भवता यदि व्यङ्ग्यत्वं प्रदर्शितं किमियतेत्याशङ्क्याह—**एवमित्यादि** । येषामलंकाराणां वाच्यत्वेन शरीरीकरणं शरीरभूतात्प्रस्तुतादर्थादर्थान्तरभूततया अशरीराणां कटकादिस्थानीयानां शरीरतापर्यन्तं न व्यवस्थितं सुकवीनामयत्नतः संपाद्यतया यदि वाच्यत्वेन शरीरीकरण......सति येषां शरीरतापादनमपि[7] न व्यवस्थितं दुर्घटमिति यावत् । तेऽलंकारा ध्वनेर्व्यापारस्य काव्यस्याङ्गतां व्यङ्ग्यरूपतया

---

१. 'व्यङ्ग्याङ्गत्वं प्रकाशिष्यते' ग.

---

१. 'शाखी' ग. २. 'तेन' ग. ३. 'परम्परयापि' क-ख. ४. 'कथंचित्' क-ख. ५. 'वस्तुमात्रं' ग. ६. 'योजनीयाः' क-ख. ७. 'शरीरतापादनमपि' क-ख.

अलंकाराणां द्वयी गतिः कदाचिद्वस्तुमात्रेण व्यज्यन्ते कदाचिदलंकारेण। तत्र—

**व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां**

अत्र हेतुः—

**काव्यवृत्तेस्तदाश्रयात् ॥ ३० ॥**

यस्मात्तत्र तथाविधव्यङ्ग्यालंकारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्। तासामेवालंकृतीनाम्—

**अलंकारान्तरव्यङ्ग्यभावे**

पुनः,

**ध्वन्यङ्गता भवेत्।**
**चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ ३१ ॥**

---

गताः सन्तः परां दुर्लभां छायामात्मरूपतां यान्ति। एतदुक्तं भवति—सुकविर्विदग्धपुरंध्रीवद्भूषणं यद्यपि श्लिष्टं योजयति तथापि शरीरतापत्तिरेवास्य कष्टसंपाद्या। कुङ्कुमपीतिकाया इव। आत्मतायास्तु का संभावनापि। एवंभूता चेयं व्यङ्ग्यता यदप्रधानभूतापि वाच्यमात्रालंकारेभ्य उत्कर्षमलंकाराणां वितरति। बालक्रीडायामपि राजत्वमिवेत्यमुमर्थं मनसि कृत्वाह—**तत्रेति**। द्वय्यां गतौ सत्याम्। अत्र हेतुरित्ययं वृत्तिग्रन्थः। काव्यस्य कविव्यापारस्य वृत्तिस्तदाश्रयालंकारप्रवणा। **अन्यथेति**। यदि तत्परत्वमित्यर्थः। तेन तत्र गुणीभूतव्यङ्ग्यता नैव शङ्क्येति तात्पर्यम्। तासामेवालंकृतीनामित्ययं पठिष्यमाणकारिकोपस्कारः। पुनरिति कारिकामध्य उपस्कारः। **ध्वन्यङ्गतेति**। ध्वनिभेदकत्वमित्यर्थः। **व्यङ्ग्यप्राधान्यमिति**। अत्र हेतुः—चारुत्वोत्कर्षत इति। **यदीति**। तदप्राधान्ये तु वाच्या-

१. 'अलंकारान्तरेण' क-ख. २. 'यत्र' क-ख. ३. 'पुनः' क-ख-पुस्तकयोर्नास्ति.

१. 'अतिक्लिष्टं' ग. २. 'तावदस्य काव्यस्य कष्टसाध्या' क-ख. ३. 'तथाश्रया' क. ४. 'प्रणयतः' ग.

उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति । वस्तुमात्रव्यङ्ग्यत्वे चालंकाराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः । तदेवमर्थमात्रेणालंकारविशेषरूपेण वार्थेनार्थान्तरस्यालंकारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्येऽर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः ।

एवं ध्वनेः प्रभेदान्प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

**यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते ।**
**वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ३२ ॥**

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च । तत्र य एव स्फुटः शब्दशक्त्यार्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः । स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः । यथा—

---

लंकारा एव प्रधानमिति गुणीभूतव्यङ्ग्यतेति भावः । नन्वलंकारो वस्तुना व्यज्यते अलंकारा.........त...... इत्यत्रोदाहरणानि किमिति न दर्शितानीत्याशङ्क्याह—**वस्त्विति** । एतत्संक्षिप्योपसंहरति—**तदेवमिति** । व्यङ्ग्यस्य व्यञ्जकस्य च प्रत्येकं वस्त्वलंकाररूपतया द्विप्रकारत्वाच्चतुर्विधोऽयमर्थशक्त्युद्भव इति तात्पर्यम् । **एवमिति** । अविवक्षितवाच्यो विवक्षितान्यपरवाच्य इति द्वौ मूलभेदौ । आद्यस्य द्वौ भेदौ—अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसंक्रमितवाच्यश्च । द्वितीयस्य द्वौ भेदौ—अलक्ष्यक्रमोऽनुरणनरूपश्च । प्रथमोऽनन्तभेदः । द्वितीयो द्विविधः—शब्दशक्तिमूलोऽर्थशक्तिमूलश्च । पश्चिमस्त्रिविधः—कविप्रौढोक्तिकृतशरीरः कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरः स्वतःसंभवी च । ते च प्रत्येकं व्यङ्ग्यव्यञ्जकयोरुक्तभेदनयेन चतुर्धेति द्वादशविधोऽशक्तिमूलः । आद्यस्य चत्वारो भेदा

---

१.'उन्नेतव्यः' ग. २.'वस्त्वन्तरस्य' क-ख. ३.'प्रश्लिष्टत्वेन' क, 'प्रम्लिष्टत्वेन' ख.

---

१. 'अलंकारा......त......' क-ख-पुस्तकयोर्नास्ति. २. 'इत्थं' क ख. ३. 'प्रथमस्य' ग.

'कमलाअरा ण मलिआ हंसा उड्डाविआ ण अ पिउच्छा।
केण वि गामतडाए अब्भं उत्ताणअं फलिहम्॥'[1]

अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव। एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम्।

यथा—

'वाणीरकुडङ्गोड्डीणसउणिकोलाहलं सुणन्तीए।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं॥'

---

इति षोडश मुख्यभेदाः। ते च पदवाक्यप्रकारत्वेन[1] प्रत्येकं द्विविधा वक्ष्यन्ते। अलक्ष्यक्रमस्य तु[2] वर्णपदवाक्यसंघटनाप्रबन्धप्रकाश्यत्वेन पञ्चत्रिंशद्भेदाः। तदाभासेभ्यो ध्वन्याभासेभ्यो विवेको विभागः। अस्येत्यात्मभूतस्य ध्वनेरसौ काव्यविशेषो न गोचरः। 'कमलाकरा न मलिता हंसा उड्डायिता न च (सहसा) पितृष्वसः। केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम्॥' [इति च्छाया।] अन्येहो (?) पिउच्छा पितृष्वसा इत्थमामन्त्रयते। केनाप्यतिनिपुणेन। **वाच्याङ्गत्वमेवेति**। वाच्येनैव हि विस्मयविभावरूपेण मुग्धिमातिशयः प्रतीयत इति वाच्यादेव चारुत्वसंपत्। वाच्यं तु स्वात्मोपपत्तयेऽर्थान्तरं स्वोपस्कार[3]वाञ्छया व्यनक्ति। 'वेतसलतागहनोड्डीनशकुनिकोलाहलं शृण्वन्त्याः। गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥' [इति च्छाया।] अत्र दत्तसंकेतचौर्यकामुकरतसमुचितस्थानप्राप्तिर्ध्वन्यमाना[4] वाच्यमेवोपस्कुरुते। तथा हि गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वाः इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि, अङ्गानीत्येकमपि न तादृगङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्, सीदन्तीत्यास्तां गृहकर्म-

---

१. 'व्वूढं' इति गाथासप्तशतीधृतः पाठः.

---

१. 'प्रकाशकत्वेन' क-ख. २. 'अलक्ष्यक्रमात्तु' क-ख. ३. 'स्वोपकार' ख. ४. 'ध्वन्यमानवाच्यस्यैव' ग.

एवंविधो हि[1] विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्दे-श्यते। यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः। यथा—

'उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुण्हे।
अह दे विसमविरावो ससुरेण सुओ वलअसद्दो॥'

अत्र ह्यविनयपतिना सह रममाणा सखी बहिःश्रुतवलयकलकलया

---

पादनं स्वात्मानमपि धर्तुं न प्रभवतीति। गृहकर्मयोगेन[1] स्फुटं तथा लक्ष्यमाणा-ति। अस्मादेव वाच्यात्सातिशयमदन[2]परवशताप्रतीतेश्चारुत्वसंपत्तिः। **यत्र** **वति**। प्रकरणमादिर्यस्य शब्दान्तरसंनिधानसामर्थ्यलिङ्गादे[3]स्तदपगमादेव यत्रार्थो श्चितसमस्तभावः पुनर्वाच्यः पुनरपि स्वशब्देनोक्तोऽत एव स्वात्मावगतेः संपन्न-त्वादेव तावन्मात्रपर्यवसायी न भवति तथाविधश्च प्रतीयमानस्याङ्गतामेति सोऽस्य निर्विषय इत्यनेन व्यङ्ग्यतात्पर्यनिबन्धनं स्फुटं वदता व्यङ्ग्यगुणीभावे त्वेतद्वि-तमेव निबन्धनं मन्तव्यमित्युक्तं भवति। 'उच्चिनु पतितानि कुसुमानि मा धुनीः फालिकां हालिकस्नुषे। एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः॥' [ इति छाया। ] यतः श्वशुरः शेफालिकालतिकां प्रयत्नै रक्षंस्तस्या आकर्षणधूननादिना ष्यति तेनात्र विषमपरिपाकत्वं मन्तव्यम्। अन्यथा स्वोक्त्यैव व्यङ्ग्याक्षेपः त्। अत्र च 'कस्स वा ण होइ रोसो-' इत्येतदनुसारेण व्याख्या कर्तव्या। वाच्या-स्य प्रतिपत्तये लाभाय एतद्व्यङ्ग्यमपेक्षणीयम्। अन्यथा वाच्योऽर्थो न लभ्यते। तःसिद्धतया अवचनीय एव सोऽर्थः स्यादिति यावत्। नन्वेवं व्यङ्ग्यस्योपस्कारता

---

१. 'हि' क-पुस्तके नास्ति. २. 'व्यङ्ग्यत्वस्य' ग.

---

१. 'योगे च' ग. २. 'मदनावसरवशता' क-ख. ३. 'लिङ्गादेव यत्र' क-ख. . 'पूर्णत्वादेव' क-ख. ५. 'तात्पर्यनिबन्धन स्फुटं दधता' क-ख.

सख्या प्रतिबोध्यते । एतदपेक्षणीयं वाच्यार्थ[1]प्रतिपत्तये । प्रतिपन्ने च वाच्ये तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात्पुन[2]र्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः ।

ए[3]वं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं[4] कर्तुमाह—

**अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।**
**शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥ ३३ ॥**

स्खलद्गतेरुपचरितस्य शब्द[5]स्याव्युत्पत्तेरशक्तेर्वा निबन्धो यः स च न ध्वनेर्विषयः । य[6]तश्च—

---

प्रत्युक्ता भवेदित्याशङ्क्याह—**प्रतिपन्ने चेति** । श[1]ब्दे दत्त इति यावत् । **तदाभासविवेके प्रस्तुत इति** । सप्तमी हेतौ । तदाभासविवेकप्रस्तावलक्षणात्प्रसङ्गादिति यावत् । कस्य तदाभास इत्यपेक्षायामाह—**विवक्षितवाच्यस्येति** । स्पष्टे तु व्याख्याने प्रस्तुत इत्यसंगतम् । परिसमाप्तौ हि वि[2]वक्षिताभिधेयस्य तदाभासविवेकः । न त्वधुना प्रस्तुत......मनुबध्नाति । **स्खलद्गतेरिति** । गौणस्य लाक्षणिकस्य वा शब्दस्येत्यर्थः । अव्युत्पत्तिरनुप्रासादिनिबन्धनतात्पर्यप्र[3]वृत्तिः । यथा—'प्रेङ्खत्प्रेमप्रबन्धप्रचुरपरिचयप्रौढसीमन्तिनीनां चित्ताकाशावकाशे विहरति सततं यः स सौभाग्यभूमिः ।' अत्रानुप्रासरसिकतया प्रेङ्खदिति लाक्षणिकः, चित्तमाकाश इति गौणः प्रयोगः कविना कृतोऽपि न ध्वन्यमानरूपसुन्दरप्रयोजनांशपर्यवसायी । अ[4]शक्तेर्वृत्तपरिपूरणाद्यसामर्थ्यात् । यथा—'विषमकाण्डकुटुम्बकसंचयप्रवर वारिनिधौ पतता त्वया । जलतरङ्गविघूर्णितभाजने विचलितात्मनि कुड्यमये कृताः ॥' अत्र प्रवरान्तमौ[5]द्यपदं चन्द्रमस्युपचरितम् । भाजनमित्याशये कुड्यमय इत्यविचले कामपि कान्तिं न पुष्यति । ऋते वृत्तभरणात् । **स चेति** । प्रथमो-

---

१. 'वाच्यार्थे' क-ख. २. 'व्यङ्ग्यत्वमेव' क-ख. ३. 'एवंविधवाच्यस्य' ग. ४. 'तत्कर्तुं' क-ख. ५. 'अशक्तेरव्युत्पत्तेः' क-ख. ६. 'यतः' ग.

---

१. 'शब्दोऽर्थ इति' क-ख. २. [illegible] 'र्थः' क-ख. ३. 'प्रभृतिः' क-ख. ४. 'अशक्य...यसमर्थम्' क-ख. ५. 'आद्यं कृतं पादं' ग.

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।**

**यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥३४॥**

तच्चोदाहृतविषयमेव ।

इति श्री[1]राजानकानन्दवर्धनाचार्यविरचिते ध्व[2]न्यालोके द्वितीय उद्द्योतः ।

---

द्योते यः प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवय इत्यत्र 'वदति बिसिनीपत्रशयनम्' इ[1]त्यादि भाक्तम् । स न केवलं ध्वनेर्विषयो यावदयमन्योऽपीति चशब्दस्यार्थः । उक्तमेव ध्वनिस्वरूपं तदाभासविवेकहेतुतया कारिकाकारोऽनुवदतीत्यभिप्रायेण वृत्तिकृदुपस्कारं ददाति—**यतश्चेति । अवभासनमिति ।** भावानयने द्रव्यानयनमिति न्यायादवभासनं व्यङ्ग्यम् । ध्वनिलक्षणं ध्वनेः स्वरूपम् । पूर्णं भासनं तद्ध्वनेर्लक्षणं प्रमाणम् । तच्च पूर्णं पूर्णध्वनिस्वरूपनिवेदकत्वात् । अथवा ज्ञानमेव ध्वनिलक्षणम् । लक्षणस्य ज्ञानपरिच्छेद्यत्वात् । वृत्तावेवकारेण ततोऽन्यस्य चाभासरूपत्वमेवेति सूचयता तदाभासविवेकहेतुभावो यः प्रक्रान्तः स एव निर्वाहित इति शिव[2]म् ।

प्रा[3]च्यं प्रोल्लासमात्रं स्याद्भिदेनामञ्च्यते यया ।
वन्देऽभिनवगुप्तोऽहं पश्यन्तीं तामिदं जगत् ॥

इति श्रीमहामाहेश्वराचार्यवर्या[4]भिनवगुप्तोन्मीलिते सहृदयलोक ( ध्वन्यालोक ) लोचने ध्वनिसंकेते द्वितीय उद्द्योतः ।

---

१. 'श्रीमदानन्द' क-ख. २. 'काव्यालोके' क-ख. 'सहृदयालोके' ग.

---

१. 'इत्यादिरक्तवितक्तः' क-ख. २. 'सर्वं शिवम्' ग. ३. 'प्राज्यं' ग.
४. 'अभिनवगुप्तविरचिते काव्यालोकलोचने' ग.

तृतीय उद्द्योतः ।

एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्यञ्जकमुखेन तत्प्रकाश्यते[1]—

**अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।**
**तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ १ ॥**

---

स्मरामि स्मरसंहारलीलापाटवशालिनः ।
प्रसह्य शंभोर्देहार्धं हरन्तीं परमेश्वरीम् ॥

उद्योतान्तरसंगतिं कर्तुमाह वृत्तिकारः—**एवमित्यादि** । तत्र[1] वाच्यमुखेन तावदविवक्षितवाच्यादयो भेदाः । वाच्यं च यद्यपि व्यञ्जकमेव । यथोक्तम्—'यत्रार्थः शब्दो वा–' इति । ततश्च[2]......मुखेनापि भेद उक्तः । तथापि स वाच्योऽर्थो व्यङ्ग्यमुखेनैव भिद्यते । तथा[3] ह्यविवक्षितवाच्यो व्यङ्ग्यो न्यग्भावितः विवक्षितान्य[4]-परवाच्य इति व्यङ्ग्यार्थप्रवण एवोच्यते । इत्येवं मूलभेदयोरेव यथास्वमवान्तरभेदसहितयोर्व्यञ्जकरूपोऽर्थः स व्यङ्ग्यमुखे प्रेक्षिताशरणतयैव भेदमासादयति । अत एवाह—**व्यङ्ग्यमुखेनेति** । किं च यद्यप्यर्थो व्यञ्जकस्तथापि व्यङ्ग्यतायोग्योऽप्यसौ भवतीति । शब्दस्तु न कदाचिद्व्यङ्ग्यः । अपि[5] तु व्यञ्जक एवेति । तदाह—**व्यञ्जकमुखेनेति** । न च वाच्यस्याविवक्षितादिरूपेण यो भेदस्तत्र सर्वथैव व्यञ्जकमुखत्वं[6] नास्तीति पुनःशब्देनाह । व्यञ्जकमुखेनापि भेदः सर्वथैव न प्रकाशितोऽधुना पुनः शुद्धव्यञ्जकमुखेन । तथाहि व्यङ्ग्यमुखप्रेक्षितया विना पदं वाक्यं वर्णाः पदभागः संघटना महावाक्यमिति स्वरूपत एव व्यञ्जकानां भेदः । न चैषामर्थवत्कदाचिदपि व्यङ्ग्यता संभवतीति[7] व्यञ्जकैकनियतं स्वरूपं यत्तन्मुखेन भेदः प्रकाश्यत इति तात्पर्यम् । यस्तु व्याचष्टे—'व्यङ्ग्यानां वस्त्वलंकाररसानां मुखेन' इति स एवं प्रष्टव्यः—एतत्तावत्त्रिभेदत्वं न कारिकाकारेण कृतम् । वृत्तिकारेण तु

१. 'एतत्प्रकाशते' ग.

१. 'अत्र' क-ख. २. 'ततश्च···—भिद्यते' क-खपुस्तकयोर्नास्ति. ३. 'तथाप्यविवक्षितो वाच्ये व्यङ्ग्येन' क-ख. ४. 'विवक्षितोऽन्यपरो' क-ख. ५. 'अपि तस्य' ग. ६. 'व्यञ्जकत्वमुखे' क-ख. ७. 'संभाव्यते' क-ख.

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये स्वप्रभेदे[1] पदप्रकाशता यथा महर्षेर्व्यासस्य—'सप्तैताः समिधः श्रियः' । यथा वा कालिदासस्य—'कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्' । यथा वा तस्यैव[2]—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' । एतेषूदाहरणेषु समिध इति संनद्ध इति मधुराणामिति च पदानि व्यञ्जका[3]भिप्रायेणैव कृतानि ।

---

दर्शितम् । न चेदानीं वृत्तिकारो भेदप्रकटनं करोति । ततश्चेदं कृतमिदं क्रियत' इति कर्तृभेदे का संगतिः । न चैतावता सकलप्राक्तनग्रन्थसंगतिः कृता भवति । अविवक्षितवाच्यादीनामपि प्रकाराणां दर्शितत्वादित्यलं निजपूर्वजसगोत्रैः साकं विवादेन । चकारः कारिकायां यथासंख्यशङ्कानिवृत्त्यर्थः । तेनाविवक्षितवाच्यो द्विप्रभेदोऽपि प्रत्येकं पदवाक्यप्रकाश इति द्विधा । तदन्यस्य विवक्षिताभिधेयस्य संबन्धी यो द्वितीयो भेदः क्रमद्योत्यो नाम स्वभेदसहितः सोऽपि प्रत्येकं द्विधैव । अनुरणनेन रूपा[2]णां सादृश्यं यस्य तादृग्व्यङ्ग्यं यत्त[3]स्येत्यर्थः । महर्षेरित्यनेन तदनुसंधत्ते[4] यत्प्रागुक्तम् । अथ च रामायणमहाभारतप्रभृतीनि लक्ष्ये दृश्यन्त इति । 'धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा । मित्राणां चानभिद्रोहः सप्तैताः[5] समिधः श्रियः ॥' समिच्छब्दार्थस्यात्र सर्वथा तिरस्कारोऽसंभवात् । समिच्छब्देन च व्यङ्ग्येनानन्यापेक्षलक्ष्म्युद्दीपनक्षमत्वं सप्तानां वक्त्रभिप्रेतं ध्वनितम् । यद्यपि—'निःश्वासान्ध इवादर्शः—' इत्याद्युदाहरणाद[6]प्ययमर्थो लभ्यते तथापि प्रसङ्गाद्बहुलस्यव्यापित्वं दर्शयितुमुदाहरणान्तराण्युक्तानि । अत्र च वाच्यस्यात्यन्ततिरस्कारः पूर्वोक्तमनुसृत्य योजनीयः किं पुनरुक्तेन । संनद्धपदेन चात्रासंभवात्स्वार्थेनोद्धतत्वं लक्षयता वक्त्रभिप्रेता निष्कारुणिकत्वाप्रतिकार्यत्वाप्रेक्षापूर्वकारित्वादयो ध्वन्यन्ते । तथैव मधुरशब्देन सर्वविषयिरञ्जकत्वदर्पकत्वादिकं लक्षयता सातिशयाभिलाषविषयत्वमिति वक्त्रभिप्रेतं ध्वन्यते । **तस्यैवेति** । अविवक्षितवाच्यस्य यो द्वितीयो भेदस्तस्येत्यर्थः । 'प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा सोढं तच्च तथा त्वया

---

१. 'प्रभेदे' ग. २. 'यथा वा तस्यैव' ग-पुस्तके नास्ति. ३. 'व्यञ्जकत्व' क-ख.

---

१. 'प्रतिपादितत्वात्' ग. २. 'रूपेण' ग. ३. 'यत्र' क-ख. ४. 'संबध्यते' क-ख. ५. 'इति वृत्तिः क्षमा दानं तपः शौचं' क-ख. ६. 'उदाहरणानां' क-ख. ७. 'व्यञ्जकत्व' क-ख.

तस्यैवार्थान्तरसंक्रमितवाच्ये यथा—'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' ।

अत्र रामेणेत्येतत्पदं साहसैकरसत्वादि व्यङ्ग्याभिसंक्रमितवाच्यं व्यञ्जकम् ।

यथा वा—

'एमेअ जणो तिस्सा देउ कवोलोपमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ॥'

---

कुलजनो धत्ते यथोच्चैःशिरः । व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्यापदः साक्षिणा' इति । रक्षःस्वभावादेव यः क्रूरोऽनतिलङ्घ्यशासनत्वाद्दुर्मदतया च प्रसह्य निराक्रियमाणः क्रोधस्तस्यैतत्तावत्स्वचित्तवृत्तिसमुचितमनुष्ठापकत्वं नाम । मान्योऽपि कश्चिन्ममाज्ञां लङ्घयिष्यति । त इति । यया तादृगपि तथा न गणितस्तस्यास्तवेत्यर्थः । तदपि तथा अविकारेणोत्सवापत्तिबुद्ध्या नेत्रविस्तारिकामुखप्रसादादिलक्ष्यमाणया सोढं यथा येन प्रकारेणेदानींतनकुलवधूजन इति यः कश्चित्पामरप्रायोऽपि कुलवधूशब्दवाच्य उच्चैः शिरो धत्ते । एवंविधाः किल वयं कुलवध्वो भवाम इति । अथ च शिरःकर्तनावसरे त्वया शीघ्रं कृन्त्यतामिति यथा सोढं तथोच्चैः शिरो धृतं यथान्योऽपि कुलस्त्रीजन उच्चैः शिरो धत्ते नित्यप्रवृत्ततया । एवं रावणस्य तव च समुचितकारित्वं निर्व्यूढम् । मम पुनः सर्वमेवानुचितं पर्यवसितम् । तथाहि राज्यनिर्वासनादिनिरवकाशीकृतधनुर्व्यापारस्यापि कलत्रमात्ररक्षणप्रयोजनमपि यच्चापमभूत्तत्संप्रति त्वय्यरक्षितायामेव निष्प्रयोजनम् । तथापि च तद्धारयामि तन्नूनं निजजीवितरक्षैवास्य संभाव्यते । तद्युक्तं रामेणेत्यसमसाहसत्वसत्यसंधत्वानुचितकारित्वादिव्यङ्ग्यधर्मान्तरपरिणतेनेत्यर्थः । 'कापुरुषादिधर्मपरिग्रहस्त्वादिशब्दात्' इति यद्व्याख्यातं तदसत् । कापुरुषस्य ह्येतदेव प्रत्युतोचितं स्यात् । प्रिय इति शब्दमात्रमेवैतदिदानीं संवृत्तम् । प्रियशब्दस्य प्रवृत्तिनिमित्तं यत्प्रेमनाम तदप्यनौचित्यकलङ्कितमिति शोकालम्बनोद्दीपनविभागयोगात्करुणरसो रामस्य स्फुटीकृत इति । **एमेअ**

---

१. 'व्यङ्ग्यार्थसंक्रमित' क-ख.

---

१. 'विस्तारिता' क-ख. २. 'लक्षणया' क-ख. ३. 'अरक्षितव्यापन्नायामेव' ग. ४. 'न चैतद्युक्तं' क-ख.

अत्र द्वितीयश्चन्द्रशब्दोऽर्थान्तरसंक्रमितवाच्यः ।

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

---

**इति** । 'एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् । परमार्थविचारे पुनश्चन्द्रश्चन्द्र इव वराकः ॥' [ इति च्छाया । ] एवमेवेति स्वयमविवेकान्धतया जन इति लोकप्रसिद्धगतानुगतिकमात्रशरणः तस्या इत्यसाधारणगुणगणमहार्घवपुषः । कपोलोपमायामिति निर्व्याजलावण्यसर्वस्वभूतमुखमध्यवर्तिप्रधानभूतकपोलतलस्योपमायां प्रत्युत तदधिकवस्तुकर्तव्यं ततो दूरनिकृष्टं शशिबिम्बं कलङ्कव्याजजिह्मीकृतम् । एवं यद्यपि गड्डरिकाप्रवाहपतितमभितः पतितो लोकः, तथापि यदि परीक्षकाः परीक्षन्ते तद्वराकः कूपैकभाजनं यश्चन्द्र इति प्रसिद्धः स चन्द्र एव क्षयित्वविलासशून्यत्वमलिनत्वधर्मान्तरसंक्रान्तो युक्तः । अत्र च यथा व्यङ्ग्यधर्मान्तरसंक्रान्तिस्तथा पूर्वोक्तमनुसंधेयम् । एवमुत्तरत्रापि । एवं प्रथमभेदस्य द्वावपि प्रकारौ पदप्रकाशकत्वेनोदाहृत्य वाक्यप्रकाशकत्वेनोदाहरति—**या निशेति** । **विवक्षित इति** । तेन ह्युक्तेन न किंचिदुपदेश्यं प्रत्युपदेशः सिध्यति । निशायां जागरितव्यमन्यत्रान्धवदासितव्यमिति किमनेनोक्तेन । तस्माद्बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ च 'पराङ्मुखत्वं ध्वनति । सर्वशब्दार्थस्य चापेक्षिततयाप्युपपद्यमानतेति न सर्वशब्दार्थान्यथानुपपत्त्यायमर्थ आक्षिप्तो मन्तव्यः । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां या निशाख्या मोहजननी तत्त्वदृष्टिस्तस्यां संयमी जागर्ति कथं प्राप्येतेति । न तु विषयवर्जनमात्रादेव संयमीति यावत् । यदि वा सर्वभूतनिशायामेव मोहिन्यां जागर्ति कथमियं हेयेति । यस्यां तु मिथ्यादृष्टौ सर्वाणि भूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयः । तस्यां हि चेष्टायां नासौ

---

१. 'तदधिकरणगुणं वस्तु' क-ख. २. 'जिह्मितम्' ग. ३. गलितत्व' ग. ४. 'योऽर्थः' ग. ५. 'उदाहरति—अविवक्षितेत्यादि' क-ख. ६. 'संभवति' क-ख. ७. 'इत्यत्र रात्रिवदासितव्यं' क-ख. ८. 'पराधीनत्वं ध्वनितं' क-ख.

अनेन हि वाक्येन[1] निशार्थो न जागरणार्थः कश्चिद्विवक्षितः । किं तर्हि तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम् ।

तस्यैवार्थान्तरसंक्रमितवाच्यस्य वाक्यप्रकाशता यथा—

'विसमइओ[2] च्चिअ काण वि काण वि वालेइ अमिअमओ ।
काण वि विसामिअमओ काण वि अविसामओ कालो ॥'

अत्र हि वाक्ये विषामृतशब्दाभ्यां दुःखसुखरूपसंक्रमितवाच्याभ्यां

---

प्रबुद्धः । एवमेव [1]लोकोत्तरव्यवस्थितिः पश्यति मन्यते च । तस्यैवान्तर्बहिष्करणवृत्तिश्चरितार्था । अन्यस्तु न पश्यति न च मन्यत इति तत्त्वदृष्टिपरेण भाव्यमिति तात्पर्यम् । [2]एवं च पश्यत इति वचनं न स्वार्थमात्रविश्रान्तम् । अपि तु व्यङ्ग्य एव विश्राम्यति । यत्तच्छब्दयोश्च न स्वतन्त्रार्थतेति सर्व एवायमाख्यातसहायः पदसमूहो व्यङ्ग्य[3]परः । तदाह—**अनेन हि वाक्येनेति** । प्रतिपाद्यत इति । ध्वन्यत इत्यर्थः । तथा विषमयो विषमयतां प्राप्तः । केषांचिद्दुष्कृतिनामतिविवेकिनां वा । केषांचित्सुकृतिनामत्यन्तविवेकिनां वातिक्रामत्यमृतमयनिर्वाणः । केषांचिन्मिश्रकर्मणां विवेकाविवेकवतां वा विषामृतमयः । केषामपि मूढप्रायाणां धाराप्राप्तयोगभूमिकारूढानां वा अविषामृतमयः कालोऽतिक्रामतीति संबन्धः । विषामृतपदे च लावण्यादिशब्दवन्निरूढलक्षणरूपतया सुखदुःखसाधनयोर्वर्तेते । विषं निम्बममृतं कपित्थमिति(वत्) । न चात्र सुखदुःखसाधने तन्मात्रविश्रान्ते । अपि तु स्वकर्तव्यसुखदुःखपर्यवसितेन च ते साधनेन सर्वथा विवक्षिते । निःसाधनयोस्तयोरत्राभावात् । तदाह—**संक्रमितवाच्याभ्यामिति** । केषांचिदिति वाच्यविशेषसंक्रान्तिः । अतिक्रामतीत्यस्य च······मात्रसंक्रान्तिः । काल इत्यस्य च सर्व-

---

१. 'वाक्यार्थेन' ग.

२. 'विषमय इव केषामपि केषामपि प्रयात्यमृतमयः ।
केषामपि विषामृतमयः केषामप्यविषामृतः कालः ॥' इति च्छाया.

---

१. 'लोकोक्ति' क-ख. २. 'एवं पश्यत इति मुनेरिति च न स्वार्थ' क-ख. ३. 'व्यापारः' ख. ४. 'सर्व[illegible]' ग. ५. 'अति—व्यवहारसंक्रान्तिः' क-ख-पुस्तकयोर्नास्ति.

व्यवहार इत्यर्थान्तर[1]संक्रमितवाच्यस्यास्य व्यञ्जकत्वम् ॥

विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

'प्रा[2]तुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि ।
पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम् ॥'

अत्र हि जड इ[3]ति पदं निर्विण्णेन वक्त्रात्मसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते ।

तस्यैव वाक्यप्रकाशता यथा हर्षचरिते सिंहनादवाक्येषु—'वृत्तेऽस्मिन्महाप्रलये धरणीधारणायाधुना त्वं शेषः' ।

---

व्यवहारसंक्रान्तिः। उपलक्षणार्थं तु विषा[1]मृतलक्षणमात्रसंक्रान्तिरिति वृत्तिकृता व्याख्यातम् । तदाह—**वाक्यमिति** । एवं कारिकाप्रथमार्धलक्षितांश्चतुरः प्रकारानुदाहृत्य द्वितीयकारिकार्धस्वीकृतान्षडन्यान्प्रकारान्क्रमेणोदाहरति—**विवक्षिताभिधेयस्येत्यादिना**। प्रा[2]तुमिति पूरयितुम्। धनैरिति बहुवचनं यो यो येनार्थी तस्य तेनेति सूचनार्थम् । अतएवार्थिग्रहणम् । जनस्येति बाहुल्येन हि लोको धनार्थी । न तु गुणैरुपकारार्थी । दैवेनेति। अशक्यपर्यनुयोगेनेत्यर्थः । जडः । किंकर्तव्यतामूढ इत्यर्थः । अथ कूपो जडो योऽर्थिता कस्य कीदृशीत्यसंभवद्विवेक इति । अत एव जडः शीतलो निर्वेदसंतापरहितः । तथा जडः सततजलयोगितया परोपकारासमर्थोऽस्मीति । अन्यो हि तावदवश्यं कश्चित्सृष्टो न त्वहमिति निर्वेदः । प्रसन्नं लोकोपयोगि अम्बु धारयतीति । **कूपोऽथवेति** । लोकैरप्यलक्ष्यमाण इत्यर्थः । **आत्मसमानाधिकरणतयेति** । अनेन तृतीयार्थे नायं जडशब्दस्तटाकार्थेन पुनरुक्तार्थसंबन्ध इत्यभिप्रायेणाह—**कूपसमानाधिकरणतामिति** । स्वशक्त्येति शब्दशक्त्युद्भवत्वं द्योतयति । **महाप्रलय इति** । महानासमन्तात्प्रलयो यत्र

---

१. 'संक्रान्त' क-ख.　२. 'त्रातुं' क-ख.　३. 'इत्येतत्' क-ख.

---

१. 'विषामृतग्रहणमात्रसंक्रमणमात्र क-ख. २. 'त्रातुमिति' क-ख.

एतद्धि वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्या स्फुटमेव प्रकाशयति ।

अस्यैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा हरिविजये—

'चूअङ्कुरावअंसं छणपसरमहं घणमहुरामोअम् ।
[1]असमप्पिअं पि गहिअं कुसुमसरेण महुमासलच्छिमुहम् ॥'

अत्र ह्यसमर्पितमपि कुसुमशरेण मधुमासलक्ष्म्या मुखं गृहीतमित्यसमर्पितमित्येतदवस्थाभिधायिपदमर्थशक्त्या कुसुमशरस्य बलात्कारं [2]प्रकाशयति ।

अत्रैव प्रभेदे वाक्यप्रकाशता यथोदाहृतं प्राक् 'सज्जेहि सुरहिमासो' इत्यादि । अत्र सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गाय

---

तादृशि शोककारणभूते वृत्ते धरण्या राज्यधुराया धारणायाश्वासनाय त्वं शेषः शिष्यमाणः । इतीयता पूर्णे वाक्यार्थे कल्पावसाने भूपीठभारोद्वहनक्षम एको नागराज एव दिग्दन्तिप्रभृतिष्वपि प्रलीनेष्वित्यर्थान्तरम् । 'चूताङ्कुरावतंसं क्षणप्रसरमहद्घनमधुरामोदम् । असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम् ॥' अत्र महच्छब्दस्य परनिपातः प्राकृते नियमाभावात् । क्षण उत्सवः । ( महोत्सवप्रसरेणेत्यर्थः ) । मुखं प्रारम्भो वक्त्रं च । तच्च सुरामोदयुक्तं भवति । मध्वारम्भे कामश्चित्तमाक्षिपतीत्येतावानयमर्थः कविप्रौढोक्त्यार्थान्तरव्यञ्जकः संपादितः । अत्र कविनिबद्धवक्तृप्रौढोक्तिशरीरार्थशक्त्युद्भवे पदवाक्य[1]प्रकाशतायामुदाहरणद्वयं न दत्तम् । 'प्रौढोक्तिमात्रनिष्पन्नशरीरः संभवी स्वतः ।' इति प्राच्यकारिकाया इयतैवोदाहृतत्वं भवेदित्यभिप्रायेणेति । [2]तत्र पदप्रकाशता यथा—'सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः । किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥' इत्यत्र कविना यो विरागी वक्ता निबद्धस्तत्प्रौढोक्त्या जीवितशब्दोऽर्थशक्तिमूल-

१. 'अपणामअं वि' क-ख. २. 'लक्षयति' क-ख.

१. 'प्रकाशितया' ग. २. 'अत्र' ग.

शरानित्ययं वाक्यार्थः कविप्रौढोक्तिमात्रनिष्पन्नशरीरो मन्मथोन्मादकतापादनावस्थानं[1] वसन्तसमयस्य सूचयति ।

स्वतःसंभविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

'वाणिअअहत्तिदन्ता कुत्तो अम्हाण वाघकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सुण्हा ॥'

अत्र लुलितालकमुखीत्येतत्पदं व्याधवध्वाः स्वतःसंभावितशरीरार्थ[2]शक्त्या सुरतक्रीडासक्तिं सूचयंस्तदीयस्य[3] भर्तुः सततसंभोगक्षामतां प्रकाशयति ।

तस्यैव वाक्यप्रकाशता यथा—

'सिहिपिञ्छकण्णऊरा बहुआ वाहस्स गव्विरी भमइ ।
मुत्ताफलरइअपसाहणाणँ मज्झे सवत्तीणम् ॥'

अनेनापि[4] वाक्येन व्याधवध्वा शिखिपिच्छकर्णपूराया नवपरिणीतायाः कस्याश्चित्सौभाग्यातिशयः प्रकाश्यते[5] । तत्संभोगकाले स एव व्याधः करिवरवधव्यापारसमर्थ आसीदित्यर्थप्रकाशनात्[6] ।

---

तयेदं ध्वनयति—सर्व एवामी कामा विभूतयश्च जीवितमात्रोपयोगिनः । तदभावे हि सद्भिरपि तैरसद्रूपताप्यते । तदेव च जीवितं प्राणधारणरूपत्वात्प्राणवृत्तेश्च चाञ्चल्यादनास्थापदमिति विषयेषु वराकेषु किं दोषोद्घोषणदौर्जन्येन । निजमेव जीवितमुपालभ्यम् । तदपि वा निसर्गचञ्चलमिति न सापराधमित्येतद्गाढं[1] वैराग्यमिति । वाक्यप्रकाशता यथा—'शिखरिणि–' इत्यादौ[2] । 'वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च । यावल्लुलितालकमुखी गृहे परिष्वक्कते[3] स्नुषा ॥' [ इति च्छाया । ] अत्र लुलितेति स्वरूपमात्रेण विशेषणमविलुप्ततया[4] च हस्तिदन्ताद्यपहरणं संभाव्यमिति वाक्यार्थस्य[5] तावत्येव न काचिदनुपपत्तिः । **सिहिपिच्छेति** । पूर्वमेव योजिता गाथा । **नन्विति** । समुदाय एव

---

१. 'वस्थानात्' क-ख. २. 'संभावितार्थ' ग. ३. 'सूचयति तदीयस्य' ग. ४. 'अपि' क-ख.पुस्तकयोर्नास्ति. ५. 'प्रख्याप्यते' ग. ६. 'प्रदर्शनात्' ग.

---

१. 'इत्येतावत्' ग. २. 'इत्यादि' ग. ३. 'परिष्वक्के सविभ्रमं चंक्रम्यते' ग. ४. 'अवलिप्ततया' ग. ५. 'वाच्यार्थस्य' ग.

ननु ध्वनिः काव्यविशेष इत्युक्तं तत्कथं तस्य पदप्रकाशता। काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः शब्दसंदर्भविशेषः। तद्भावश्च पदप्रकाशत्वेनोपपद्यते। पदानां स्मारकत्वेनावाचकत्वात्। उच्यते—स्यादेष दोषः यदि वाचकत्वं प्रयोजकं न ध्वनिव्यवहारे स्यात्। न त्वेवम्। तस्य व्यञ्जकत्वेन व्यवस्थानात्। किं च काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि[1] चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधी।

---

ध्वनिरित्यत्र पक्षे चोद्यमेतत्। **तद्भावश्चेति**। काव्यविशेषत्वमित्यर्थः। अवाचकत्वादिति यदुक्तं सोऽयमप्रयोजको हेतुरिति च्छलेन तावद्दर्शयति—**स्यादेष दोष इति**। एवं छलेन परिहृत्य वस्तुवृत्तेन परिहरति—**किं चेति**। यद्यपरो ब्रूयात्—न मया अवाचकत्वं ध्वन्यभावे हेतूकृतं किं[1] तूक्तं काव्यध्वनिः। काव्यं च नाकाङ्क्षा[2]प्रतिपत्तिचारिवाक्यं न पदमिति तत्राह—स[3]त्यमेवं तथापि तु पदं न ध्वनिरित्यस्माभिरुक्तम्। अपि तु समुदाय एव। तथा च पदप्रकाशो ध्वनिरिति प्रकाशपदेनोक्तम्। ननु पदस्य तत्र तथाविधं सामर्थ्यमिति कुतोऽखण्ड एव प्रतीतिक्रम इत्याशङ्क्याह—**काव्यानामिति**। उक्तं हि प्राग्विवेककाले व्यपदेश इति। ननु भागेषु पदरूपेषु कथं सा चारुत्वप्रतीतिरारोपयितुं शक्या। तानि हि स्मारकाण्येव। ततः किम्। मनोहारिव्य[4]ञ्ज्यार्थस्मारकत्वाद्धि चारुत्वप्रतीतिनिबन्धनत्वं केन वार्यते। त[5]था श्रुतिदुष्टानां पेलवादिपदानामसभ्यपेलाद्यर्थं प्रति न वाचकत्वम्। अपि तु स्मारकत्वम्। तद्वशाच्चाचारुत्वरूपं काव्यं श्रुतिदुष्टम्। तच्च श्रुतिदुष्टत्वमन्वयव्यतिरेकाभ्यां भागेषु

---

१. 'संस्थिति' ग.

---

१. 'किंतु कुकाव्यं च नाकाङ्क्षा' क-ख. २. 'नाकाङ्क्षिपतिवृत्तिकारिकावाक्यं न ··· रं पदमिति' ग. ३. 'सत्यमेतत्तथापि पदं ध्वनिरस्माभिरुक्तं' क-ख. ४. 'व्यञ्ज्यार्थाः' क-ख. ५. 'यथा' क-ख.

'अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम् ॥
पदानां स्मारकत्वेऽपि पदमात्रावभासिनः ।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ॥'
'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥'

इति परिकरश्लोकाः ।

**यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।**
**वाक्ये संघटनायां च स प्रबन्धेऽपि[3] दीप्यते ॥ २ ॥**

---

व्यवस्थाप्यते तथा प्रकृतेऽपीति तदाह—**अनिष्टस्येति** । अनिष्टार्थस्मारकस्येत्यर्थः । दुष्टतामित्यचारुत्वम् । गुणमिति चारुत्वम् । एवं दृष्टान्तमभिधाय पादत्रयेण तुर्येण दार्ष्टान्तिकार्थ उक्तः । अधुनोपसंहरति—**पदानामिति** । यत एवमिष्टस्मृतिश्चारुत्वमावहति तेन हेतुना सर्वेषु प्रकारेषु ध्वनिनिरूपितस्य पदमात्रावभासिनोऽपि पदप्रकाशस्यापि ध्वने रम्यतास्ति । स्मारकत्वेऽपि पदानामिति समन्वयः । अपिशब्दः काकाक्षिन्यायेनोभयत्रापि संबध्यते । अधुना चारुत्वप्रतीतौ पदस्यान्वयव्यतिरेकौ दर्शयति—**विच्छित्तीति** । एवं कारिकां व्याख्याय तदसंगृहीतमलक्ष्यक्रमव्यङ्ग्यं प्रपञ्चयितुमाह—**यस्त्विति** । तुशब्दः पूर्वभेदेभ्योऽस्य विशेषद्योतकः । वर्णसमुदायश्च पदम् । तत्समुदायो वाक्यम् । संघटना पदगता वाक्यगता च । संघटितवाक्यसमुदायः प्रबन्ध इत्यभिप्रायेण वर्णादीनां यथाक्रमसुपादानम् । आदिशब्देन पदैकदेशपदद्वितीयादीनां ग्रहणम् । सप्तम्या निमित्तत्वमुक्तम् । दीप्यतेऽवभासते सकलकाव्यावभासतयेति पूर्ववत्काव्यविशेषत्वं समर्थितम् । भूयसेति प्रत्येक-

---

१. 'श्रुतिः' क.ख. २. 'गुणः' ग. ३. 'प्रबन्धोऽभिधीयते' क.ख.

तत्र वर्णानामनर्थकत्वाद्द्योतकत्वमसंभवीत्याशङ्क्येदमुच्यते—

**शषौ सरेफसंयोगौ ढकारश्चापि भूयसा ।**
**विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः ॥ ३ ॥**
**त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।**
**तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः ॥ ४ ॥**

श्लोकद्वयेनान्वयव्यतिरेकाभ्यां वर्णानां द्योतकत्वं दर्शितं भवति ।

---

मभिसंबध्यते । **विरोधिन इति** । परुषा वृत्तिविरोधिनी शृङ्गारस्य । यतस्ते वर्णा भूयसा प्रयुज्यमाना न रसांश्च्योतन्ति स्रवन्ति । यदि वा तेन शृङ्गारविरोधित्वेन हेतुना वर्णाः शषादयो रसाच्छृङ्गाराच्च्यवन्ते तं न व्यञ्जयन्तीति व्यतिरेक उक्तः । अन्वयमाह—त एव त्विति शादयः । तमिति बीभत्सादिकं रसं दीपयन्ति । कारिकाद्वयं तात्पर्येण व्याचष्टे-**श्लोकद्वयेनेति** । यथासंख्यप्रसङ्गपरिहारार्थं श्लोकाभ्यामिति न कृतम् । पूर्वश्लोकेन हि व्यतिरेक उक्तो द्वितीयेनान्वयः । अस्मिन्विषये शृङ्गारलक्षणे शषादिप्रयोगः सुकवित्वमभिवाञ्छता न कर्तव्य इत्येवंफलत्वादुपदेशस्य कारिकाकारेण पूर्वं व्यतिरेक उक्तः । न च सर्वथा न कर्तव्योऽपि तु बीभत्सादौ कर्तव्य एवेति पश्चादन्वयः । वृत्तिकारेण त्वन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्तुमन्वयः पूर्वमुपात्तः । एतदुक्तं भवति—यद्यपि विभावानुभावव्यभिचारिप्रतीतिसंपदेव रसास्वादे निबन्धनम्,तथापि विशिष्टश्रुतिकटुशब्दसमर्प्यमाणास्ते विभावादयस्तथा भवन्तीति स्वसंवित्सिद्धमदः । तेन वर्णानामपि श्रुतिसमयोपलक्ष्यमाणोऽर्थानपेक्ष्यपि श्रोत्रैकग्राह्यो मृदुपरुषात्मस्वभावो रसास्वादे सहकार्येव । अत एव च सहकारितामेवाभिधातुं निमित्तसप्तमी कृता वर्णादिष्विति । न तु वर्णैरेव रसाभिव्यक्तिः । विभावादिसंयोगाद्धि रसनिष्पत्तिरित्युक्तं बहुशः । श्रोत्रैकग्राह्योऽपि च स्वभावो रसनिस्यन्दे व्याप्रियत एव । आपद्गीतवत् । पुष्करवाद्यनियमितविशिष्ट-

---

१. 'न संभवति' ग. २. 'रसश्च्युतः' ग.

---

१. 'रसादीन्' ग. २. 'विरोधहेतुना' ग. ३. 'प्रच्यवन्ते' क-ख. ४. 'श्लोकद्वयाभ्यां' ग. ५. 'लक्ष्यमाणोनर्थो' क-ख.

पदे चालक्ष्यक्रमव्यङ्ग्यस्य द्योतकत्वं यथा—

'उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन[1] दहनेन न वीक्षितासि ॥'

अत्र हि ते इत्येतत्पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम्[2] ।

---

जातिकरणप्राणाद्यनुकरणशब्दवच्च[1] । पदे चेति । पदे च सतीत्यर्थः । तेन रसप्रतीतिर्विभावादेरेव । तेन विभावादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणरसचमत्कारविधायिनो भवन्ति तदा पदस्यैवासौ महिमा समर्प्यत इति भावः । अत्र हीति । वासवदत्तादाहाकर्णनप्रबुद्धशोकनिर्भरस्य वत्सराजस्येदं परिदेवितवचनम् । तत्र शोको नामेष्टजनविनाशप्रभव इति । तस्य जनस्य ये भ्रूक्षेपकटाक्षप्रभृतयः पूर्वं रतिविभावतामवलम्बन्ते स्म त एवात्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया निरपेक्षभावत्वप्राणं[2] करणमुद्दीपयन्तीति स्थिते ते लोचने इति तच्छब्दस्तल्लोचनगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरणकारी[3] द्योतको रसस्यासाधारणनिमित्ततां प्राप्तः । तेन यत्केनचिच्चोदितं परिहृतं च तन्मिथ्यैव । तथाहि चोद्यम्—प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति सामर्थ्यमिति । उत्तरं च—रसाविष्टोऽत्र परामृष्टेति[4] । (?) तदुभयमनुत्थानोपहतम् । यत्र ह्यनूद्दिश्यमानधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं[5] वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते । यत्रोच्यते—'यत्तदोर्नित्यसंबन्धात्'[6] इति तत्र पूर्वं प्रक्रान्तपरामर्शकतच्छब्दस्य । यत्र पुनर्निमित्तोपस्मरणविशेषाकारसूचकत्वं तच्छब्दस्य सघट इत्यादौ यथा तत्र का प[रामर्श]कथेत्यास्तामलीकपरामर्शकैः पण्डितंमन्यैः सह विवादेन[7] ।

---

१. 'धूमान्वितेन' क-ख. २. 'सहृदयानाम्' क-ख-पुस्तकयोर्नास्ति.

---

१. 'करणप्रभावाद्यनुहारशब्दवत्' ग. २. 'अनपेक्षत्वभावत्व' ग. ३. 'स्मरणाकारद्योतको रसस्तस्यासाधारण' क-ख. ४. 'पतनपुष्टेति' क-ख. ५. 'अनुनेष्यमाण' ग. ६. 'नित्याभि' ग. ७. 'मिथ्याविवादेन' ग.

यथा वा[1]—

'झगिति कनकचित्रे तत्र दृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः ।
पवनविलुलितानामुत्पलानां पलाश[2]-
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥'

पदावयवेन द्योतनं यथा—

'व्रीडा[3]योगान्नतवदनया संनिधाने गुरूणां
बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥'

इत्यत्र त्रिभागशब्दः ।

---

उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणम् । मया निर्वाहितप्रतीकारमिति शोकावेगस्य विभावतेति । सातिशयविभ्रमैकायतनरूपे अपि लोचने विधुरे कांदिशीकतया नि[1]···षू क्षिपन्ती कस्त्राता क्वासावार्यपुत्र इति तयोर्लोचनयोस्तादृशी चावस्थेति सुतरां शोकोद्दीपनम् । क्रूरेणेति । तस्यायं स्वभाव एवेति । किं कुरुतां तथापि धूमेनान्धीकृतो द्रष्टुमसमर्थ इति । न तु सविवेकस्येदृशानुचितकारित्वं संभाव्यते इति स्मर्यमाणं तदीयं सौन्दर्यमिदानीं सातिशयशोकावेशविभावतां प्राप्तमिति। शब्दे सति सर्वोऽयमर्थो निरूढ एवेति तत्र तत्र व्याख्यातव्यम् । त्रिभाग इति गुरुजनमवधीर्यापि सा मां यथा तथापि साभिलाषमन्युदैन्यगर्भमधुरं विलोकितवतीत्येवं स्मरणेन परस्परहेतुकत्वप्राणप्रवासविप्रलम्भोद्दीपनं त्रिभागशब्दसंनिधौ

---

१. 'च' क-ख. २. 'पलाशैः' क-ख. ३. क-ख-पुस्तकयोश्चतुर्थचरण एवास्य श्लोकस्यास्ति.

---

१. 'निर्लज्जे' क-ख.

वाक्यरूपश्चालक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धोऽलंकारसंकीर्णश्चेति द्विधा मतः। तत्र शुद्धस्योदाहरणं यथा रामाभ्युदये—'कृतककुपितैः' इत्यादिश्लोकः। एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं[1] प्रदर्शयत्सर्वत एव परं रसतत्त्वं प्रकाशयति।

अलंकारान्तरसंकीर्णो यथा—'स्मरनवनदीपूरेणोढाः' इत्यादि

---

स्फुटं भातीति। **वाक्यरूपश्चेति**। प्रथमानिर्देशेनाव्यतिरेकनिर्देशस्यायमभिप्रायः। वर्णपदतद्भागादिषु सत्स्वेवालक्ष्यक्रमो[1] व्यङ्ग्यो निर्भासमानोऽपि समस्तकाव्यव्यापक एव निर्भासते। विभावादिसंयोगप्राणत्वात्। तेन वर्णादीनां निमित्तत्वमात्रमेव। वाक्यं तु ध्वनेरलक्ष्यक्रमस्य न निमित्ततामात्रेण वर्णादिवदुपकारि। किं तु समग्रविभावादिप्रतिपत्तिव्यापृतत्ववद्रसादिनियममेव तन्निर्भासत इति। वाक्य इत्येतत्कारिकायां न निमित्तसप्तमीमात्रम्। अपि त्वन्यत्र भावविषयार्थमपीति। शुद्ध इत्यर्थालंकारेण केनाप्यसंमिश्रः। 'कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितैर्वनमपि गता यस्य प्रीत्या धृतापि तथाम्बया। नवजलधरश्यामाः पश्यन्दिशो भवतीं विना कठिनहृदयो जीवत्येव[2] प्रिये स तव प्रियः॥' अत्र तथा तैस्तैः प्रकारैर्मात्रा धृतापीत्यनुरागपरवशत्वेन गुरुवचनोल्लङ्घनमपि त्वया कृतमिति। प्रिये इति परस्परजीवितसर्वस्वाभिमानात्मको रतिस्थायिभाव उक्तः। नवजलधरेत्यसोढपूर्वं प्रावृषेण्यजलदालोकनं विप्रलम्भोद्दीपनविभावत्वेनोक्तम्। जीवत्येवेति सापेक्षभावता[3] एवकारेण करुणावकाशनिराकरणतयोक्ता[4]। **सर्वत एवेति**। नात्रान्यतमस्य पदस्याधिकं किंचिद्रसव्यक्तिहेतुत्वमित्यर्थः। रसतत्त्वमिति विप्रलम्भशृङ्गारात्मतत्त्वम्। 'स्मरनवनदीपूरेणोढाः[5] पुनर्गुरुसेतुभिर्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः। तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा[6] नयन-

---

१. 'परस्परानुबद्धपरिपोषकतया प्राप्तं' क-ख.

---

१. 'सत्सु नालक्ष्य' क-ख. २. 'एव' ग. ३. 'साक्षेपतैवोक्ता' क-ख. ४. 'निराकरणायोक्तम्' ग. ५. 'स्मररस' क-ख. ६. 'परस्परसंमुखं' क-ख.

श्लोकः । अत्र हि रूपकेण यथोक्तव्यञ्जकलक्षणानुगतेन प्रसाधितो[1] रसः सुतरामभिव्यज्यते ।

अलक्ष्यक्रमव्यङ्ग्यः संघटनाया भासते ध्वनिरित्युक्तं तत्र संघटनास्वरूपमेव तावन्निरूप्यते—

असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा संघटनोदिता ॥ ५ ॥

कैश्चित्तां केवलमनूद्येदमुच्यते—

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्व्यनक्ति सा ।
रसस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ ६ ॥

---

नलिनीनालानीतं[2] पिबन्ति रसं प्रियाः ॥' रूपकेणेति । स्मर एव नवनदीपूरः प्रावृषेण्यप्रवाहः । सरभसमेव प्रवृद्धत्वात् । तेनोढाः परस्परसांमुख्यमबुद्धिपूर्वमेव नीताः । अनन्तरं गुरवः श्वश्रूप्रभृतय एव सेतवः । इच्छाप्रसररोधकत्वात् । अथ च गुरवोंऽलङ्घ्याः सेतवस्तैः प्रतिहतेच्छाः । अत एवापूर्णमनोरथास्तिष्ठन्ति । तथापि परस्परोन्मुखतालक्षणेनान्योन्यतादात्म्येन स्वे देहे सकलवृत्तिनिरोधाल्लिखितप्रायैरङ्गैर्नयनान्येव नलिनीनालानि तैरानीतं रसं परस्पराभिलाषलक्षणमास्वादयन्ति । परस्पराभिलाषात्मकदृष्टिच्छटामिश्रीकारयुक्त्यापि कालमतिवाहयन्तीति । ननु नात्र रूपकं निर्व्यूढम् । हंसचक्रवाकादिरूपेण नायकयुगलस्यारूपितत्वात्[2] । ते हि हंसाद्या एकनलिनीनालानीतसलिलपानादिसूचिता[3] इत्याशङ्क्याह—**यथोक्तव्यञ्जकेति** । उक्तं हि पूर्वम्—'विवक्षातत्परत्वेन' इत्यादौ 'नातिनिर्वहणैषिता' इति । **प्रसाधित इति** । विभावादिरूपभूषणद्वारेण रसोऽपि प्रसाधित इत्यर्थः[4] । संघटनायामिति भावे प्रत्ययः । वर्णादिवच्च निमित्तमात्रे सप्तमी । उक्तमिति कारिकायाम् । **निरूप्यत इति** । गुणेभ्यो विविक्ततया विचार्यत इति यावत् । रसानिति कारिकायां द्वितीयार्धस्याद्यं पदम् । 'रसास्तन्नियमे[5] हेतूनौचित्यं वक्तृवाच्ययोः' इति

---

१. 'प्रसादितः' क-ख.

---

१. 'नालाकृष्टं' ग. २. 'युगलकानां' क-ख. ३. 'पानं क्रीडादसूचिता' क-ख.
४. 'इत्युक्तः' ग. ५. 'रसास्तान्नियमे हेतुः' ग.

संघटना रसादीन्व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति । अत्र च विकल्प्यं गुणानां संघटनायाश्चैक्यं व्यतिरेको वा । व्यतिरेकेऽपि द्वयी गतिर्बोद्धव्या—गुणाश्रया संघटना, संघटनाश्रया वा गुणा इति । तत्रैक्यपक्षे संघटनाश्रयगुणपक्षे च गुणानात्मभूतानाधेयभूतान्वाश्रित्य तिष्ठन्ती संघटना रसादीन्व्यनक्तीत्ययमर्थः । यदा तु नानात्वपक्षो गुणाश्रयः संघटनापक्षश्च तदा गुणानाश्रित्य तिष्ठन्तीति गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः । किं पुनरेवं विकल्पनस्य प्रयोजनमित्यभिधीयते । यदि गुणाः संघटना चेत्येकं[1] तत्त्वं संघटनाश्रया वा गुणास्तदा संघटनाया इव गुणानामनियतविषयत्वप्रसङ्गः । गुणानां हि माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव । रौद्राद्भुतादिविषयमोजः । माधुर्यप्रसादौ रसभावतदाभासविषयावेवेति विषयनियमो व्यवस्थितः संघटनायास्तु स[2] विघटते । तथा हि शृङ्गारेऽपि दीर्घसमासा दृश्यन्ते रौद्रादिष्वसमासाश्चेति ।

---

कारिकार्धम् । बहुवचनेनायमर्थः संगृहीत इति दर्शयति—**रसादीनिति** । **अत्र चेति** । अस्मिन्नेव कारिकार्धे । विकल्पेनेदमर्थजातं कल्पयितुं व्याख्यातुं शक्यम् । किं[1] तदि···मिति त्रयः पक्षा ये संभाव्यन्ते ते व्याख्यातुं शक्याः कथमित्याह—**तत्रैक्यपक्ष इति** । **आत्मभूतानिति** । स्वभावस्य कल्पनया प्रतिपादनार्थं प्रदर्शितभेदस्याश्रयवाचोयुक्तिर्दृश्यते[2] । शिंशपाश्रयं वृक्षत्वमित्याधेयभूतानिति । संघटनाया धर्मा गुणा इति भट्टोद्भटादयः । धर्माश्च धर्म्याश्रिता इति प्रसिद्धो मार्गः । **गुणपरतन्त्रेति** । अत्र नाधाराधेयभाव आश्रयार्थः । नहि गुणेषु संघटना तिष्ठतीति । तेन राजाश्रयः प्रकृतिवर्ग इत्यत्र यथा राजाश्रयौचित्येनामात्यादिप्रकृतय इत्ययमर्थ[3] एवं गुणेषु परतन्त्रस्वभावा तदायत्ता तन्मुखप्रेक्षिणी संघटनेत्ययमर्थो लभ्यत इति भावः । भवत्वनियतविषयतेत्याशङ्क्याह—**गुणानां हीति** । हिशब्दस्तुशब्दार्थे । न······त्वेवमुपपद्यते । **स इति** । योऽयं गुणेषु नियम उक्तोऽसावित्यर्थः । तथात्वेन लक्ष्यदर्शनमेव हेतुत्वेनाह—**तथा हीति** । दृश्यत

---

१. 'चैकं' ग. २. 'असौ' क-ख.

---

१. 'किं तदि–शक्याः' क-ख-पुस्तकयोर्नास्ति. २. 'दृश्यते' ख. ३. 'इत्येवमयं' ग

तत्र शृङ्गारे दीर्घसमासा यथा—'मन्दारकुसुमरेणुपिञ्जरितालका'। इति । यथा वा—

'अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥'

इत्यादौ ।

तथा रौद्रादिष्वप्यसमासो दृश्यते यथा—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः—' इत्यादौ । तस्मान्न गुणाः संघटनास्वरूपाः । न च संघटनाश्रया गुणाः । ननु यदि संघटना गुणानां नाश्रयस्तत्किमालम्बना एते परिकल्प्यन्ते[1] । उच्यते—प्रतिपादितमेवैषामालम्बनम् ।

'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥' इति ।

अथवा भवन्तु शब्दाश्रया एव गुणाः । न चैषामनुप्रासादितुल्य-

---

इत्युक्तं तत्र दर्शनस्थानमुदाहरणं सूत्रयति—**तत्रेति** । नात्र शृङ्गारः कश्चिदित्याशङ्क्य द्वितीयमुदाहरणमाह—**यथा वेति** । एषा हि प्रणयकुपितनायिकाप्रसादनायोक्तिर्नायकस्येति । **तस्मादिति** । नैतद्व्याख्यानद्वयं कारिकायां युक्तमिति यावत् । **किमालम्बना इति** । शब्दार्थालम्बनत्वे हि तदलंकारेभ्यः को विशेष इत्युक्तं चिरंतनैरिति भावः । **प्रतिपादितमेवेति** । अस्मन्मूलग्रन्थकृतेत्यर्थः । **अथवेति** । नह्येकाश्रितत्वेनैक्यम्[1] । [ऐक्य]रूपस्य संयोगस्य चैक्यप्रसङ्गात् । संयोगे द्वितीयमपेक्ष्यमिति चेत् । इहापि व्यङ्ग्योपकारकवाच्यानपेक्षास्त्येवेति[2] समानम् । न चायं समवस्थितः पक्षः । अपि तु भवत्वेषामविवेकिनामभिप्रायेणापि[3] शब्दधर्मत्वं शौर्यादीनामिव शरीरधर्मत्वम् । अविवेकी[4] हि उपचारकत्वविभागं विवे-

---

१. 'परिकल्पन्ताम्' ग.

---

१. 'एकाश्रितत्वादेवैक्यं' क-ख. २. 'अनपेक्षास्त्येवेति' क-ख. ३. 'अविवेकजनाभिप्रायेण' क-ख. ४. 'अविवेके' क-ख.

त्वम् । यस्मादनुप्रासादयोऽनपेक्षितार्थविस्ताराः शब्दधर्मा एव । शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम् ।

ननु यदि शब्दाश्रया गुणास्तत्संघटनारूपत्वं तदाश्रयत्वं[1] वा तेषां प्राप्तमेव । नह्यसंघटिताः शब्दा अर्थविशेषं प्रतिपाद्य रसाद्याश्रितानां गुणानामवाचकत्वादाश्रया भवन्ति । नैवम् । वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रति प्रतिपादितत्वात् । अभ्युपगते वा वाक्यव्यङ्ग्यत्वे रसादीनां

---

कुमसमर्थः । तथापि[1] न कश्चिद्दोष इत्येवंपरमेतदुक्तं भवति । एतदाह—**शब्दधर्मत्वमिति** । अन्याश्रयत्वेऽपीति आत्मनिष्ठत्वेऽपीत्यर्थः । शब्दाश्रया इति । उपचारेण यदि शब्देषु गुणास्तत्रेदं तात्पर्यम्—शृङ्गारादिरसाभिव्यञ्जकवाच्यप्रतिपादनसामर्थ्यमेव शब्दस्य माधुर्यम् । तच्च शब्दगतं विशिष्टघटनयैव[2] लभ्यते । अर्थसंघटना न व्यतिरिक्ता काचित् । अपि तु संघटिता एव शब्दाः । तदा शब्दाश्रितं तत्सामर्थ्यमिति संघटनाश्रितमेवेत्युक्तं भवतीति तात्पर्यम् । ननु शब्दधर्मत्वं शब्दैकात्मकत्वं वा तावतास्तु किमयं मध्ये संघटनानुप्रवेश इत्याशङ्क्य स एव पूर्वपक्षवाद्याह—**नहीति** । अर्थविशेषैर्न तु पदान्तरनिरपेक्षशुद्धपदवाच्यैः सामान्यैः प्रतिपाद्या व्यङ्ग्या ये रसभावतदाभासतत्प्रशमास्तदाश्रितानां मुख्यतया तन्निष्ठानां गुणानामसंघटिताः[3] शब्दा[4] आश्रया न भवन्त्युपचारेणापीति भावः । अत्र हेतुः—**अवाचकत्वादिति** । न ह्यसंघटितव्यङ्ग्योपयोगिनिराकाङ्क्षरूपं वाच्यमाहुरित्यर्थः । एतत्परिहरति—**नैवमिति** । व्यङ्ग्यो हि यावद्रस उक्तस्तावदवाचकस्यापि पदस्य श्रवणमात्रावसेयेन स्वसौभाग्येन वर्णवदेव यद्रसाभिव्यक्तिहेतुत्वं स्फुटमेव लभ्यत इति तदेव माधुर्यादीति किं संघटनया । तथा च पदव्यङ्ग्यो यावद्ध्वनिरुक्तस्तावच्छुद्धस्यापि पदस्य स्वार्थस्मारकत्वेनापि रसाभिव्यक्तियोग्यार्थावभासकत्वमेव माधुर्यादीति तत्रापि कः संघटनाया उपयोगः । ननु वाक्यव्यङ्ग्ये ध्वनौ ह्यवश्यं प्रवेष्टव्यं संघटनया । स्वसौन्दर्यं वाच्यसौन्दर्यं वा तया विना कुत इत्याशङ्क्याह—**अभ्युपगत इति** । वाशब्दोऽपिशब्दार्थे वाक्यव्यङ्ग्यत्वेऽपीत्यत्र योज्यः । एतदुक्तं भवति—

---

१. 'तदाश्रितत्वं' क-ख.

---

१. 'तथापि तु न कश्चिद्दोषाश्रयः' ग. २. 'विशिष्टैव घटना' क-ख. ३. 'गुणानां' ग-पुस्तके नास्ति. ४. 'शब्दाश्च' क-ख. ५. 'समर्पकतेन' क-ख.

न नियता काचित्संघटना तेषामाश्रयत्वं प्रतिपद्यते इत्यनियतसंघटनाः शब्दा एव गुणानां व्यङ्ग्यविशेषानुगता आश्रयाः। ननु माधुर्ये यदि नामैवमुच्यते[1] तदुच्यताम्। ओजसः पुनः कथमनियतसंघटनशब्दाश्रयत्वम्। नह्यसमासा संघटना कदाचिदोजस आश्रयतां प्रतिपद्यते[2]। उच्यते[3]—यदि न प्रसिद्धिमात्रग्रहदूषितं चेतस्तदत्रापि न ब्रूमः। ओजसः कथमसमासा संघटना नाश्रयः[4]। यतो[5] रौद्रादीन्हि प्रकाशयतः काव्यस्य दीप्तिरोज[6] इति प्राक्प्रतिपादितम्। तच्चौजो यद्यसमासायामपि घटनायां स्यात्तत्को दोषो भवेत्। न चाचारुत्वं सहृदयहृदयसंवेद्यमस्ति। तस्मादनियतसंघटनशब्दाश्रयत्वे गुणानां न काचित्क्षतिः। तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य स्वरूपस्य न कदाचिद्व्यभि-

---

अनुप्रविशतु तत्र संघटना। नहि तस्याः संनिधानं प्रत्याचक्ष्महे[1]। किं तु माधुर्यस्य न नियता संघटना। आश्रयो वा स्वरूपं वा तया विना कुत इत्याशङ्क्याह······ वर्णपदव्यङ्ग्ये न रसादौ भावान्माधुर्यादेः वाक्यव्यङ्ग्योऽपि तादृशीं संघटनां विहायापि वाक्यस्य तद्रसव्यञ्जकत्वात्संघटना संनिहितापि रसव्यक्तावयोजिकेति। तस्मादौपचारिकत्वेऽपि शब्दाश्रया एव गुणा इत्युपसंहरति—**शब्दा एवेति**। **नन्विति**। वाक्यव्यङ्ग्यध्वन्यभिप्रायेणेदं मन्तव्यमिति केचित्। वयं तु ब्रूमः—वर्णपदव्यङ्ग्येऽप्योजसि रौद्रादिस्वभावे वर्णपदानामेकाकिनां स्वसौन्दर्यमपि न तादृगुन्मीलति तावद्यावत्तानि समाससंघटनाङ्कितानि न कृतानीति सामान्येनैवायं पूर्वपक्ष इति प्रकाशयत इति 'लक्षणहेत्वोः—'इति शतृप्रत्ययः। रौद्रादिप्रकाशनालक्षणमोज इति भावः। **न चेति**। चशब्दो हेतौ। यस्मात् 'यो यः शस्त्रं—' इत्यादौ न चारुत्वं प्रतिभाति तस्मादित्यर्थः। तेषां द्वित्रगुणानाम्। **यथास्वमिति**। 'शृङ्गार

---

१. 'नामैतदुच्यते' ग. २. 'प्रतिपाद्यते' ग. ३. 'उच्यते च' ग. ४. 'असमाससंघटनाश्रयः' क-ख. ५. 'यतः' क-ख-पुस्तकयोर्नास्ति. ६. 'ओजोगुणः' क-ख.



१. 'प्रत्याचक्ष्वे' क; 'प्रत्याचक्ष्यते' ख.

चारः । तस्मादन्ये गुणा अन्या च संघटना । न च संघटनामाश्रिता गुणा इत्येकं दर्शनम् । अथवा संघटनारूपा एव गुणाः । यत्तूक्तम्—'संघटनावद्गुणानामप्यनियतविषयत्वं प्राप्नोति । लक्ष्ये व्यभिचारदर्शनात्' इति । तत्राप्येतदुच्यते—यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तद्विरूपमेवास्तु । कथमचारुत्वं तादृशविषये सहृदयानां प्रतिभातीति चेत्, कविशक्तितिरोहितत्वात् । द्विविधो हि दोषः—कवेरव्युत्पत्तिकृतोऽशक्तिकृतश्च । तत्राव्युत्पत्तिकृतो दोषः शक्तितिरस्कृतत्वात्कदाचिन्न लक्ष्यते । यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते । परिकरश्लोकश्चात्र—

'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते ॥'

तथा हि—महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसंभोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतं ग्राम्यत्वेन न प्रतिभासते । यथा कुमारसंभवे देवीसंभोगवर्णनम् । एवमादौ च विषये यथौचित्यत्याग-

---

एव परमो मनःप्रह्लादनो रसः' इत्यादिना च विषयनियम उक्त एव । **यस्त्विति** । रसाभिव्यक्तावेतदेव सामर्थ्यं शब्दानां यत्तथा संघटमानत्वमिति भावः । शक्तिः प्रतिभानं वर्णनीयवस्तुविषयनूतनोल्लेखशालित्वम् । व्युत्पत्तिस्तदुपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलम् । तस्येति कवेः । **अनौचित्यमिति** । आस्वादयितॄणां हि यत्र चमत्काराविघातस्तदेव रससर्वस्वं स्वादायत्तत्वात् । उत्तमदेवतासंभोगपरि-

---

१. 'अप्यविषयत्वं' क-ख. २. 'तादृशेऽपि' ग. ३. 'कृतो दोषः' ग. ४. 'अनौचित्यमुत्तमदेवविषयं' क-ख. ५. 'तिरस्कृतत्वाद्ग्राम्यत्वेन न' ग.

---

१. 'व्यक्तये तदेव' ग. २. 'नियत' ग. ३. 'आस्वादयितृत्वात्' क-ख.

स्तथा दर्शितमेवाग्रे । शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते । तथा हि शक्तिरहितेन कविना एवंविधे शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते[1] । नन्वस्मिन्पक्षे–'यो यः शस्त्रं बिभर्ति–' इत्यादौ किमचारुत्वमप्रतीयमानमेवारोपयामः[2] । तस्माद्गुणव्यतिरिक्तत्वे गुणरूपत्वे च संघटनाया[3] अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते । 'तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः' । तत्र वक्ता कविः कविनिबद्धो वा कश्चित् । कविनिबद्धश्चापि रसभावरहितो रसभावसमन्वितो वा । रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा । कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति[4] विकल्पाः । वाच्यं च ध्वन्यात्मरसाङ्ग

---

मर्शे च पितृसंभोग इव लज्जातङ्कादिना कश्चमत्कारावकाश इत्यर्थः । **शक्तितिरस्कृतत्वमिति** । संभोगोऽपि ह्यसौ[1] वर्णितस्तथा प्रतिभानवता कविना, यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति । यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते न तु पौर्वापर्यपरामर्शो तथात्रापीति भावः । दर्शितमेवेति कारिकाकारेणेति भूतप्रत्ययः । वक्ष्यते हि—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्' इत्यादि । **अप्रतीयमानमेवेति** । पूर्वापरशास्त्रपरामर्शविवेकशालिभिरित्यर्थः । व्यतिरेकपक्षे हि संघटनाया नियमहेतुरेव नास्ति । ऐक्यपक्षेऽपि न रसो नियमहेतुरित्यन्यो वक्तव्यः । तन्नियम इति कारिकावशेषः । कथां नयति स्वकर्तव्याङ्गभावमिति कथानायको यो निर्वहणे फलभागी । **धीरोदात्तादीति** । धर्मयुद्धवीरप्रधानो धीरोदात्तः । वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण सात्त्वत्यारभटीकैशिकीभारतीलक्षणवृत्तिप्रधानाः । पूर्वः कथानायकस्तदनन्तर उपनायकः[2] । **विकल्पा इति** ।

---

१. 'अवभासते' ग. २. 'प्रतीयमानं' ग. ३. 'संघटनायां' क-ख. ४. 'रश्चे'ति' ग.



१. 'संभोगे ह्यसौ' क-ख. २. 'प्रतिनायकः' क-ख.

रसाभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम् । तत्र यदा कविरपगतरसभावो वक्ता तदा रचनायाः कामचारः । यदापि कविनिबद्धो वक्ता रसभावरहितस्तदा[1] स एव । यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितो रसश्च प्रधान[2]भूतत्वाद्ध्वन्यात्मभूतस्तदापि नियमेनैव तत्रासमासामध्यमसमासे एव संघ-

---

वक्तृभेदा इत्यर्थः । **वाच्यमिति** । ध्वन्यात्मा ध्वनिस्वभावो यो रसस्तस्याङ्गं व्यञ्जकमित्यर्थः । अभिनेयो वागङ्गसत्त्वैराभिमुख्यं साक्षात्कारप्रायं नेयोऽर्थो व्यङ्ग्यरूपो ध्वनिस्वभावो यस्य तदभिनेयार्थं वाच्यं स एव हि काव्यार्थ इत्युच्यते । तस्यैव चाभिनयनयोगः । यदाह मुनिः—'वागङ्गसत्त्वोपेतात्काव्यार्थाद्भवति'[1] इत्यादि । तत्र[2] तद्रसाभिनयनान्तरीयकतया तु तद्विभावादिरूपतया वाच्योऽर्थोऽभिनीयत इति वाच्यमभिनेयमर्थमित्येषैव युक्ततरा वाचोयुक्तिः । न त्वत्र व्यपदेशिवद्भावो व्याख्येयः, यथान्यैः । **तदितरेति** । मध्यमप्रकृत्याश्रयमधमप्रकृत्याश्रयं चेत्यर्थः । एवं वक्तृ[3]भेदान्वाच्यभेदांश्चाभिधाय तद्गतमौचित्यं नियामकमाह—**तत्रेति** । रचनाया इति संघटनायाः । रसभावैर्हीनोऽसाविष्टस्तापसादिरुदासीनोऽपीति वृत्ताङ्गतया यद्यपि प्रधानरसानुयाय्येव तथापि तावपि तावति रसादिहीन इत्युक्तम् । स एवेति कामचारः । एवं शुद्धवक्त्रौचित्यं विचार्य वाच्यौचित्येन सह तदेवाह—**यदा त्विति** । कविर्यद्यपि रसाविष्ट एव वक्ता युक्तः । अन्यथा 'स एव वीतरागश्चेत्' इति स्थित्या नीरसमेव काव्यं स्यात् । तथापि यदा यमकादिचित्रप्रदर्शनप्रधानोऽसौ भवति तदा 'रसादिहीने' इत्युक्तम् । नियमेन रसभावसमन्वितो वक्ता न तु कथंचिदपि तटस्थः । रसश्च ध्वन्यात्मभूत एव । न तु रसवदलंकारप्रायः । तदासमासमध्यसमासे एव संघटते । अन्यथा तु दीर्घसमासापीत्येवं योज्यम् । तेन निय-

---

१. 'तदापि' क-ख. २. 'प्रधानाश्रितत्वात्' क-ख.

---

१. 'सत्त्वोपेतान्काव्यार्थान्भावयन्ति' क-ख. २. 'तत्र तत्र' क-ख. ३. 'वस्तुभेदाद्वाच्यं चाभिधाय' ग. ४. 'हीनः कविस्तापसादिः' क-ख.

टने । करुणविप्रलम्भशृङ्गारयोस्त्वसमासैव संघटना । [1]कथमिति चेत्, उच्यते । रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव [2]परिहार्याः । एवं च दीर्घसमासा संघटना समासानामनेकप्रकारसंभावनया कदाचिद्रसप्रतीतिं व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः शोभते । विशेषतोऽभिनेयार्थे काव्ये [3]ततोऽन्यत्र च विशेषतः करुणविप्रलम्भशृङ्गारयोः । तयोर्हि सुकुमारतरत्वात्स्वल्पायामप्य[4]स्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति । रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासा संघटना कदाचिद्धीरोद्धतनायकसंबन्ध[5]व्यापाराश्रयेण दीर्घ[6]समासापि वा तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या । सर्वासु च

---

मशब्दस्य द्वयोश्चैवकारयोः पौनरुक्त्यमनाशङ्क्यम् । **कथमिति चेदिति** । किं धर्मसूत्रकारवचनमेतदिति भावः । **उच्यत इति** । न्यायोपपत्त्येत्यर्थः । **तत्प्रतीताविति** । तदास्वादीये व्यवधायका विरोधिनश्च तद्विपरीतास्वादमया इत्यर्थः । **संभावनयेति** । अनेकप्रकारः संभाव्यते संघटना तु संभावनायां प्रयोक्रीति द्वौ णिचौ । **विशेषतोऽभिनेयार्थेति** । अत्रुटितेन [1]व्यङ्गेन तावत्समासाभिनयो नो शक्यः कर्तुम् । काकादयोऽन्तरप्रसादगानादयश्च । तत्र दुष्प्रयोज्यवहुतरसंदेहसूचनाय प्रतिपत्तिर्न नाट्यरूपा स्यात् । प्रत्यक्षरूपत्वात्तस्या इति भावः । **अन्यत्र चेति** । अभिनेयार्थेऽपि मन्थरीभवतीत्यास्वादो विघ्नितत्वात्प्रतिहन्यत इत्यर्थः । तस्यां दीर्घसमाससंघटानायां य आक्षेपस्तेन विना यो न भवति व्यङ्ग्याभिव्यञ्जकस्तादृशो रसोचितो रसव्यञ्जकतयोपादीयमानो वाच्यस्तस्य यासावपेक्षा दीर्घसमाससंघटनां प्रति साद्गुण्ये [2]हेतुः । नायकस्याक्षेपो व्यापार इति यद्व्याख्यातं तत्र

---

१. 'कथं चेत्' ग. २. 'परिभाव्याः' ग. ३. 'तत्रान्यत्र' ग. ४. 'स्वेच्छतायां' क-ख. ५. 'व्यापारक्षये' ख. ६. 'समासाश्रयापि वा' क-ख.



१. 'व्यङ्गयेन' ग. २. 'ह्यहेतुः' ग.

संघटनासु प्रसादाख्यो गुणो व्यापी । स हि सर्वरससाधारणः सर्वसंघटनासाधारणश्चेत्युक्तम् । प्रसादातिक्रमे ह्यसमासापि संघटना करुणविप्रलम्भशृङ्गारौ न व्यनक्ति । तदपरित्यागे च मध्यमसमासापि [1]प्रकाशयति । तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः । अत एव च 'यो यः शस्त्रं बिभर्ति–' इत्यादौ यद्योजसः स्थितिर्नेष्यते तत्प्रसादाख्य एव गुणो न माधुर्यम् । न चाचारुत्वम् । अभिप्रेतरसप्रकाशनात् । तस्माद्गुणाव्यतिरिक्तत्वे गुण[2]व्यतिरिक्तत्वे वा संघटनाया यथोक्तादौचित्याद्विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम् । तस्याश्च रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरुद्धम् ।

---

क्ष्यतीवेत्यलम् । व्यापीति । या काचित्संघटना सा तथा कर्तव्या यथा वाच्ये झटिति प्रभवति प्रतीतिरिति यावत् । **उक्तमिति** । 'समर्पकत्वं काव्यस्य यत्तु' इत्यादिना । **न व्यनक्तीति** । व्यञ्जकस्य स्ववाच्यस्यैवाप्रत्यायनादिति भावः । **तदिति** । प्रसादस्यापरित्यागेऽभीष्टत्वात् । अत्रार्थे स्वकण्ठेनान्वयव्यतिरेकावुक्तौ । **न माधुर्यमिति** । ओजोमाधुर्ययोर्ह्यन्योन्याभावरूपत्वं प्राङ्निरूपितमिति तयोः संकरोऽत्यन्तं [1]नीतिबाह्य इति भावः । **न चेति** । प्रसादेनैव स रसः प्रकाशितेन प्रकाशित इत्यर्थः । **तस्मादिति** । यदि गुणाः संघटनैकरूपास्तथापि गुणनियम एव संघटनाया नियमः । गुणाधीनसंघटनापक्षेऽप्येवम् । संघटनाश्रयगुणपक्षेऽपि संघटनाया नियामकत्वेन यद्वक्तृवाच्यौचित्यं हेतुत्वेनोक्तं तद्गुणानामपि नियमहेतुरिति पक्षत्रयेऽपि न कश्चिद्विप्लव इति तात्पर्यम् । नियामकान्तरमप्यस्तीत्याह—

---

१. 'न प्रकाशयति' क-ग. २. 'गुणातिरिक्तत्वे' ग. ३. 'व्यतिरेकत्वे' क-ख.



१. 'श्रुतिबाह्यः' ग.

**विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥ ७॥**

वक्तृवाच्यगतौचित्ये सत्यपि विषयाश्रयमन्दौचित्यं संघटनां नियच्छति। यतः काव्यस्य प्रभेदाः—मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम्। संदानितकविशेषककालापककुलकानि पर्यायबन्धः परिकथा सकलकथा खण्डकथा सर्गबन्धोऽभिनेयार्थमाख्यायिका कथेत्येवमादयः। तदाश्रयेणापि संघटना विशेषवती भवति। तत्र मुक्तकेषु रसबन्धाभिनि-

---

**विषयाश्रयमिति।** विषयशब्देन संघातविशेष उक्तः। यथा हि सेनाद्यात्मकसंघातनिवेशी पुरुषः कातरादिभिरपि तदौचित्यादनुगुणतयैवास्ते तथा काव्यवाक्यमपि संघातविशेषात्मकसंदानितकादिमध्यनिविष्टं तदौचित्येन वर्तते। मुक्तकं तु विषयशब्देन यदुक्तं तत्संघाताभावे तत्स्वातन्त्र्यमात्रं प्रदर्शयितुं स्वप्रतिष्ठितमाकाशमिवेति। अपिशब्देनेदमाह—सत्यपि वक्तृवाच्यौचित्ये विषयौचित्यं केवलं तारतम्यभेदमात्रव्यावृत्तम्। न तु विषयौचित्येन वक्तृवाच्यौचित्यं निवार्यत इति। **मुक्तकमिति।** मुक्तमन्येन नालिङ्गितम्। तस्य संज्ञायां कन्। तेन स्वतन्त्रतया परिसमाप्तनिराकाङ्क्षार्थमपि प्रबन्धमध्यवर्ति मुक्तकमित्युच्यते। मुक्तकस्यैव विशेषणं संस्कृतेत्यादि। [1]क्रमभावित्वात्तथैव निर्देशः। द्वाभ्यां क्रियासमाप्तौ संदानितकम्। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। पञ्चप्रभृतिभिः कुलकम्। इति क्रियासमाप्तिकृता भिद इति द्वन्द्वेन निर्दिष्टाः[2]। अवान्तरक्रियासमाप्तावपि वसन्तवर्णनाद्येकवर्णनीयोद्देशेन प्रवृत्तः पर्यायबन्धः। एकं च धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृ[3]त्तान्तवर्णनप्रकारा परिकथा। एकदेशवर्णना खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना सकलकथा। द्वयोरपि प्राकृतप्रसिद्धत्वाद्द्वन्द्वेन निर्देशः। पूर्वेषां तु मुक्तकादीनां भाषायामनियमः। महाकाव्यरूपः पुरुषार्थफलः समस्तवस्तुवर्णनाप्रबन्धः सर्गबन्धः संस्कृत एव। अभिनेयार्थं दशरूपकं नाटिकात्रोटकरासकप्रकरणिकाद्यवान्तरप्र[4]पञ्चसहितमनेकभाषाव्यामिश्ररूपम्। आख्यायिकोच्छ्वासादिना वक्त्रा-

---

१. 'विषयाश्रयगतमनौचित्यं' ग.

---

१. 'क्रमप्रभावात्' क-ख. २. 'निर्देशः' क-ख. ३. 'वृत्तान्तप्रधाना' क-ख. ४. 'प्रसङ्ग' ग.

वेशिनः कवेस्तदाश्रयमौचित्यम् । तच्च दर्शितमेव । [1]अन्यत्र कामचारः । मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव । संदानितकादिषु तु विकटनि[2]र्बन्धनौचित्यान्मध्यमसमासादीर्घसमासे एव [3]संघटने । [4]प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम् । [5]पर्यायबन्धे पुनरसमासामध्यमसमासे एव संघटने । कदाचिदर्थौचित्याश्रयेण दीर्घसमासायामपि संघटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या । परि[6]कथायां कामचारः । तत्रेतिवृत्तमात्रोपन्यासेन नात्यन्तं रसबन्धाभिनिवेशात् । खण्डकथासकलकथयोः प्राकृतप्रसिद्धयोः कुल-

---

परवक्कादिना च युक्ता । कथा तद्विरहिता । उभयोरपि गद्यबन्धस्वरूपतया द्वन्द्वेन निर्देशः । आदिग्रहणाच्चम्पूः । यथाह दण्डी–'गद्यपद्यमयी चम्पूः' इति । **अन्यत्रेति** । रसबन्धाभिनिवेशे । ननु मुक्तके विभावादिसंघटना कथं येन तदायत्तो रसः स्यादित्याशङ्क्याह—**मुक्तकेष्विति** । **अमरुकस्येति** । 'कथमपि कृतप्रत्यासत्तौ प्रिये स्खलितोत्तरे विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम् । असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥' इत्यत्र हि श्लोके स्फुटैव विभावादिसंपत्प्रतीतिः । **संदानितकेति** । असमासायां हि संघटनायां मन्थररूपा प्रतीतिः साकाङ्क्षा सती चिरेण क्रियापदं दूरवर्त्यनुधावति । वाच्यप्रतीतावेव विश्रान्ता सती न [1]रसत्वचर्वणायोग्या स्यादिति भावः । **प्रबन्धाश्रयेष्विति** । संदानितकादिषु कुलकान्तेषु । यदि वा प्रबन्धेष्वपि मुक्तकस्यास्ति सद्भावः । पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम् । यथा— 'त्वामालिख्य प्रणयकुपितां–' इत्यादिश्लोकः । कदाचिदिति रौद्रादिविषये । **नात्य-**

---

१. 'अन्यत्र तु' **क-ख.** २. 'बन्धौचित्यात्' **ग.** ३. 'रचने' **ग.** ४. 'पद्यप्रबन्धाश्रितेषु' **क-ख.** ५. 'पद्यबन्धेषु' **क-ख.** ६. 'कथायां तु' **क-ख.**

---



१. 'रसतत्त्व' **क-ख.**

कादिनिबन्धनभूयस्त्वाद्दीर्घसमासायामपि न विरोधः । वृत्त्यौचित्यं तु यथारसमनुसर्तव्यम् । सर्गबन्धे तु [1]रसतात्पर्येण यथारसमौचित्यमन्यथा तु [2]कामचारः । द्वयोरपि मार्गयोः सर्ग[3]बन्धविधायिनां दर्शनाद्रसतात्पर्यं साधीयः । अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः कार्यः । आख्यायिकाकथयोस्तु गद्यनिबन्धनबाहुल्याद्गद्ये च च्छन्दोबन्धभि[4]न्नप्रस्थानत्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक् क्रियते ।

एतद्यथोक्तमौचित्यमेव [5]तस्या नियामकम् ।
सर्वत्र गद्यबन्धेऽपि च्छन्दोनियमवर्जिते ॥ ८ ॥

यदेतदौचित्यं वक्तृवाच्यगतं संघटनाया नियामकमुक्तमेतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षं नियमहेतुः । [6]तथा ह्यत्रापि यदा कविः कविनिबद्धो वा वक्ता रसभावरहितस्तदा कामचारः । रसभावसमन्विते तु वक्तरि पूर्वोक्तमेवानुसर्तव्यम् । [7]तत्रापि वा विषयौचित्य-

---

**स्तमिति** । रसबन्धे यो नात्यन्तमभिनिवेशस्तस्मादिति संगतिः । **वृत्त्यौचित्यमिति** । परुषोपनागरिकाग्राम्याणां वृत्तीनामौचित्यं यथाप्रबन्धं यथारसं च । **अन्यथेति** । कथामात्रतात्पर्ये वृत्तिष्वपि कामचारः । द्वयोरपीति सप्तमी । कथातात्पर्ये [1]सर्गबन्धो यथा भट्टजयन्तकस्य कादम्बरीकथासारम् । रसतात्पर्यं यथा रघुवंशादि । अन्ये तु संस्कृतप्राकृतयोर्द्वयोरिति व्याचक्षते । तत्र तु रसतात्पर्यं साधीय इति यदुक्तं तत्किमपेक्षयेति नेयार्थं स्यात् । **विषयापेक्षमिति** ।

---

१. 'रस' क-ख-पुस्तकयोर्नास्ति. २. 'कामचारात्' ग. ३. 'बन्धायिनां' ग. ४. 'विभिन्नप्रस्थाने निबन्धनात्वात्' क-ख. ५. 'तस्मात्' क-ख. ६. 'यथा तच्चात्रापि' ग. ७. 'अत्रापि' क-ख.



---

१. 'संबन्धो यथा' ग.

मेवं । आख्यायिकायां तु भूम्ना मध्यमसमासादीर्घसमासे एव संघटने। गद्यस्य विकटनिबन्धाश्रयेण च्छायावत्त्वात्। तत्र च तस्य प्रकृष्यमाणत्वात्। कथायां तु विकटबन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमौचित्यमनुसर्तव्यम् ।

रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचना विषयापेक्षं तत्तु किंचिद्विभेदवत् ॥ ९ ॥

अथ वा पद्यवद्गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं सर्वत्र संश्रिता रचना भाति। तत्तु विषयापेक्षं किंचिद्विशेषवद्भवति। न तु सर्वाकारम्। तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना न विप्रलम्भशृङ्गारकरुणयोराख्यायिकायामपि शोभते। नाटकादावप्यसमासैव घटना। रौद्रवीरादिवर्णने विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च। तथाह्याख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनाया दिगनुसर्तव्या।

---

गद्यबन्धस्य भेदा एव विषयत्वेनानुमन्तव्याः। स्थितिपक्षं दर्शयति—**रसबन्धोक्तमिति**। वृत्तौ च वाशब्दोऽस्यैव पक्षस्य स्थितिद्योतकः। यथा—'स्त्रियो नरपतिर्वह्निर्विषं युक्त्या निषेवितम्। स्वार्थाय यदि वा दुःखसंभारायैव केवलम् ॥' इति। रचना संघटना। तर्हि विषयौचित्यं सर्वथैव त्यक्तं, नेत्याह—तदेव रसौचित्यं विषयसहकारितयापेक्ष्य किंचिद्विभेदोऽवान्तरवैचित्र्यं विद्यते यस्य संपाद्यत्वेन तादृशं भवति। एतद्व्याचष्टे—**तत्त्विति**। सर्वाकारमिति क्रियाविशेषणम्। **असमासैवेति**। सर्वत्रेति शेषः। तथा हि वाक्याभिनयलक्षणे 'चूर्णपादैः प्रसन्नैः' इत्यादि मुनिरभ्यधात्। अत्रापवादमाह—**तथेति**। **नाटकादाविति**। स्वविषयेऽपीति संबन्धः। एवं संघटनायां च लक्ष्यक्रमो दीप्यत इति निर्णीतम्। प्रबन्धे दीप्यत इति तु निर्विवादसिद्धोऽयमर्थ इति नात्र वक्तव्यं किंचिदस्ति। केवलं कवि-

१. 'एतत्' क-ख. २. 'भवति' क-ख.



१. 'अनुसर्तव्याः' क-ख.

'[1]इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी ।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः ॥' इति ।

इदानीमलक्ष्यक्रमव्यङ्ग्यो ध्वनिः[2] प्रबन्धात्मा रामायणमहाभारतादौ प्रकाशमानः प्रसिद्ध एव । तस्य तु यथा प्रकाशनं तत्प्रतिपाद्यते—

विभावभावानुभावसंचार्यौचित्यचारुणः ।
विधिः [3]कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ १० ॥
इति वृत्त[4]वशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्योऽप्यन्तराभीष्टरसोचितकथोन्नयः ॥ ११ ॥
संधिसंध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसंपादनेच्छया ॥ १२ ॥
उद्दीपनप्रशमने [5]यथावसरमन्तरा ।
रसस्यारब्धविश्रान्तेरनुसंधानमङ्गिनः ॥ १३ ॥
अलंकृतीनां शक्तावप्यानुरूप्येण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ १४ ॥

प्रबन्धोऽपि रसादीनां व्यञ्जक इत्युक्तं तस्य व्यञ्जकत्वे निबन्धनम् । प्रथमं तावद्विभावभावानुभावसंचार्यौचित्यचारुणः कथाशरीरस्य विधिर्यथायथं [6]प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनु-

---

[1]सहृदयान्व्युत्पादयितुं रसव्यञ्जनयेतिकर्तव्यताप्रबन्धस्य सा निरूप्येत्याशयेनाह—**इदानीमिति** । इदानीं तत्प्रकारजातं प्रतिपाद्यत इति संबन्धः । प्रथमं तावदिति(ह) प्रबन्धस्य व्यञ्जकत्वे ये प्रकारास्ते क्रमेणैवोपयोगिनः । पूर्वं हि कथापरीक्षा । तत्राधिकावापः फलपर्यन्तानयनम् । रसं प्रति जागरणम् । तदुचितविभावादिवर्णनेऽलंकारौचित्यमिति । तत्क्रमेण व्याचष्टे—**विभावेत्यादिना । तदौचित्येति ।**

१. इयमार्या क-ख. पुस्तकयोर्नास्ति. २. 'ध्वनिप्रबन्धो रामायण' ग. ३. 'तथा' ग. ४. 'वशायत्तां' ख. ५. 'यथा वा रसमन्तरा' क-ख. ६. 'प्रतिपिपादयिष्यते' ख.

१. 'सहृदयान्यप्युत्पादयितुं' ग.

भावः संचारी वा तदौचित्यचारुणः कथाशरीरस्य विधिर्व्यञ्जकत्वे निबन्धनमेकम्। तत्र विभावौचित्यं तावत्प्रसिद्धम्। भावौचित्यं तु प्रकृत्यौचित्यात्। प्रकृतिर्ह्युत्तममध्यमाधमभावेन दिव्यमानुषादिभावेन च विभेदिनी। तां यथायथमनुसृत्यासंकीर्णः स्थायी भाव उपनिबध्यमान औचित्यवान्भवति। अन्यथा तु केवलमानुषाश्रयेण दिव्यस्य केवलदिव्याश्रयेण वा मानुष्योत्साहादय उपनिबध्यमाना अनुचिता भवन्ति। तथा च केवलमानुषस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमानाः सौष्ठवभृतोऽपि नीरसा एव नियमेन भान्ति। तत्र त्वनौचित्यमेव हेतुः। ननु नागलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते। तदलोकसामान्यप्रभावादतिशयवर्णने किमनौचित्यं सर्वोर्वीभरणक्षमाणां क्षमाभुजामिति नैतदस्ति। न वयं ब्रूमो यत्प्रभावातिशयवर्णनमनुचितं राज्ञाम्, किं तु केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यमौचित्यं न योजनीयम्। दिव्यमानुषायां तु कथायामुभयमौचित्ययोजनमविरुद्धमेव। यथा पाण्ड्वादिकथायाम्। सातवाहनादिषु तु येषु यावदपदानं श्रूयते तेषु तावन्मात्रमनुगम्यमानमनुगुणत्वेन प्रतिभासते। व्यतिरिक्तं तु तेषामेवोपनिबध्यमानमनुचितम्। तदयमत्र परमार्थः—

---

शृङ्गारवर्णनेच्छुना तादृशी कथा यस्यामृतुमाल्यादेर्विभावस्य लीलादेरनुभावस्य हर्षधृत्यादेः संचारिणः स्फुटमेव संभव इत्यर्थः। प्रसिद्धमिति लोके भरतशास्त्रे च। **व्यापार इति**। तद्विषयोत्साहोपलक्षणमेतत्। स्थाय्यौचित्यं हि व्याख्येयत्वेनोपक्रान्तं नानुभावौचित्यम्। **सौष्ठवभृतोऽपीति**। वर्णनामहिम्नेत्यर्थः। तत्र त्विति नीरसत्वे। **व्यतिरिक्तं त्विति**। अधिकमित्यर्थः। एतदुक्तं भवति—यत्र विने-

---

१. 'ह्युत्तमाधमभावेन' ग. २. 'दिव्यस्योत्तम' ग. ३. 'मनुष्यस्य' ख, केवलमनुष्यस्य' ग. ४. 'आपादनं' ग. ५. 'तदेव' क-ख.

---

१. 'तथा' क-ख. २. 'यथा' क-ख. ३. 'संभवः' क-ख.

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥'

अत एव च भरते प्रबन्धप्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कर्तव्ये[1] कविर्न विमुह्यति[2]। यस्तूत्पाद्यवस्तु नाटकादि कुर्यात्तस्याप्रसिद्धानुचितनायकस्वभाववर्णने महान्प्रमादः। ननु यद्युत्साहादिभाववर्णने कथंचिद्दिव्यमानुष्याद्यौचित्यपरीक्षा क्रियते तत्क्रियताम्, रत्यादौ तु किं तया प्रयोजनम्। रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः। नैवम्। तत्रौचित्यातिक्रमेण सुतरां

---

यानां प्रतीतिखण्डना न जायते तादृग्वर्णनीयम्। तत्र केवलमानुष एकपदे सप्तार्णवलङ्घनमसंभाव्यमानतयानृतमिति हृदये स्फुरदुपदेश्यस्य[1] च···पा···स्याप्यलीकतां बुद्धौ निवेशयति। रामादेस्तु तथाविधमपि चरितं पू······पि न संप्रत्ययोपारूढमसत्यतया चकास्ति। अत एव तस्यापि यदा प्रभावान्तरमुत्प्रेक्ष्यते तदा तादृशमेव न त्वसंभावनास्पदं वर्णनीयमिति। **तेन हीति।** प्रख्यातोदात्तनायकवस्तुत्वेन न व्यामुह्यतीति किं वर्णनीयमिति। यस्त्विति कविः। महान्प्रमाद इति तेनोत्पाद्यवस्तु नाटकादि निरूपितं मुनिनेति न कर्तव्यमिति तात्पर्यम्। आदिशब्दः प्रकारे त्विलेवमादेः (?) प्रसिद्धदेवचरितस्य न संग्रहोऽर्थः। अन्यस्तु—'उपलक्षणमुक्तो बहुव्रीहिरिति प्रकरणमात्रोक्तम्, इत्याह। 'नाटकादि'[2] इति वा पाठः। तदादि[3]ग्रहणं प्रकारसूचकम्। तेन मुनिनिरूपिते नाटिकालक्षणे प्रकरणनाटका[4]योगादुत्पाद्यं वस्तु। 'नायको नृपतिः' इत्यत्र यथासंख्येन प्रख्यातोदात्तनृपतिनायकत्वं बोद्धव्य[5]मिति भावः। कथं तर्हि संभोगशृङ्गारः कविना निबध्यतामित्याशङ्क्याह—**नन्विति।**

---

१. 'कर्तव्ये' ग-पुस्तके नास्ति. २. 'व्यामुह्यति' ग.

---

१. 'स्फुरदुपदेशस्य चतुर्वर्गोपायविषयसंप्रत्ययोपारूढ' क-ख. २. 'नाटिकादि' क-ख. ३. 'अत्रादि' क-ख. ४. 'नाट्ययोगात्' क-ख. ५. 'बोध्यम्' ग.

दोषः । तथा ह्यधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का भवेन्नोपहास्यता । त्रिविधं प्रकृत्यौचित्यं भारते वर्षेऽप्यस्ति शृङ्गारविषयम् । [1]यत्त्वन्यद्दिव्यमौचित्यं त[द]त्रानुपकारकमेवेति चेत्, न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत्किंचिद्ब्रूमः । किं तर्हि भारतवर्षविषये यथोत्तमनायकेषु राजादिषु [2]शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते । न च राजादिषु [3]प्रसिद्धग्राम्यशृङ्गारोपनिबन्धनं प्रसिद्धं नाटकादौ । तथैव देवेषु तत्[4]परिहर्तव्यम् । नाटकादेरभिने[5]यत्वादभिनेयस्य च संभोगशृङ्गाराविषयत्वात्तत्र परिहार इति चेत्, न । यद्यभिनयस्यैवंविषय[6]स्यासभ्यता तत्काव्यस्यैवंविषयस्य सा केन निवार्यते । तस्मादभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरु[7]त्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसंभोगवर्णनं तत्पित्रोः संभोगवर्णनमिव सुतरामसभ्यम् । तथैवोत्तमदेवताविषयम् । न च संभोगशृङ्गारस्य सुरतलक्षण एवैकः प्रकारः, [9]यावदन्येऽपि प्रभेदाः परस्परप्रेमदर्शनादयः संभवन्ति । ते क[10]स्मादुत्तमप्रकृतिविषये न वर्ण्यन्ते । तस्मादुत्साहवद्रतावपि प्रकृत्यौचित्यमनुसर्तव्यम् । तथैव विस्मयादिषु । यत्त्वेवंविधे विषये महाकवीनामप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते स दोष एव । स तु शक्तितिरस्कृतत्वात्तेषां न लक्ष्यत इत्युक्तमेव । अनुभावौचित्यं तु भरतादौ प्रसिद्धमेव । इयत्तूच्यते—भरतादिस्थिति

---

**तथैवेति** । मुनिनापि स्थाने प्रकृत्यौचित्यमेव विभावानुभावादिषु बहुतरं प्रमाणीकृतं 'स्थैर्येणोत्तममध्यमाधमाणां नीचानां संभ्रमेण' इत्यादिवदता [1]इयत्त्विति । लक्षण-

---

१. 'यत्तु दिव्यं' ग. २. 'शृङ्गार उपनिबद्धः' क-ख. ३. 'अप्रसिद्धग्राम्यसंभोगशृङ्गार' क-ख. ४. 'परिहातव्यम्' क. ५. 'अभिनेयार्थत्वात्तत्र परिहारः' ग. ६. 'असत्यता' क.ख. ७. 'उत्तमस्त्रीभिः सह' ग. ८. 'वर्णनवत्सुतरामसभ्यम्' क-ख. ९. 'यावदन्ये च परस्परप्रेमदर्शनादयः प्रभेदाः सन्ति' ख. १०. 'तस्मात्' ग.

---

१. 'इयं त्वित्यादिना' क-ख.

चानुवर्तमानेन महाकविप्रबन्धांश्च पर्यालोचयता स्वप्रतिभां चानुसरता कविनावहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः । औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत्प्रतिपादयति—यदितिहासादिषु रसवतीषु कथासु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत्कथाशरीरं तदेव ग्राह्यं नेतरत् । [2]वृत्तादपि च कथाशरीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम् । नहि तत्रानवधानात्स्खलतः कवेरव्युत्पत्तिसंभावना महती भवति ।

परिकरश्लोकश्चात्र—

'कथाश[3]रीरमुत्पाद्यवस्तु कार्यं तथातथा ।
यथा रसमयं सर्वमेवैतत्प्रतिभासते ॥'

तत्र चाभ्युपायः सम्यग्विभावाद्यौचित्यानुसरणम् । तच्च दर्शितमेव । किंच,

'सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
[4]कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥'

---

ज्ञत्वं लक्ष्यपरिशीलनमदृष्टप्रसादोदितस्वप्रतिभाशालित्वं [1]चानुसर्तव्यमिति संक्षेपः । रसवतीष्वित्यनादरे सप्तमी । रसवत्त्वं [2]चाविवेचकजनाभिप्रायेण च मन्तव्यम् । विभावाद्यौचित्येन हि विना का रसवत्ता कवेरिति । तस्माद्विभावाद्यौचित्यमेव रसवत्ताप्रयोजकं नान्यदिति भावः । **नहि तत्रेति** । [इति]हासवशादेवं मया निबद्धमिति जात्यन्तरमपि संभवति । **तत्र चेति** । रसमयत्वसंपादने । **सिद्धेति** । सिद्ध आस्वादमात्रशेषो न तु भावनीयो रसो येषु । कथानामाश्रया इतिहासास्तैरितिहासार्थैः सह स्वेच्छा न योज्या । कथंचिद्वा यदि योज्यते तत्तत्प्रसिद्धिविरुद्धा न

---

१. 'औचित्यवता' क-ख. २. 'तां स्थितिं वानुवर्तमानेन वृत्तादपि कथा' क-ख. ३. 'शरीरात्' क-ख. ४. 'कथाश्रयात्' क-ख.



---

१. 'चानुमन्तव्यम्' क-ख. २. 'चाविवेकेनाभिमानाभि' ग.

तेषु कथाश्रयेषु तावत्स्वेच्छैव न योज्या । यदुक्तम्—'कथामार्गे न चातिक्रमः' । स्वेच्छापि यदि योज्या तद्रसविरोधिनी न योज्या । इदमपरं प्रबन्धस्य रसाभिव्यञ्जकत्वे निबन्धनम् । इतिवृत्तवशायातां कथंचिद्रसाननुगुणां स्थितिं त्यक्त्वा पुनरुत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयो विधेयः यथा कालिदासप्रबन्धेषु । यथा च सर्वसेनविरचिते हरिविजये । यथा च मदीय एवार्जुनचरिते महाकाव्ये । कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम् । तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत् । न हि कवेरितिवृत्तमात्रनिर्वहणेन किंचित्प्रयोजनम् । इतिहासादेव तत्सिद्धेः । रसादिव्यञ्जकत्वे प्रबन्धस्य चेदमन्यन्मुख्यं निबन्धनं यत्संधीनां मुख-

---

योज्या । यथा रामस्य धीरललितत्वयोजनेन नाटिकानायकत्वं कुर्यादिति त्वत्यन्तासमञ्जसम् । **यदुक्तमिति** । रामाभ्युदये यशोवर्मणा—'स्थितमिति यथा शय्यां–' । **कालिदासेति** । रघुवंशेऽजादीनां राज्ञां विवाहादिवर्णनं नेतिहासेषु निरूपितम् । हरिविजये कान्तानुनयनाङ्गत्वेन पारिजातहरणादि निरूपितमितिहासेषु दृष्टमपि । तथार्जुनचरितेऽर्जुनस्य पातालविजयादिवर्णितमितिहासप्रसिद्धम् । एतदेव युक्तमित्याह—**कविनेति** । **संधीनामिति** । इह प्रभुसंमितेभ्यः श्रुतिस्मृतिप्रभृतिभ्यः कर्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः शास्त्रेभ्यो ये न व्युत्पन्नाः, न चाप्यस्येदं वृत्तममुष्मात्कर्मण इत्येवं युक्तियुक्तकर्मफलसंबन्धप्रकटनकारिभ्यो मित्रसंमितेभ्य इतिहासशास्त्रेभ्यो लब्धव्युत्पत्तयः, अथवावश्यव्युत्पाद्याः प्रजार्थसंपादनयोग्यताकान्तराजपुत्रप्रायास्तेषां हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिरवधार्या । हृदयानुप्रवेशश्च रसास्वादमय एव । स च रसश्चतुर्वर्गोपाय-

---

१. 'निदर्शनम्' क-ख.

---

१. 'इतिहासादिष्वनिरूपितम्' क-ख.

प्रतिमुखगर्भावमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपादीनां घटनं रसा-

व्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोपनत इत्येवं रसोचितविभावाद्यनुबद्धर-सास्वादवैवश्यमेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेवं व्युत्पत्तेः प्रयोजिका। प्रीत्यात्मा च रसस्तदेव नाट्यं नाट्य एव च वेद इत्यस्मदुपाध्यायः। न चैते प्रीतिव्युत्पत्ती भिन्नरूपे एव। द्वयोरप्येकविषयत्वात्। विभावाद्यौचित्यमेव हि सद्यःप्रीतेर्निदानमित्यसकृदवोचाम। विभावादीनां तद्रसोचितानां यथास्वरूपवेदनं फलपर्यन्तीभूततया व्युत्पत्तिरित्युच्यते। फलं च नाम यददृष्टवशाद्देवताप्रसादादन्यतो वा जायते। न च तदुपदेश्यम्। तत उपायो व्युत्पत्तियोगात्। तेनोपायक्रमेण प्रवृत्तस्य सिद्धिः अनुपायद्वारेण प्रवृत्तस्य नाश इत्येवं नायकप्रतिनायकत्वेनार्थानर्थोपायव्युत्पत्तिः कार्या। उपायश्च कर्त्राश्रीयमाणः पञ्चावस्था भजते। तद्यथा—स्वरूपं, स्वरूपात्किंचिदुच्छ्वासतां, कार्यसंपादनयोग्यतां, प्रतिबन्धोपनिपातेन शङ्क्यमानतां, निवृत्तिप्रतिपक्षतायां बाधकबाधनेन सुदृढफलपर्यन्तताम्। एवमार्तिसहिष्णूनां विप्रलम्भभीरूणां प्रेक्षापूर्वकारिणां तावदेवं कारणोपादानम्। ता एवंविधाः पञ्चावस्थाः कारणगता मुनिनोक्ताः—'संसाध्ये फलयोगे तु व्यापारः कारणस्य यः। तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः॥ प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः। नियता च फलप्राप्तिः फलयोगश्च पञ्चमः॥' इति। एवं या एताः कारणस्यावस्थास्तत्संपादकत्वकर्तुरितिवृत्तं पञ्चधा विभक्तम्। त एव मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्या अन्वर्थनामानः पञ्चसंधय इतिवृत्तखण्डाः। संधीयन्त इति कृत्वा तेषामपि संधीनां स्वनिर्वाह्यं प्रति तथा क्रमदर्शनादवान्तरभिन्ना इतिवृत्तभागाः संध्यङ्गानि 'उपक्षेपः परिकरः परिन्यासो विलोभनम्' इत्यादीनि। अर्थप्रकृतयो नैवान्तर्भूताः। तथा हि स्वायत्तसिद्धेर्बीजं बिन्दुः कार्यमिति तिस्रः। बीजेन सर्वव्यापारहेतुना बिन्दुनानुसंधानात्मना कार्येण निर्वाहरूपेण संदर्शनाध्यवसायरूपा ह्येतास्तिस्रोऽर्थे संपाद्ये कर्तुः प्रकृतयः स्वभावविशेषाः। सचिवायत्तसिद्धित्वे तु सचिवस्य तदर्थमेव वा स्वार्थमपि वा प्रवृत्तत्वेन प्रकीर्णत्वप्रसिद्धत्वाभ्यां प्रकरीपताकाव्यपदेशतयोभयसंबन्धी व्यापारविशेषः प्रकरीपताकाशब्दा-

१. 'विभावाद्युपनिबन्धे' क-ख. २. 'प्रतीतिरेव' क. ३. 'एवमास्तिकसहिष्णूनां' ग. ४. 'सर्वव्यापनात्' क-ख. ५. 'संधानात्' क-ख. ६. 'निर्वाहासंदर्शन' क-ख. ७. 'व्यवसाय' ग.

भिव्यक्त्यपेक्षया । यथा रत्नावल्याम् । न तु केवलं शास्त्रस्थितिसंपाद-नेच्छया । यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसंध्यङ्गस्य प्रकृतरस-निबन्धाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम् । इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तं यदुद्दीपनप्रशमने [1]यथावसरं····-

---

भ्यासुक इति । एवं प्रस्तुतफलनिर्वाहणम् । तस्याधिकारिकस्य वृत्तस्य पञ्चसंधित्वं पूर्णसंध्यङ्गता च सर्वजनव्युत्पत्तिदायिनी निबन्धनीया । प्रासङ्गिके त्वितिवृत्ते नायं नियम इत्युक्तं 'प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत्' इति मुनिना । एवंस्थिते रत्नावल्यां धीरललितस्य नायकस्य धर्माविरुद्धसंभोगसेवायामनौचित्याभावात्प्रत्युत न निःसुखः स्यादिति श्लाघ्यत्वात्पृथ्वीराज्यमहाफलान्तरानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमे पञ्चापि संधयोऽवस्थापञ्चकसहिताः समुचितसंध्यङ्गपरिपूर्णा अर्थ-प्रकृतियुक्ता दर्शिता एव । 'प्रारब्धेऽस्मिन्स्वामिनो वृद्धिहेतौ-' इति हि बी-जादेव प्रभृति 'विश्रान्तविग्रहकथः-' इति 'राज्यं निर्जितशत्रु-' इति च वचोभिः 'उपभोगसेवावसरोऽयम्' इत्युपक्षेपात्प्रभृति हि निरूपितम् । एतत्तु समस्तसंध्य-[1]ङ्गस्वरूपं तत्पाठपृष्ठं प्रदर्श्यमानमतितमां ग्रन्थगौरवमावहति । प्रत्येकेन तु प्रद-र्श्यमानं पूर्वापरानुसंधानवन्ध्यतया केवलं संमोहदायि भवतीति न वितथम् । अस्यार्थस्य यत्नावधेयत्वेनेष्टत्वात्स्वकण्ठेन यो व्यतिरेक उक्तो 'न तु केवलया' इति तस्योदाहरणमाह—**न त्विति** । केवलशब्दमिच्छाशब्दं च प्रयुञ्जानस्यायमा-शयः—भरतमुनिना संध्यङ्गानां रसाङ्गभूतमिति वृत्तप्रशस्त्युपादानमेव प्रयोजनमु-क्तम् । न तु पूर्वरङ्गवददृष्टसंपादनं विघ्नवारणम् । यथोक्तम्—'इष्टस्यार्थस्य रचना वृत्तान्तस्यानपक्षयः । रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥ आश्चर्यवदभि-ख्यानं प्रकाश्यानां प्रकाशनम् । अङ्गानां षड्विधं ह्येतद्दृष्टं शास्त्रे प्रयोजनम् ॥' इति । ततश्च, 'समीहा रतिभोगार्थो विलासः परिकीर्तितः ।' इति, [2]प्रतिमुखसंध्यङ्गविला-सलक्षणे रतिभोगशब्द आधिकारिकरसोचितस्[3]थायिभावोपव्यञ्जकविभावाद्युपलक्षणा-र्थत्वेन प्रयुक्तः । यथा—'तत्त्वं नाधिगतार्थः-' इति । प्रकृतो ह्यत्र वीररसः । **उद्दीपन इति** । उद्दीपनं विभावादि[4]परिपूरणम् । यथा—'अयं स राआ उदयणो

---

१. 'यथावसरं······रहस्य' क-ख-पुस्तकयोर्नास्ति.

---

१. 'स्वरूपतत्परं ···प्रदर्श्यमान' ग. २. 'प्रमुख' क. ३. 'स्थायिभावोपपत्तिक' क. ४. 'पूरणया' क-ख.

....रसस्य। यथा रत्नावल्यामेव। पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसंधिश्च। यथा तापसवत्सराजे। प्रबन्धविशेषस्य नाटकादे रसव्यक्तिनिमित्तमिदं चावगन्तव्यं यदलंकृतीनां शक्तावप्यानुरूप्येण योजनम्। शक्तो हि कविः कदाचिदलंकारनिबन्धने तदाक्षिप्ततयैवानपेक्षितरस-

---

त्ति' इत्यादि सागरिकायाः प्रशमनं वासवदत्तातः पलायने पुनरुद्दीपनं चित्रफलकोल्लेखे प्रशमनं सुसंगताप्रवेशे......इत्यादि। गाढं ह्यनवरतपरिमृदितो रसः सुकुमारमालतीकुसुमवज्झटित्येव ग्लानिमवलम्बते। विशेषतस्तु शृङ्गारः। यदाह मुनिः—'यद्वाम्याभिनिवेशित्वं यतश्च विनिवार्यते। दुर्लभत्वं यतो नार्याः कामिनः सा परा रतिः॥' इति। वीररसादावपि यथावसरमुद्दीपनप्रशमनाभ्यां विनापि झटित्येवाद्भुतफलकल्पे साध्ये लब्धे प्रकटीचिकीर्षित उपायोपेयभावो न प्रदर्शित एव स्यात्। **पुनरिति**। इति वृत्तवशादारब्धाशङ्क्यमानप्राया न तु सर्वथैवोपनता विश्रान्तिर्विच्छेदो यस्य स तथा। **रसस्येति**। रसाङ्गभूतस्य कस्यापीति यावत्। तापसवत्सराजे हि वासवदत्ताविषयो जीवितसर्वस्वाभिमानात्मा प्रेमबन्धस्तद्विभावाद्यौचित्यात्करुणविप्रलम्भादिभूमिकां गृह्णन्समस्तेतिवृत्तव्यापी। राज्यप्रत्यायिवृत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूतपद्मावतीलाभानुगतयानुप्राण्यमानरूपा परमामभिलषणीयतमतां प्राप्ता वासवदत्ताधिगतिरेव तत्र फलम्। निर्वहणे हि 'प्राप्ता देवी भूतधात्री च भूयः संबन्धोऽभूद्दर्शकेन' इत्येवं देवीलाभप्राधान्यं निर्वाहितम्। इयति चेतिवृत्तवैचित्र्ये चित्रे भित्तिस्थानीयो वासवदत्ताप्रेमबन्धः प्रथममत्रारम्भात्प्रभृति पद्मावतीविवाहश्चेति तस्यैव व्यापारात्। तेन स एव वासवदत्ताविषयः प्रेमबन्धः कथावशादाशङ्क्यमानविच्छेदोऽपि प्रबन्धसहितः। तथाहि—प्रथमे तावदङ्के स्फुटं स एवोपनिबद्धः 'तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा तद्गोष्ठ्यैव—' इत्यादिना, 'बद्धोत्कण्ठमिदं मनः किमथवा प्रेमा समाप्तोत्सवम्' इत्यन्तेन। द्वितीयेऽपि 'दृष्टिर्नामृतवर्षिणी

---

१. 'परमवगन्तव्यम्' ग.

---

१. 'सुमङ्गलता' क., 'सुसंगतातः' ग. २. 'ह्यनुवासरमृदितसुकुमार' क-ख. ३. 'फुल्लकल्पो मध्ये' क-ख. ४. '...' ग. ५. 'इतिवद्व्यापारात्' क-ख. ६. 'विच्छेदबन्ध' ख. ७. 'धर्मिणी' ग.

बन्धः प्रबन्धमारभते तदुपदेशार्थमिदमुक्तम् । दृश्यन्ते च कवयोऽलंकारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु ।

किं च ।

अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥ १५ ॥

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्योऽपि यः प्रभेद उदाहृतो द्विप्रकारः सोऽपि प्रबन्धेषु केषुचिद्द्योतते। तद्यथा मधुमथन-

---

स्मितमधुप्रस्यन्दि वक्त्रं नु किम्' इत्यादिना स एव विच्छिन्नविच्छिन्नोऽप्यनुसंहितः । तृतीयेऽपि 'सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते श्वासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तया । हा नादेति मुहुः प्रलापपरया दुग्धं वराक्या तथा शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे ॥' इत्यादिना । चतुर्थेऽपि 'देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम् । इत्थं यन्त्रणया कथंकथमपि क्षीणा निशा जाग्रतो दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥' इत्यादिना । पञ्चमेऽपि समागमप्रत्याशया करुणे निवृत्ते विप्रलम्भेऽङ्कुरिते 'तथाभूते तस्मिन्मुनिवचसि जातागसि मयि प्रयाणेऽन्तर्गूढां रुषमुपगता मे प्रियतमा । प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिविधुरं समुद्भिन्ना पीतैर्नयनसलिलैः स्थास्यति पुनः[1] ॥' इत्यादिना । षष्ठेऽपि 'त्वत्संप्राप्तिविलोभितेन मनसा[2] प्राणा मया धारिताः' इत्यादिना । अलंकृतीनामिति योजनापेक्षया कर्मणि षष्ठी । **दृश्यन्ते चेति ।** यथा स्वप्नवासवदत्ताख्ये नाटके—'संजितपक्ष्मकपाटं नयनद्वारं स्वरूपतडनेन (?) । उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥' इति । न केवलं प्रबन्धेन साक्षाद्व्यङ्ग्यो रसो यावत्पारम्पर्येणापीति दर्शयितुमुपक्रमते—**किं चेति।** अनुस्वानोपमः शब्दशक्तिमूलोऽर्थशक्तिमूलश्च यो ध्वनेः प्रभेद उदाहृतः स केषुचित्प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु व्यङ्ग्यतया स्थितः सन्

---

१. 'रसानपेक्षाः' क-ख.



१. 'पुरः' क-ख. २. 'चलितैः' ग.

विजये पाञ्चजन्योक्तिषु । यथा वा ममैव कामदेवस्य सहचरसमागमे विषमबाणलीलायाम् । यथा च गृध्रगोमायुसंवादादौ महाभारते ।

---

अस्येति रसादिध्वनेः प्रकृतस्य भासते । व्यञ्जकतयेति शेषः । वृत्तिग्रन्थोऽप्येवमेव योज्यः । अथ चानुस्वानोपमः प्रभेद उदाहृतो यः प्रबन्धेषु भासते अस्यापि 'द्योत्यो लक्ष्यक्रमः क्वचित्' इत्युत्तरश्लोकेन कारिकावृत्त्योः संगतिः । एतदुक्तं भवति—प्रबन्धेन कदाचिदनुरणनरूपव्यङ्ग्यो ध्वनिः साक्षाद्व्यज्यते स तु रसादिध्वनौ पर्यवस्यतीति । यदि तु स्पष्टमेव व्याख्यायते तदा ग्रन्थस्य पूर्वोत्तरस्यालक्ष्यक्रमविषयस्य मध्ये ग्रन्थोऽयमसंगतः स्यात्, नीरसत्वं च पाञ्चजन्योक्त्यादीनामुक्तं स्यादित्यलम् । 'लीलादाढा[2] ग्गुध्यूढ्ढासअलमहिमण्डलसश्चिअ अज्ज । कीस्ससुणालाहरतुज्जआइ अङ्गम्मि ॥' इत्यादयः पाञ्चजन्योक्तयो रुक्मिणीविप्रलब्धवासुदेवाशयप्रतिभेदनाभिप्रायमभिव्यञ्जयन्ति । सोऽभिव्यक्तः प्रकृतरसस्वरूपपर्यवसायी । सहचरा वसन्तयौवनमलयानिलादयस्तैः सह समागमे । 'मिअवहण्डिअरोरो णिरङ्कुसो अविवेअरहिओ वि । सविण वि तुमम्मि पुणोवन्ति अ अतन्ति पुंमुसिम्मि' इत्यादयो यौवनस्योक्तयस्तत्तन्नि[3]जस्वभावव्यञ्जिकाः । स्वभावः प्रकृतरसपर्यवसायी । **यथा चेति** । श्मशानावतीर्णं पुत्रदाहार्थमुद्योगिनं जनं विप्रलब्धुं गृध्रो दिवा शवशरीरभक्षणार्थी शीघ्रमेवापसरत यूयमित्याह । 'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले । कङ्कालबहले घोरे सर्वप्राणिभयंकरे ॥ न चेह जीवितः कश्चित्कालधर्ममुपागतः । प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥' इत्याद्यवोचत्[4] । गोमायुस्तु[5] निशोदयावधि अमी तिष्ठन्त्विति ततो गृध्रादपहृत्याहं भक्षयिष्यामी[6]त्यभिप्रायेणावोचत् । 'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् । बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ अमुं कनकवर्णाभं बालमप्राप्तयौवनम् । गृध्रवाक्यात्कथं बालास्त्यक्ष्यध्वमविशङ्किताः ॥' इत्यादि । स चाभिप्रायो व्यक्तः शान्तरस एव परिनिष्ठिततां प्राप्तः । एवमलक्ष्यक्रमव्यङ्ग्यस्य रसादिध्वनेर्यद्यपि वर्णेभ्यः प्रभृति प्रबन्धपर्यन्ते व्यञ्जकवर्गे निरूपितेन निरूपणीयान्तरमवशिष्यते तथापि

---

१. 'अद्यापि' क-ख. २. 'इलोदाढं गुंधरि अस··· इमहिमंधतुं सविअअं ज। की···रणानि तुंङ्गगरुआ··· इअङ्गम्मि ॥' ग. सर्वेषु पुस्तकेष्वेतदग्रिमं च प्राकृतमत्यशुद्धमस्ति. ३. 'निज' ग. ४. 'इत्येवमेकमवोचत्' क-ख. ५. 'जम्बुकस्तु' ग. ६. 'भक्षयामि' ग.

सुप्तिङ्वचनसंबन्धैस्तथा कारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ १६ ॥

अलक्ष्यक्रमो ध्वनेरात्मा रसादिभिः सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषैः संबन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति । चशब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते । यथा—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
　सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक्शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
　स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥'

अत्र हि श्लोके भूयसा सर्वेषामप्येषां[1] स्फुटमेव व्यञ्जकत्वं दृश्यते ।

---

कविसहृदयानां शिक्षां दातुं पुनरपि सूक्ष्मदृशान्वयव्यतिरेकावाश्रित्य व्यञ्जकवर्गमाह—**सुप्तिङित्यादि** । वयं[1] त्वित्थमेव तदनन्तरं सवृत्तिकं वाक्यं बुध्यामहे । सुबाद्यभिनेयोऽनुस्वानोपमो भासते वक्रभिप्रायरूपः[2] । सुबादिभिर्व्यक्तस्यानुस्वानोपमस्यालक्ष्यक्रमव्यङ्ग्यो द्योत्यः । क्वचिदिति पूर्वकारिकया सह संमील्य संगतिरिति । सर्वत्र हि सुबादीनामभिप्रायविशेषाभिव्यञ्जकत्वमेव । उदाहरणेनाभिव्यक्तोऽभिप्रायो यथास्वं विभावादिरूपताद्वारेण रसादीन्व्यनक्ति । एतदुक्तं भवति । वर्णादिभिः प्रबन्धान्तैः साक्षाद्वा रसोऽभिव्यज्यते विभावादिप्रतिपादनद्वारेण यदिवा विभावादिव्यञ्जनद्वारेण परम्परयेति । तत्र प्रबन्धस्यैतत्परम्परया व्यञ्जकत्वं प्रसङ्गादुक्तम्[3] । अधुना तु वर्णपदादीनामुच्यत इति । तेन वृत्तावपि 'अभिव्यज्यमानो दृश्यते' इति । वर्णादौ च वाक्यशेषोऽध्याहार्यः विभावादिव्यञ्जक[4]द्वारतया पारम्पर्येणेत्येवंरूपः ।

---

१. 'अमीषां' ग.

---

१. 'वयं.........तस्योदरस्य रसादिध्वनेः सवृत्तिकमेतद्वाक्यमिति बुध्यामहे' ग.
२. 'वक्रभिप्रायादिरूपः' क-ख. ३. 'प्रसङ्गादावुक्तम्' ग. ४. 'व्यञ्जन' ग.

तत्र 'मे यदरयः' इत्यनेन सुप्संबन्धवचनानामभिव्यञ्जकत्वम्। 'तत्राप्यसौ तापसः' इत्यत्र तद्धितनिपातयोः। 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र तिङ्कारकशक्तीनाम्। 'धिग्धिक्शक्रजितं—' इत्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणाम्। एवंविधस्य[1] व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति। यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया[2] किमुत यत्र तेषां बहूनां समवायः।

---

मे यदरय इति। मम शत्रुसंद्भावो[1] नोचित इति संबन्धायौचित्यं[2] क्रोधविभावं व्यनक्ति अरय इति बहुवचनम्। तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्धितेन मत्वर्थीयेनाभिव्यक्तम्। तत्रापिशब्देन निपातसमुदायेनात्यन्तासंभावनीयत्वम्[3]। मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया[4] तावदनुचिता। तस्यां सत्कर्तापिशब्देन मनुष्यमात्रवाचकः (?)[5]। अत्रैवेति मदधिष्ठितो देशोऽधिकरणम्। निःशेषेण हन्यमानतया राक्षसबलं च कर्मेति। तदिदमसंभाव्यमानमुपनतमिति पुरुषकारासंपत्तिर्ध्वन्यत इति। कारकशक्तिप्रतिपादकैश्च शब्दैः रावण इति त्वर्थान्तरसंक्रमितवाच्यत्व पूर्वमेव व्याख्यातम्। धिग्धिगिति निपातस्य शक्रं जितवानित्याख्यायिकेयमिति उपपदसमासेन सहकृतः स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति[6]······ तद्धितप्रयोगस्य प्रत्ययसहितस्याबहुमानास्पदत्वम्। विलुण्ठनशब्देन·········निर्दयावस्कन······व्यञ्जकत्वम्। वृथाशब्दस्य निपातस्य स्वात्मपौरुषनिन्दां प्रति व्यञ्जकता। भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतदिति व्यज्यते। तेन तिलशस्तिलशोऽपि विभज्यमानेऽत्र श्लोके सर्व एवांशो व्यञ्जकत्वेन भातीति किमन्यत्। एतदर्थप्रदर्शनस्य फलं दर्शयति—एवमिति[7]। एकस्य पदस्येति यदुक्तं तदुदा-

---

१. 'एवंविधं' क. २. 'बन्धर्द्धिः' क-ख.

---

१. संभवः' क-ख. २. 'संबन्धेनौचित्यं' क-ख. ३. 'संभाव्यमानत्वम्' क-ख. ४. 'हननक्षमतानुचिता' क-ख. ५. '[illegible]' ग. ६. 'प्रति' इत्यस्मादनन्तरं 'व्यञ्जकत्वम्' अस्मात्पूर्वं क-ख-पुस्तकयोर्नास्ति. ७. 'एवंविधमिति' क-ख.

यथात्रानन्तरोदितश्लोके । अत्र हि रावण इत्यस्मिन्पदेऽर्थान्तरसंक्रमितवाच्येन ध्वनिप्रभेदेनालंकृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम् । दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधा बन्धप्रकाराः ।

यथा महर्षेर्व्यासस्य—

'अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वः श्वः पापीयदिवसा पृथिवी गतयौवना ॥'

अत्र हि कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्यः, 'पृथिवी गतयौवना' इत्यनेन चात्यन्ततिरस्कृतवाच्यो ध्वनिः प्रकाशितः ।

---

दृशति—यथात्रेति । अतिक्रान्तं न तु कदाचन वर्तमानतामवलम्बमानं सुखं येषु ते काला इति सर्व एव। न तु सुखं प्रति वर्तमानो नाम कोऽपि काललेश इत्यर्थः । प्रतीपान्युपस्थितानि निकटतया वर्तमानानि भवन्ति दारुणानि दुःखानि येषु ते। दुःखं बहुप्रकारमेव प्रति वर्तमानरूपाः सर्वे कालांशा इत्यनेन कालस्य तावन्निर्वेदमभिव्यञ्जयतः शान्तरसव्यञ्जकत्वम् । देशस्याप्याह—पृथिवी श्वः श्वः प्रातः प्रातर्दिनाद्दिनं पापीयदिवसा पापीयानां संबन्धिनः पापिष्ठजनस्वामिका दिवसा यस्यां सा तथोक्ता। स्वभावत एव तावत्कालो दुःखमयः तत्रापि पापिष्ठजनस्वामिका पृथिवी ।········ लक्षणदेशदौरात्म्याद्विशेषतो दुःखमय इत्यर्थः । तथा हि श्वः श्व इति दिनाद्दिनं गतयौवना वृद्धस्त्रीवदसंभाव्यमानसंभोगा गतयौवना हि । यो यो दिवस आगच्छति स स पूर्वपूर्वापेक्षया पापीयान् निकृष्टत्वात् ।······चे······शब्दो······एवंप्रयुक्तो जन्तो·········। अत्यन्तेति । सोऽपि प्रकरस्यैवाङ्गतामेतीति भावः ।

---

१ 'यथात्रैवानन्तरोदाहृते' क-ख. २. 'च पदेनात्यन्त' क-ख.

---

१. 'यथा चात्रैवेति' क-ख. २. 'प्रतिपादस्थितानि प्र······नि······प्रत्यावर्तमानानि । तथा दूरभावीन्यपि प्रत्युपस्थितानि निकटतया' ग. ३. 'वर्तमानाः' ग. ४. 'पापानां' क-ख. ५. 'निकृष्टत्वात्' इत्यस्मादनन्तरं 'अत्यन्तेति' अस्मात्प्राक् क-ग-पुस्तकयोर्नास्ति.

ऐषां च सुबादीनामेकैकशः समुदितानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु प्रायेणान्यत्रापि दृश्यते । सुबन्तस्य व्यञ्जकत्वं यथा—

'तालैः शिञ्जद्वलयसुभगैः कान्तया नर्तितो मे ।
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥'

तिङन्तस्य यथा—

'अवसर रोउं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइं ।
दंसंणमेत्तुम्मत्तेहिं जेहिँ हिअअं तुह ण णाअम् ॥'

यथा वा—

'मा पन्थं रुन्धीओ अवेहि बालअ अहोसि अहिरीओ ।
अम्हेअ णिरिच्छाओ सुण्णघरं रक्खिदव्वं णो ॥'

संबन्धस्य यथा—

'अण्णत्त वच्च बालअ अण्हा अन्ति किसमलेहसिएअम् (?) ।
हो जाआभीरुआण तुह·········विअणु होई ॥' (?)

---

**सुबन्तस्येति** । समुदितत्वे तूदाहरणं दत्तं व्यस्तत्वे चोच्यत इति भावः । तालैरिति बहुवचनमनेकविधवैदग्ध्यध्वनिर्विप्रलम्भोद्दीपकतामेति । 'अपसर रोदितुमेव निर्मिते मा उत्पुंसय हते अक्षिणी मे । दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयमेवंरूपं न ज्ञातम् ॥' उन्मत्तो हि न किंचिज्जानातीति न कस्याप्यत्रापराधः दैवेनेत्थमेव निर्माणं कृतमिति । अपसर मा वृथा प्रयासं कार्षीः दैवस्य विपरिवर्तयितुमशक्यत्वादिति । तिङन्तो व्यञ्जकः तदनुगृहीतानि पदान्तराण्यपीति भावः । 'मा पन्थानं रुधः अपेहि बालक अप्रौढ अहो असि अह्रीकः । वयं परतन्त्रा यतः शून्यगृहं मामकं रक्षणीयं वर्तते ॥' इत्यत्रापेहीति तिङन्तमिदं ध्वनति—त्वं तावदप्रौढो लोकमध्ये यदेवं प्रकाशयसि । अस्ति तु संकेतस्थानं शून्यगृहं तत्रैवागन्तव्यमिति । अन्यत्र व्रज बालक अप्रौढ प्रकर्षेणालोकयस्येतत् । भो इति सोल्लुण्ठमाह्वानम् । जायाभीरुकाणां[1] संबन्धमेव (?) न भवति । अत्र[2]

१. 'तेषां' क-ख.



१. 'भीरूणां' ग. २. 'तत्र ज्ञायते ये भीरवः' ग.

कृतकप्रयोगेषु प्राकृतेषु तद्धितविषये व्यञ्जकत्वमावेद्यत एव। समासानां च वृत्त्यौचित्येन विनियोजने निपातानां व्यञ्जकत्वं यथा—

'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः॥'

इत्यत्र चशब्दः। यथा वा—

'मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु॥'

अत्र तुशब्दः। निपातानां प्रसिद्धमपीह द्योतकत्वं रसापेक्षयोक्तमिति द्रष्टव्यम्। उपसर्गाणां व्यञ्जकत्वं यथा—

'नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।

---

जायातो ये भीरवस्तेषामेतत्स्थानमिति दूरापेतः संबन्ध इत्यनेन संबन्धेनैवेर्ष्यातिशयः प्रच्छन्नकामिन्याभिव्यक्तः। कृतकेति कग्रहणमिति तद्धितोपलक्षणार्थम्। कृतः कप्रत्ययप्रयोगो येषु काव्यवाक्येषु यथा जायाभीरुकाणामिति। ये हि रसज्ञा धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्यः कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽवज्ञातिशयद्योतकः। **समासानां चेति**। केवलानामेव व्यञ्जकत्वमावेद्यत इति संबन्धः। चशब्द इति जातावेकवचनम्। द्वौ हि चशब्दावेवमाहतुः काकतालीयन्यायेन गण्डस्योपरि स्फोट इतिवत्तद्वियोगवद्वर्षासमयश्च समुपनतः एतदलं प्राणहरणाय। अत एव रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तम्। तुशब्द इति पश्चात्तापसूचकः संस्तावन्मात्रपरिचुम्बनलाभेनापि कृतकृत्यता स्यादिति ध्वनतीति भावः। **प्रसिद्धमपीति**। वैयाकरणादिग्रहणेषु हि वाक्प्रयोगस्वातन्त्र्यप्रयोगाभावात्षष्ठ्याः (?) श्रवणाल्लिङ्गसंख्याविरहाच्च वाचकवैलक्षण्येन द्योतका

---

१. 'अवज्ञातिशये⋯⋯समासानां' ग. २. 'अतिदुःसहः' ग. ३. 'वारिधरोदयैः' ग. ४. 'विक्लवाभिधानम्' ग.

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाङ्किताः ॥'
'मदमुखरकपोतमुन्मयूरं प्रविरलवामनवृक्षसंनिवेशम्।
वनमिदमवगाहमानभीमं व्यसनमिवोपरि दारुणत्वमेति ॥'

इत्यादौ प्रशब्दस्यौपच्छन्दसिकस्य च व्यञ्जकत्वमधिकं द्योतते।

द्वित्राणां चोपसर्गाणामेकत्र पदे यः प्रयोगः सोऽपि रसव्यक्त्यनुगुणतयैव निर्दोषः। यथा—'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्द्राग्जन्तून्—' इत्यादौ। यथा वा[1]—'मनुष्यवृत्त्या समुपाचरन्तं—' इत्यादौ। 'यः स्वप्ने सदुपानतस्य—' इत्यादौ च[2]।

निपातानामपि तथैव। यथा—'अहो बतासि स्पृहणीयवीर्यः' इत्यादौ। यथा वा—

'ये जीवन्ति न मान्ति ये स्ववपुषि प्रीत्या प्रनृत्यन्ति ये[3]
प्रस्यन्दिप्रमदाश्रवः पुलकिता[4] दृष्टे गुणिन्यूर्जिते।

---

निपाता इत्युद्द्योष्यत एवेति भावः। प्रकर्षेण स्निग्धा इति प्रशब्दः प्रकर्षं द्योतयन्निङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनयति। 'तापसस्य फलविषयोऽभिलाषातिरेको ध्वन्यते' इति त्वसत्। अभिज्ञानशाकुन्तले हि राज्ञ इयमुक्तिर्न तापसस्येत्यलम्। द्वित्राणामित्यनेनाधिक्यं निरस्यति। सम्यगुच्चैर्विशेषेणेक्षितत्वे हि भगवतः कृपातिशयोऽभिव्यक्तः। 'मनुष्यवृत्त्या समुपाचरन्तं[1] स्वबुद्धिसामान्यकृतानुमानाः[2]। योगीश्वरैरप्यसुबोधमीशं त्वां बोद्धुमिच्छन्त्यबुधाः[3] स्वतर्कैः ॥' सम्यग्भूतमुपांशुकृता आ समन्ताचरन्तमित्यनेन लोकानुजिघृक्षाति[4]-

---

१. 'यथा वा' क-ख-पुस्तकयोर्नास्ति. २. 'यः स्वप्ने–' इत्यादि क-ख-पुस्तकयोर्नास्ति. ३. 'च' ग. ४. 'पुलकिनः' ग.

---

१. 'समुदा' ग. २. 'कृताभिमानाः' ग. ३. 'दग्धुं' ग. ४. 'लोकातिशयजिघृक्षातिशय' ग.

हा धिक्कष्टमहो क यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं [2]शठेन विधिना [3]साधुद्विषः पुष्यता ॥'

इत्यादौ ।

पदपौनरुक्त्यं च व्यञ्जकत्वापेक्षयैव कदाचित्प्रयुज्यमानं शोभामावहति । यथा—

'यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथाप्रणयमस्य न पारयन्ति ॥'

इत्यादौ ।

कालस्य व्यञ्जकत्वं यथा—

'[4]समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा ।
अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घा ॥'

---

यस्तथा चरतः परमेश्वरस्य ध्वनितः । तथैवेति । रसव्यञ्जकत्वेन द्वित्राणामपि प्रयोगो निर्दोष इत्यर्थः । हा धिगिति···तिशयो निर्वेदातिशयश्च ध्वन्यते । प्रसपौनरुक्त्यन्तरमपि व्यञ्जकमित्याह—**पदपौनरुक्त्यमिति** । पदग्रहणं वाक्यादेरपि यथासंभवमुपलक्षणम् । **विदन्तीति** । त एव हि सर्वं विदन्ति नेतरामिति ध्वन्यते । वाक्यपौनरुक्त्यं यथा—'पश्य—द्वीपादन्यस्मादपि—' इति वचनानन्तरं 'कः संदेहः । द्वीपादन्यस्मादपि—' इत्यनेनेप्सितप्राप्तिरविघ्नितैव ध्वन्यते । 'किं स्व······' इत्यनेनामर्षातिशयः । 'सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी' इत्युन्मादातिशयः । **कालस्येति** । तिङन्तपदानुप्रविष्टस्याप्यर्थकलापस्य कारककालसंख्योपग्रहरूपस्य मध्येऽन्वयव्यतिरेकाभ्यां सूक्ष्मदृशा भागगतमपि

---

१. 'शनैश्च' ग. २. 'सा विद्विषा' ग. ३. 'भुवि' ग.
४. 'समविषमनिर्विशेषाः समन्ततो मन्दमन्दसंचाराः ।
अचिराद्भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घ्याः ॥' इति च्छाया.

अत्र ह्यचिराद्भविष्यन्ति पन्थान इत्यत्र भविष्यन्तीत्यस्मिन्पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते । अयं हि गाथार्थः प्रवासविप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान् । यथात्र प्रत्ययांशो व्यञ्जकस्तथा क्वचित्प्रकृत्यंशोऽपि दृश्यते । यथा—

'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः
सा धेनुर्जरती चरन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥'

अत्र श्लोके दिवसैरित्यस्मिन्पदे प्रकृत्यंशोऽपि द्योतकः । सर्वनाम्नां च व्यञ्जकत्वं यथात्रैवानन्तरोक्ते श्लोके । अत्र च सर्वनाम्नामेव व्यञ्जकत्वं हृदि व्यवस्थाप्य कविना क्वेत्यादिशब्दप्रयोगो न कृतः । अनया

---

व्यञ्जकत्वं विचार्यमिति भावः । **रसपरिपोषेति** । उत्प्रेक्ष्यमाणो वर्षासमयः कामक किमिति (?) वर्तमान इति ध्वन्यते । अंशांशिकप्रसङ्गादेवाह—**यथात्रेति** । दिवसार्थो ह्यत्रात्यन्तासंभाव्यमानतामस्यार्थस्य ध्वनयति । **सर्वनाम्नां चेति** । प्रकृत्यंशस्य चेत्यर्थः । तेन प्रकृत्यंशेन संभूय सर्वनामव्यञ्जकत्वं दृश्यत इत्युक्तं भवतीति न पौनरुक्त्यम् । तथा हि तदिति पदं नतभित्तीत्येतत्प्रकृत्यंशसहायं समस्तामङ्गलनिधानभूतमूषकाद्याकीर्णतां ध्वनयति । तदिति हि केवलमुच्यमाने समुत्कर्षातिशयोऽपि संभाव्येत । न च नतभित्तिशब्देनापि । एते दौर्भाग्यायतनत्वसूचका विशेषा उक्ताः । एवं सा धेनुरित्यादावपि योज्यम् । एवंविधे च विषये स्मरणाकारद्योतकता तच्छब्दस्य । ननु यच्छब्दसंबन्धतेत्युक्तं प्राक् । अत्र[1] तदिदंश[2]ब्दादिना स्मृत्यनुभवयोरत्यन्तविरु[3]द्धाविषयतासूचनेनाश्चर्यविभावता योजिता । तदिदंशब्दाद्यभावे तु सर्वमसङ्गतं स्यादिति त[4]दिदमादेरेव प्राणत्वं योज्यम् । एतच्च द्विश[5]ः सामस्त्यं त्रिशः सामस्त्यमिति व्यञ्जकमित्युपलक्षणपरम् । तेन लोष्टप्रस्तारन्याये-

---

१. 'अत एवात्र' क-ख. २. 'शब्दादीनां' ग. ३. 'विरुद्धताविषयः' ग. ४. 'तदेदमसंशयो वै प्राणत्वं' ग. ५. 'द्व्यंशसामस्त्यं त्र्यंश' क-ख.

दिशा सहृदयैरन्येऽपि व्यञ्जकविशेषाः स्वयमुत्प्रेक्षणीयाः । एतच्च सर्वं पदवाक्यरचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम्, न तु चार्थसामर्थ्याक्षेप्या रसादय इत्युक्तम् । तथा च सुबादीनां व्यञ्जकत्ववैचित्र्यकथनमनन्वितमेव । उक्तमत्र पदानां व्यञ्जकत्वोक्त्यवसरे । किंचार्थविशेषाक्षेप्यत्वेऽपि रसादीनां तेषामर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वाद्यथाप्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं विभज्योपयुज्यत एव । शब्दविशेषाणां तत्रान्यत्र च चारुत्वं यद्विभागेनोपदर्शितं तदपि तेषां व्यञ्जकत्वेनैवावस्थितमित्यवगन्तव्यम् । यत्रापि [1]न तत्संप्रतिभासते तत्रापि व्यञ्जके रचनान्तरे यद्दृष्टं सौष्ठवं [2]तेषां प्रवाहपतितानां तदेवा-

---

नानन्तवैचित्र्यमुक्तम् । [1]यदाह—**अन्येऽपीति** । अतिविक्षिप्ततया शिष्यबुद्धिसमाधानं न भवेदित्यभिप्रायेण संक्षिपति—**एतच्चेति** । वितत्याभिधानेऽपि प्रयोजनं स्मारयति—**वैचित्र्येणेति** । पूर्वं निर्णीतमप्येतदविस्मरणार्थमधिकाभिधानार्थं वा विक्षिप्तम् । **उक्तमत्रेति** । न वाचकत्वं ध्वनिव्यवहारोपयोगि येनावाचकस्य व्यञ्जकत्वं न स्यात् । इति प्रागेवोक्तम् । न च गीतादिवद्रसाभिव्यञ्जकत्वेऽपि शब्दस्य तत्र व्यापारोऽस्त्येव । स च व्यञ्जनात्मैवेति भावः । एतच्चास्माभिः प्रथमोद्योते निर्णीतचरम् । न चेदमस्माभिरपूर्वमुक्तमित्याह—**शब्दविशेषाणां चेति** । **अन्यत्रेति** । भामहविवरणे । **विभागेनेति** । स्रक्चन्दनादयः शब्दाः शृङ्गारे चारवो बीभत्से त्वचारव इति रसकृत एव विभागः । रसं प्रति च शब्दस्य व्यञ्जकत्वमेवेत्युक्तं प्राक् । स्रक्चन्दनादिशब्दानां तदानीं शृङ्गारादिव्यञ्जकत्वाभावेऽपि व्यञ्जकत्वशक्तेर्भूयसा दर्शनात्तदधिवाससुन्दरीभूतमर्थं [2]प्रतिपादयितुं सामर्थ्यमस्ति । तथा हि—'तटी तारं ताम्यति-' इत्यत्र तटशब्दस्य पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेवाश्रितं सहृदयैः । 'स्त्रीति नामापि मधुरं' इति कृत्वा । यथा चास्मदुपाध्यायस्य विद्वत्कविसहृदयचक्रवर्तिनो भट्टेन्दुराजस्य—'इन्दीवरद्युति यदा

---

१. 'तत्संप्रति न भासते' ग. २. 'तेषां तेषां' ग.

---

१. 'यद्वक्ष्यति' ग. २. 'संपादयितुं' क-ख.

भ्यासादपोद्धृतानामप्यवभासते इत्यवस्थातव्यम् । कोऽन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषः स्यात् । अन्य एवासौ सहृदयसंवेद्य इति चेत्, किमिदं सहृदयत्वं नाम । किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वम्, उत रसभावादिमयकाव्यस्वरूपपरिज्ञाननैपुण्यम् । पूर्वस्मिन्पक्षे तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात् । पुनः समयान्तरेणान्यथापि व्यवस्थापनसंभवात् । द्वितीयस्मिंस्तु पक्षे रसज्ञतैव सहृदयत्वमिति । तथाविधैः सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय एव तेषां मुख्यं चारुत्वम् । वाचकत्वाश्रयस्तु[1] प्रसाद एवार्थापेक्षायां तेषां विशेषः । अर्थानपेक्षायां त्वनुप्रासादिरेव ।

---

बिभ्रयां न लक्ष्म स्युर्विस्मयैकसुहृदोऽस्य यदा विलासाः । स्यान्नाम पुण्यपरिणामवशात्तदानीं कीरीकपोलतलकोमलकान्तिरिन्दुः ॥[2] अत्र हीन्दीवरलक्ष्मविस्मयसुहृद्विलसनामपरिणामकोमलादयः शब्दाः शृङ्गाराभिव्यञ्जनदृष्टशक्तयोऽत्र परं सौन्दर्यमावहन्ति । अवश्यं चैतदभ्युपगन्तव्यमित्याह—**कोऽन्यथेति**। असंवेद्यस्तावदसौ न युक्त इत्याशयेनाह—**अन्येति**। पुनरप्यनियन्त्रितपुरुषेच्छायत्तोऽपि समयः कथं नियतः स्यात् । **मुख्यं चारुत्वमिति**। विशेष इति पूर्वेण संबन्धः । **अर्थापेक्षायामिति**। वाच्यापेक्षायामित्यर्थः । **अनुप्रासादिरेवेति**। शब्दान्तरेण सह या रचना तदपेक्षोऽसौ विशेष इत्यर्थः । आदिशब्दादर्थगुणानां संग्रहः । अत एव रचनायाः प्रसादेन चारुत्वेनोपबृंहिता एव शब्दाः काव्ये योज्या इति तात्पर्यम् । रसादीनां

---

१. 'वाचकत्वाश्रयाणां तु सोऽस्तु' ग.

---

२. 'आदिशब्दाच्छब्दगुणालंकाराणां' ग.

एवं रसादीनां व्यञ्जकस्वरूपमभिधाय तेषामेव विरोधिरूपं लक्षयितु-मिदमुपक्रम्यते—

प्रबन्धे मुक्तके वापि रसादीन्बन्द्धुमिच्छता ।
यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥ १७ ॥

प्रबन्धे मुक्तके वापि रसाभावनिबन्धनं प्रत्यादृतमनाः कविर्विरोधि-परिहारे परं यत्नमादधीत । अन्यथा त्वस्य रसमयः श्लोक एकोऽपि सम्यङ्न संपद्यते ।

कानि पुनस्तानि विरोधीनि यानि यत्नतः कवेः परिहर्तव्यानी-त्युच्यते—

विरोधिरससंबन्धिविभावादिपरिग्रहः ।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ १८ ॥
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।

---

व्यञ्जकं वर्णपदादिप्रबन्धान्तं तस्य स्वरूपमभिधायेति संबन्धः । **उपक्रम्यत[1] इति** । विरोधिनामपि लक्षणकारणे प्रयोजनमुच्यते शक्य[2]भानत्वं नाम अनया [3]कारिकया लक्षणं तु विरोधरससंबन्धीत्यादिना भविष्यतीत्य[4]र्थः । ननु 'विभावभावानुभावसंचार्यौचित्यचारुणः' [5]इति यदुक्तं तत एव व्यतिरेकमुखेनै[6]तदप्यवगंस्यते । नैवम् । व्यतिरेकेण हि तदभावमात्रं [7]प्रतीयते न तु तद्विरुद्धम् । तदभावमात्रं च न तथा दूषकं यथा तद्विरुद्धम् । पथ्यानुपयोगो हि न तथा व्याधिं जनयति यद्वदपथ्योपयोगः । तदाह—**कानीति** । विभावेत्यादिना श्लोकेन यदुक्तं तद्विरुद्धं विरोधीत्यादिनार्धश्लोकेनाह । इतिवृत्तेत्यादिना श्लोकद्वयेन यदुक्तं तद्विरुद्धं विस्तरेणेत्यर्धश्लोकेनाह । उद्दीपनेत्यर्धश्लोकोक्तस्य विरुद्धमकाण्ड इत्यर्धश्लोकेन । रसस्येत्य-

---

१. 'लक्षयितुमुपक्रमते' क-ख.

---

१. 'उपक्रमते' क-ख. २. 'हानत्वं' क-ख. ३. 'कामिकया' ग. ४. 'गतार्थः' ग. ५. 'इत्यादि' क-ख. ६. 'अपि गम्यते' क-ख. ७. '[illegible]ते' क-ख.

परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च ॥ १९ ॥

प्रस्तुतरसापेक्षया विरोधी यो रसस्तस्य संबन्धिनां विभावानुभावव्यभिचारिणां परिग्रहो रसविरोधहेतुरेकः संभवनीयः । तत्र विरोधिरसविभावपरिग्रहो यथा शान्तरसविभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव शृङ्गारादिवर्णने । विरोधिरसभावपरिग्रहो यथा प्रियं प्रति प्रणयकलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये । विरोधिरसानुभावपरिग्रहो यथा प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने । अयं चान्यो रसभङ्गहेतुर्यत्प्रस्तुतरसा-

---

र्धश्लोकोक्तस्य विरुद्धं परिपोषं गतस्येत्यर्धश्लोकेन । अलंकृतीनामित्यनेन यदुक्तं तद्विरुद्धमन्यदपि च विरुद्धं वृत्त्यनौचित्यमित्यनेन । एतत्क्रमेण व्याचष्टे—**प्रस्तुतरसापेक्षयेत्यादिना** । हास्यशृङ्गारयोर्वीराद्भुतयो रौद्रकरुणयोर्भयानकबीभत्सयोर्न विभावविरोध इत्यभिप्रायेण शान्तशृङ्गारावुपन्यस्तौ । प्रशमगर्वयोर्विरोधात् । विरोधिनि रसस्य यो भावो व्यभिचारी तस्य परिग्रहः । विरोधिनस्तु यः स्थायी तस्य तया तावत्परिग्रहोऽसंभवनीय एव । तदनुत्थानप्रसङ्गात् । व्यभिचारितया तु परिग्रहो भवत्येव । अत एव सामान्येन भावग्रहणम् । वैराग्यकथाभिरिति वैराग्यशब्देन निर्वेदः शान्तस्य यः स्थायी स उक्तः । यथा—'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं' इत्याद्युपक्रम्यार्थान्तरन्यासो 'न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः' इति । मनागपि निर्वेदानुप्रवेशे सति रतेर्विच्छेदात् । ज्ञातविषयसतत्त्वो हि जीवितसर्वस्वाभिमानात्कथं भजेत । नहि ज्ञातशुक्तिरजततत्त्वस्तदुपादेयधियं भजते । ऋते संवृत्तिमात्रात् । कथाभिरिति बहुवचनं शान्तरसस्य व्यभिचारिणो वृत्तिं मतिप्रभृति संगृह्णाति । नन्वन्यदनुन्मत्तः कथं वर्णयेत् किमुत विस्त-

---

१. 'रसाद्यपेक्षया' ग.

---

१. 'अनुभाव' क-ख. २. 'उपात्तस्य' ग. ३. 'नुतेधे' ग. ४. 'न त्वन्यदनुमन्तव्यः कथं' क-ख.

पेक्षया वस्तुनोऽन्यस्य कथंचिदन्वितस्यापि विस्तरेण कथनम् । यथा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमुपक्रान्तस्य[1] कवेर्यमकाद्यलंकारनिबन्धनरसिकतया महता प्रबन्धेन पर्वतादिवर्णने । अयं चापरो रसभङ्गहेतुरवगन्तव्यो[2] यदकाण्ड एव विच्छित्तिः रसस्याकाण्डे[3] च प्रथनम् । तत्रानवसरे विरामो[4] यथा नायकस्य कस्यचित्स्पृहणीयसमागमया नायिकया कयाचित्परां[5] परिपोषपदवीं प्राप्ते शृङ्गारे विदिते च परस्परानुरागे समागमोपायचिन्तोचितं[6] व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने । अनवसरे च प्रकाशनं[7] यथा प्रवृत्ते प्रवृद्धविविधवीरसंक्षये कल्पसंक्षयकल्पे सङ्ग्रामे देवप्रायस्यापि[8] तावन्नायकस्यानुपक्रान्तविप्रलम्भशृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गारकथायामवतारवर्णने । न चैवंविधे विषये दैवव्यामोहितत्वं कथापुरुषस्य परिहारो यतो रसबन्ध एव कवेः प्राधान्येन स्वप्रवृत्तिनिबन्धनं युक्तम् । इतिवृत्तवर्णनं तदुपाय एवेत्युक्तं प्राक् 'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः' इत्यादिना । अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धेन[9] च कवीना-

---

रत इत्याह—**कथंचिदन्वितस्येति** । **व्यापारान्तरेति** । यथा वत्सराजचरिते चतुर्थेऽङ्के—रत्नावलीनामधेयमप्यगृहतो[1] विजयवर्मवृत्तान्तवर्णने[2] । अपि तावदिति[3] शब्दाभ्यां दुर्योधनादेस्तद्वर्णनं दूरापास्तमिति । वेणीसंहारे द्वितीयाङ्कमेवोदाहरणत्वेन ध्वनति । अत एव वक्ष्यति—दैवव्यामोहितत्वमिति । पूर्वं तु संध्यङ्गाभिप्रायेण प्रत्युदाहरणमुक्तम्[4] । कथापुरुषस्येति । प्रतिनायकस्येति यावत् । **अत एव चेति** ।

---

१. 'अनुक्रान्ते' **ग.** २. 'भङ्गहेतुमावहति' **ग.** ३. 'अकाण्ड एव प्रकाशनम्' **ग.** ४. 'विरामो रसस्य' **क-ख.** ५. 'सह' **क-ख.** ६. 'चिन्तितोचितं' **क-ख.** ७. 'प्रकाशनं रसस्य' **क-ख.** ८. 'रामदेव' **ग.** ९. 'चाङ्गाङ्गि'.

---

१. 'अग्रहणतो' **ग.** २.'वृत्तान्ताकर्णने' **ग.** ३. 'काञ्चिदिति' **ग.** ४. 'हरणतोक्ता तथा पुरुषस्येति' **ग.**

मेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन । पुनश्चायमन्यो रसभङ्गहेतुरवधारणीयो यत्परिपोषं गतस्यापि रसस्य पौनःपुन्येन दीपनम् । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनरामृष्यमाणः परिम्लानकुसुमकल्पः कल्पते । तथा वृत्तेर्व्यवहारस्य यदनौचित्यं तदपि रसभङ्गहेतुरेव । यथा नायकं प्रति नायिकायाः कस्याश्चिदुचिताङ्गभङ्गिमन्तरेण स्वयं संभोगाभिलाषकथने । यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां काव्यालंकारान्तरप्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यमविषये निबन्धनं तदपि रसभङ्गहेतुः । एवमेषां रसविरोधिनामन्येषां चानया दिशा स्वयमुत्प्रेक्षितानां परिहारे सत्कविभिरवहितैर्भवितव्यम् । परिकरश्लोकाश्चात्र—

---

यतो रसबन्ध एव मुख्यः कविव्यापारविषयः । इतिवृत्तमात्रवर्णनप्राधान्ये सति यदङ्गाङ्गिभावरहितानामविचारितगुणप्रधानभावानां रसभावानां निबन्धनं तन्निमित्तानि स्खलितानि सर्वे दोषा इत्यर्थः । **न ध्वनिप्रतिपादनमात्रेति** । व्यङ्ग्योऽर्थो भवतु मा वा भूत् कस्तत्राभिनिवेशः । काकदन्तपरीक्षाप्रायमेव तत्स्यादिति भावः । वृत्त्यनौचित्यमेव चेति बहुधा व्याचष्टे—**तदपीत्यनेन** । चशब्दं कारिकागतं व्याचष्टे । रसभङ्गहेतुरेव इत्यनेनैवकारस्य कारिकागतस्य भिन्नक्रमत्वमुक्तम् । रसस्य विरोधायेत्यर्थः । **नायकं प्रतीति** । नायकस्य हि धीरोदात्तादिभेदभिन्नस्य सर्वथा वीररसानुप्रबन्धेन भवितव्यमिति । तं प्रति कापुरुषोचितमधैर्ययोजनं दुष्टमेव । **परिकरश्लोका इति** । तेषामिति रसादीनाम् । तैरिति सुकविभिः । सोऽपशब्द इति

---

१. 'पुनः परामृष्य' **क-ख.**

---

१. 'प्रवेधेन' **ग.**

'मुख्या व्यापारविषयाः सुकवीनां रसादयः ।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥
नीरसस्तु[1] प्रबन्धो यः सोऽपशब्दो महान्कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥
पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः ।
तान्समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥
वाल्मीकिव्यासमुख्याश्च ये प्रख्याता कवीश्वराः ।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः ॥' इति ।

**विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।**
**बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ २० ॥**

स्वसा[2]मग्रीलब्धपरिपोषे तु विवक्षिते रसे विरोधिनां विरोधिरसाङ्गानां बाध्यानामङ्गभावं वा प्राप्तानां सतामुक्तिर[3]दोषा । बाध्यत्वं हि विरोधिनां शक्याभिभवत्वे सति नान्यथा । तेषामुक्तिः प्रस्तुतरसपरिपोषायैव संपद्यते । अङ्गभावं प्राप्तानां च तेषां तावदुक्तावविरोध एव । यथा विप्रलम्भ-

---

दुर्यश इत्यर्थः । ननु कालिदासः परिपोषं गतस्यापि करुणस्य रतिविलासेषु पौनःपुन्येन दीपनमकार्षीत्, तत्कोऽयं रसविरोधिनां परिहारनिर्बन्ध इत्याशङ्क्याह—**पूर्वे इति** । नहि वसिष्ठादिभिः कथंचिद्यदि स्मृतिमार्गस्त्यक्तस्तद्वयमपि तथा त्यजामः । अचिन्त्यहेतुत्वं मुनिचरितानामिति भावः । इतिशब्देन परिकरश्लोकसमाप्तिं सूचयति । एवं विरोधिनां परिहारे सामान्येनोक्ते प्रतिप्रसवं नियतविषयमाह—**विवक्षित इति । बाध्यानामिति** । बाध्यत्वाभिप्रायेणाङ्गत्वाभिप्रायेणेति चेत्यर्थः । अच्छला निर्दोषेत्यर्थः । बाध्यत्वाभिप्रायं व्याचष्टे—(बाध्यत्वं······वाभिप्रायमुभ-

---

१. 'हि निबन्धो यः' ग. २. 'स्वसामग्र्या' क ख. ३. 'निर्दोषा' ग.

शृङ्गारे तदङ्गानां व्याध्यादीनां तदङ्गानामेवादोषो नातदङ्गनाम् । तदङ्गत्वे च संभवत्यपि मरणस्योपन्यासो न [1]न्याय्यः । आश्रयविच्छेदे रसस्यात्यन्तविच्छेदप्राप्तेः । करुणस्य तु तथाविधे विषये परिपोषो भविष्यतीति चेत् । न । तस्याप्रस्तुतत्वात् प्रस्तुतस्य च विच्छेदात् । यत्र तु [2]करुणस्यैव काव्यार्थत्वं तत्राविरोधः । शृङ्गारे वा मरणस्यादीर्घकालप्रत्यापत्तिसंभवे कदाचिदुपनिबन्धो नात्यन्तविरोधी । दीर्घकालप्रत्यापत्तौ तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रसबन्धप्रधानेन कविना परिहर्तव्यम् ।

---

यथा व्याचष्टे) तत्र प्रथमं स्वाभाविकप्रकारं निरूपयति—**[1]तदङ्गानामिति** । निरपेक्षभावतया सापेक्षभावविप्रलम्भशृङ्गारविरोधिन्यपि करुणे भवन्त्येव त एव च भवन्तीति । शृङ्गारे तु भवन्त्येव नापि त एवेति । **अतदङ्गानामिति** । यथारुस्यौग्रजुगुप्सानामित्यर्थः । **तदङ्गत्वे चेति** । सर्वे एव शृङ्गारे व्यभिचारिण इत्युक्तत्वादिति भावः । आश्रयस्य स्त्रीपुरुषान्यतरस्याधिष्ठानस्यापाये [2]रतिरेवोच्छिद्येत । तस्या जीवितसर्वस्वाभिमानरूपत्वेनोभयाधिष्ठानत्वात् । **[3]प्रस्तुतस्येति** । विप्रलम्भस्येत्यर्थः । **काव्यार्थत्वमिति** । प्रस्तुतत्वमित्यर्थः । नन्वेवं सर्वे एव व्यभिचारिण इति विघटितमित्याशङ्क्याह—**शृङ्गारे वेति** । [4]अदीर्घकाले यत्र मरणे विश्रान्तिपदबन्ध एव नोत्पद्यते तत्रास्याव्यभिचारित्वम् । **कदाचिदिति** । यदि [5]तादृशीं भङ्गिं घटयितुं सुकवेः कौशलं भवति । यथा—'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहन्[6]यासादमरगणनालेख्यमासाद्य सद्यः । [7]पूर्वाकाराधिकचतुरया संगतः कान्तयासौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥' अत्र स्फुटैव रत्यङ्गता मरणस्य । अत एव सुकविना मरणपदमात्रं न कृतम् । अनूद्यमानत्वेनैवोपनिर्ब[8]न्धनात् । पदबन्धनि[9]वेशे तु सर्वथा शोकोदय एवातिपरिमितकालप्रत्यापत्तिला-

---

१. 'ज्यायान्' ग. २. 'करुणरसस्यैव' ग.

---

१. 'यदङ्गाङ्गिनामिति' ग. २. 'अपायैरिति विच्छिद्यते' क-ख. ३ 'प्रस्तुतशृङ्गारे । अस्येति' ग. ४. 'अतिदीर्घ' क-ख. ५. 'ईदृशीं' ग. ६. 'त्यागात्' क-ख. ७. 'पूर्वाकारादधिगतरुचा' क-ख. ८. 'निबन्धात्' ९. 'निवेशेषु तु सर्वदा' ग.

तत्र लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वेनोक्तावदोषो यथा—

‘क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥’

यथा वा पुण्डरीकस्य महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य द्वितीयमुनिकुमारोपदेशवर्णने । स्वाभाविक्यामङ्गभावप्राप्तावदोषो यथा—

‘भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥’

इत्यादौ । समारोपितायामप्यविरोधो यथा—‘पाण्डुक्षामं–’ इत्यादौ ।

---

भेऽपि । अथ दूरपरामर्शकसहृदयसामाजिकाभिप्रायेण मरणस्यादीर्घकालप्रत्यापत्ते-
रङ्गतोच्यते हन्त । तापसवत्सराजेऽपि यौगन्धरायणादिनीतिमार्गाकर्णनसंस्कृतम-
तीनां वासवदत्तामरणबुद्धेरेवाभावात्करुणस्य नामापि न स्यादित्यलमवान्तरेण
बहुना । तस्माद्दीर्घकाल[1]तात्र पदबन्धलाभ एवेति मन्तव्यम् । एवं नैसर्गिकागता
व्याख्याताः । समारोपितात्वे तद्विपरीतेत्यर्थलब्धत्वात्स्वकण्ठेन न व्याख्याताः ।
एवं प्रकारत्रयं व्याख्याय क्रमेणोदाहरति—**तत्रेत्यादिना** । **क्वाकार्यमिति** ।
वितर्क औत्सुक्येन मतिः स्मृत्या ( औत्सुक्ये ) धृतिश्चेतनयैव बाध्यते । एतच्च
द्वितीयोद्योतारम्भ एवोक्तमस्माभिः । **द्वितीयेति** । विपक्षीभूतवैराग्यविभावाद्य-
वधारणेऽपि ह्यशक्यविच्छेदत्वेन दार्ढ्यमेवानुरागस्योक्तं भवतीति भावः । **समारो-
पितायामिति** । अङ्गभावप्राप्ताविति शेषः । ‘पाण्डुक्षामं वक्त्रं हृदयं सरसं तवा-
लसं च वपुः । आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥’ अत्र करुणो-

---



१. ‘कालमत्र’ ग.

यथा वा—'कोपात्कोमललोलबाहुलतिकापाशेन' इत्यादौ । इयं चाङ्गभावप्राप्तिरन्या यदधिकारिकत्वात्प्रधान एकस्मिन्वाक्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गभावगमनं तस्यामपि न दोषः। यथोक्तं 'क्षिप्तो हस्तावलग्नः—' इत्यादौ । कथं तत्राविरोध इति चेत्, द्वयोरपि तयोरन्यपरत्वेन व्यवस्थापनात् । अन्यपरत्वेऽपि विरोधिनोः कथं विरोधनिवृत्तिरिति चेत्, उच्यते—विधौ विरुद्धसमावेशस्य दुष्टत्वं नानुवादे । यथा—

'एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥'

इत्यादौ । अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधस्तथेहापि भविष्यति । श्लोके ह्यस्मिन्नीर्ष्याविप्रलम्भशृङ्गारकरुण-

---

चितो व्याधिः श्लेषभङ्ग्या स्थापितः[1] । कोपादिति बद्धेति हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम् । तच्च पूर्वमेवोक्तम् । 'नातिनिर्वहणैषिता' इत्यत्रान्तरे । **अन्येति** । चतुर्थोऽयं प्रकार इत्यर्थः । पूर्वं हि विरोधिनः प्रस्तुतरसान्तरेऽङ्गतोक्ता अधुना तु द्वयोर्विरोधिनोर्वस्त्वन्तरेऽङ्गभाव इति शेषः । **क्षिप्त इति** । व्याख्यातमेतत् 'प्रधानेऽन्यत्र वाक्यार्थे' इत्यत्र । नन्वन्यपरत्वेऽपि स्वभावो न निवर्तते स्वभावकृत एव विरोध इत्यभिप्रायेणाह—**अन्यपरत्वेऽपीति** । **विरोधिनोरिति** । तत्स्वभावयोरिति हेतुत्वाभिप्रायेण विशेषणम् । उच्यते इत्यस्यायं भावः—सामग्रीविशेषपतितत्वेन भावानां विरोधाविरोधौ[2] न स्वभावमात्रनिबन्धनेन । शीतोष्णयोरपि विरोधाभावात् । **विधाविति**[3] । तदेव कुरु मा कार्षीरिति यथा विधिशब्देनात्रैक[4]प्राधान्यमुच्यते । अत एवातिरात्रे षोडशिनं गृह्णन्ति न गृह्णन्तीति विरुद्धविधिविकल्पपर्यवसायीति वाक्यविदः ।

१. 'चात्र' क-ख.

१. 'रोपितः' क-ख. २. 'विरोधः' क-ख. ३. 'विरोधाविति' ग. ४. 'एकदा' ग.

वस्तुनोर्न विधीयमानत्वम् । त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वात्तदङ्गत्वेन च तयोर्व्यवस्थानात्[1] । न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम् । तेषां वाक्यार्थत्वेनाभ्युपगमात् । वाक्यार्थस्य वाच्यस्य च यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानां केन वार्येते । यैर्वा साक्षात्काव्यार्थता रसादीनां नाभ्युपगम्यते तैस्तेषां तन्निमित्तता तावदवश्यमभ्युपगन्तव्या[2] । तथाप्यत्र श्लोके न विरोधः । यस्मादनूद्यमा[3]-

---

अनुवाद इत्यन्याङ्गतायामित्यर्थः । नह्यत्र विरुद्धानामर्थानामभिधानमिति राजनिकटव्यवस्थिता (?) । तत्रापि[1] विरुद्धन्यायेन विरुद्धानामन्यमुखप्रेक्षितापरतन्त्रीभूतानां[2] श्रौतेन क्रमेण स्वात्मपरामर्शेऽप्यविश्राम्यतां का कथा परस्पररूपचिन्तायां येन विरोधः स्यात् । केवलमपि विरुद्धत्वादरुणाधिकरणस्थित्या यो वाक्यो (?) य एषां पाश्चात्यः संबन्धः संभाव्यते स विघटताम्[3] । न तु प्रधानतया यद्वाच्यं तद्विधिः । अप्रधानत्वेन तु वाच्येऽनुवादः । न च रसस्य वाच्यत्वं त्वयैव सोढमित्याशङ्कमानः परिहरति—**न चेति** । प्रधानाप्रधानमात्रकृतौ विध्यनुवादौ तौ च व्यङ्ग्यतायामपि भवत एवेति भावः । मुख्यतया च रस एव काव्यवाक्यानामर्थ इत्युक्तम् । तेन मुख्यतया यत्र सोऽर्थस्तत्रानूद्यमानत्वं रसस्यापि युक्तम् । यदि वानूद्यमानविभावादिसमाक्षिप्तत्वाद्रसस्यानूद्यमानत्वात्तदाह—**वाक्यार्थस्येति** । यदि वा मा भूदनूद्यमानतया विरुद्धयो रसयोः समावेशः सहकारितया तु भविष्यतीति सर्वथाविरुद्धयोर्युक्तो[4]ऽङ्गाङ्गिभावो नात्र प्रयासः कश्चिदिति दर्शयति—**यैर्वेति** । **तन्निमित्ततेति** । काव्यार्थो विभावादिर्निमित्तं येषां रसादीनां ते तथा तेषां भावस्तत्ता । अनूद्यमाना ये हस्तक्षेपादयो रसाङ्गभूता विभावादयस्तन्निमित्तं यदुभयं करुणविप्रलम्भात्मकं रसवस्तु रससजातीयं तत्सहकारितस्य विधीयमानं यस्य शाम्भवशरवह्निजनितदुरितदाहलक्षणस्य तस्माद्भावविशेषप्रेयोलंकारविशेषयोर्भगवत्प्रभावातिशयलक्षणे प्रतीतिरिति संगतिः । विरुद्धं यद्वारितेजोगतं शीतोष्णं तत्सहकारितस्य तण्डुलादेः कारणं तस्मात्कार्यविशेषस्य कोमलभक्तकरण[5]लक्षणस्योत्पत्तिर्दृश्यते ।

---

१. 'स्थापनात्' क-ख. २. 'गमनीया' क-ख. ३. 'मानोऽङ्गं' ग.

---

१. 'उतापि' क-ख. २. 'कृतानां' ग. ३. 'विहन्यताम्' क-ख. ४. 'युक्तियुक्तः' क-ख. ५. 'कण' क-ख.

नाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद्भावविशेषप्रतीतिरुत्पद्यते ततश्च न कश्चिद्विरोधः। दृश्यते हि विरुद्धोभयसहकारिणः कारणात्कार्यविशेषोत्पत्तिः। विरुद्धफलोत्पादनहेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धत्वं न तु विरुद्धोभयसहकारित्वम्। एवं विरुद्धपदार्थविषयः कथमभिनयः प्रयोक्तव्य इति चेत्, अनूद्यमानैवंविधवाच्यविषये या वार्ता सात्रापि भविष्यति। एवं विध्यनुवादनयाश्रयेणात्र श्लोके परिहृतस्तावद्विरोधः। किं च नायकस्याभिनन्दनीयोदयस्य कस्यचित्प्रभावातिशयवर्णने तत्प्रतिपक्षाणां यः करुणो रसः स परीक्षकाणां

---

सर्वत्र हीत्थमेव कार्यकारणभावो बीजाङ्कुरादौ नान्यथा। ननु विरोधस्तर्हि सर्वत्राकिंचित्करः स्यादित्याशङ्क्याह—**विरुद्धफलेति**। तथा चाहुः—'नोपादानं विरुद्धस्य' इति। नन्वभिनेयार्थे काव्ये यदीदृशं वाक्यं भवेत्तदा यदि समस्ताभिनयः क्रियते तदा विरुद्धार्थविषयः कथं युगपदभिनयः कर्तुं शक्य इत्याशयेनाशङ्कमान आह—**एवमिति**। एतत्परिहरति—**अनूद्यमानेति**। अनूद्यमानमेवंविधं विरुद्धाकारं वाच्यं यत्र तादृशो यो विषयः 'एहि गच्छ पतोत्तिष्ठ' इत्यादिस्तत्र या वार्ता सात्रापीति। एतदुक्तं भवति—'क्षिप्तो हस्तावलग्न' इत्यादौ प्राधान्येन भीतविप्लुतादिदृष्ट्युपपादनक्रमेण प्राकरणिकस्तावदर्थः प्रदर्शयितव्यः। यद्यप्यत्र करुणोऽपि पराङ्गमेव तथापि विप्रलम्भापेक्षया तस्य तावन्निकटं प्राकरणिकत्वम्। महेश्वरप्रभावं प्रति सोपयोगित्वात्। विप्रलम्भस्य तु कामीवेत्युत्प्रेक्षोपमाबलेन यातस्य दूरत्वात्। एवं च साश्रुनेत्रोत्पलाभिरित्यन्तं प्राधान्येन करुणोपयोगाभिनयक्रमेण लेशतस्तु विप्रलम्भस्य करुणेन सादृश्यात्मतां कृत्वा कामीवेत्यत्र यद्यपि प्रणयकोपान्वितोऽभिनयः कृतस्तथापि ततः प्रतीयमानोऽप्यसौ विप्रलम्भः समनन्तराभिनीयमाने स दहतु दुरितमित्यादौ साटोपाभिनयसमर्पितो यो भगवत्प्रभावस्तत्राङ्गतायां पर्यवस्यतीति न कश्चिद्विरोधः। एतं विरोधपरिहारमुपसंहरति—**एवमिति**। विषयान्तरे तु प्रकारान्तरेण विरोधपरिहारमाह—**किं चेति**।

---

१. 'कश्चन' क-ख. २. 'फलोपादान' क-ख. ३. 'विरुद्धम्' ग. ४. 'एवंविधं' ग.

१. 'स्यात्' क-ख. २. 'उपमाबलेन' ग. ३. 'कोपोचितः' ग.

न वैक्लव्यमादधाति । प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यते । इत्यतस्तस्य कुण्ठशक्तिकत्वात्तद्विरोधविधायिनो न कश्चिद्दोषः । तस्माद्वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी यो रसः स रसविरोधीति वक्तुं न्याय्यः । नत्वङ्गभूतस्य कस्यचित् । अथवा वाक्यार्थीभूतस्यापि कस्यचित्करुणरसविषयस्य तादृशेन शृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते । यतः प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः संस्मर्यमाणैर्विलासैरधिकतरं शोका-

---

परीक्षकाणामिति सामाजिकानां विवेकशालिनां वा । न वैक्लव्यमिति । न तादृशे विषये चित्तद्रुतिरुत्पद्यते । करुणास्वादविश्रान्त्यभावात् । किं तु वीरस्य योऽसौ क्रोधो व्यभिचारितां प्रतिपद्यते तत्फलरूपोऽसौ करुणरसः स्वकारणाभिव्यञ्जनद्वारेण वीरास्वादातिशय एव पर्यवस्यति । यथोक्तम्—'रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणो रसः' इति । तदाह—प्रीत्यतिशयेति । अत्रोदाहरणम्—'कुरबक कुचाघातक्रीडासुखेन वियुज्यसे बकुलविटपिन्स्मर्तव्यं ते मुखासवसेवनम् । चरणघटनाशून्यो यास्यस्यशोक सशोकतामिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥' भावस्य वेति । तस्मिन्रसे स्थायिनः प्रधानभूतस्य व्यभिचारिणां वा । यथा विप्रलम्भशृङ्गार औत्सुक्यस्य । अधुना पूर्वस्मिन्नेव श्लोके क्षिप्त इत्यादौ प्रकारान्तरेण विरोधं परिहरति—अथवेति । अयं चात्र भावः-पूर्वं विप्रलम्भकरुणयोरन्यत्राङ्गताभावागमनान्नि विरोधत्वमुक्तम् । अधुना तु स विप्रलम्भः करुणस्यैवाङ्गतां प्रतिपन्नः कथं विरोधीति व्यवस्थाप्यते—तथा हि करुणो रसो नामेष्टजनविनिपातादेर्विभावादीत्युक्तम् । इष्टता च नाम रमणीयतामूला । ततश्च कामीवार्द्रापराध इत्युत्प्रेक्षयेदमुक्तम्—शांभवशरवह्निवेष्टितावलोकनेन प्राक्तनप्रणयकलहवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यते । तदाह—भङ्गिविशेषेति । अग्राम्यतया

---

१. 'अकुण्ठ' ग. २. 'दायिनः' क-ख. ३. 'विशेषस्य' क-ख. ४. 'परिपोषमावहति' ग. ५. 'रमणीयाः' क-ख. ६. 'शोकावेशं' ग.

---

१. 'मुखा' ग. २. 'इत्येतदुत्प्रेक्ष्येदं' ग. ३. 'विध्वस्त' ग.

वेगमुपजनयन्ति । यथा—'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥' इत्यादौ । तदत्र त्रिपुरयुवतीनां शांभवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येव निर्विरोधत्वम् । तस्माद्यथा यथा निरूप्यते तथा तथात्र दोषाभावः। इत्थं च ।

'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥'

इत्येवमादीनां सर्वेषामेव निर्विरोधत्वमवगन्तव्यम् ।

एवं तावद्रसादीनां विरोधिरसादिभिः समावेशासमावेशयोर्विषयविभागो दर्शितः । इदानीं तेषामेकप्रबन्धविनिवेशने न्याय्यो यः क्रमस्तं प्रतिपादयितुमुच्यते—

---

विभावानुभावादिरूपताप्रापणया । ग्राम्योक्तिरहितयेत्यर्थः । अत्रैव दृष्टान्तमाह—**यथा—अयमिति** । अत्र भूरिश्रवसः समरभुवि निपतितं बाहुं दृष्ट्वा तत्कान्तानामेतदनुशोचनम् । रशनां मेखलां संभोगावसरेषूर्ध्वं कर्षतीति रशनोत्कर्षी । अधुना विरोधोद्धरणप्रकारेण बहुतरं लक्ष्यमुपपादितं भवतीत्यभिप्रायेणाह—**इत्थं चेति**। होमाग्निधूमकृतं बाष्पाम्बु यदि वा बन्धुगृहत्यागोद्भवं भयम् । कुमारीजनोचितः साध्वसः। एवमियताङ्गभावं प्राप्तानामुक्तिरच्छलेति कारिकाभागोपयोगिनिरूपितमित्युपसंहरति—**एवमिति** । तावद्ग्रहणेन वक्तव्यान्तरमप्यस्तीति सूचयति। तदेवावतारयति—**इदानीमित्यादिना** । तेषां रसानां क्रम इति योजना।



१. 'क्रमं सूचयति' ग.

प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता ॥ २१ ॥

प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाङ्गाङ्गिभावेन वा बहवो रसा उपनिबध्यन्ते इत्यत्र प्रसिद्धौ सत्यामपि यः प्रबन्धानां छायातिशयमिच्छति तेन तेषां रसानामन्यतमः कश्चिद्विवक्षितो रसोऽङ्गित्वेन विनिवेशयितव्य इत्ययं युक्ततरो मार्गः ।

ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते—

रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥ २२ ॥

प्रबन्धेषु प्रथमतरं प्रस्तुतः सन्पुनःपुनरनुसंधीयमानत्वेन स्थायी यो रसस्तस्य सकलरसव्यापिनो रसान्तरैरन्तरालवर्तिभिः समावेशो यः स नाङ्गितामुपहन्ति ।

---

**प्रसिद्धेऽपीति** । भरतमुनिप्रभृतिभिर्निरूपितेऽपीत्यर्थः । तेषामिति प्रबन्धानाम् । महाकाव्यादिष्वित्यादिशब्दः प्रकारेणाभिनेयान्भेदानाह द्वितीयस्त्वभिनयान् । **विप्रकीर्णतयेति** । नायकप्रतिनायकप्रकरीनायिकादिनिष्ठतयेत्यर्थः । अङ्गाङ्गिभावेनेत्येकनायकनिष्ठत्वेन । **युक्ततर इति** । यद्यपि समानाकारादौ पर्यायबन्धादौ च नैकस्याङ्गित्वं तथा न युक्तता तथाप्येवंविधो यः प्रबन्धः तद्यथा नाटकं महाकाव्यं वा यदुत्कृष्टतरमिति तरशब्दस्यार्थः । स्वयं लब्धपरिपोषत्वे वा कथं रसत्वमिति रसत्वमङ्गत्वं चान्योन्यविरुद्धम् । तेषां चाङ्गत्वायोगे कथमेकस्याङ्गित्वमुक्तमिति भावः । **रसान्तरेति** । प्रस्तुतस्य समस्तेतिवृत्तव्यापिनस्तत एव

---

१. 'छायायोगं' ग. २. 'संधिव्यापिनः' क-ख.

---

१. 'तथापि च ननु युक्तिता' ग.

एतदेवोपपादयितुमुच्यते—

कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ २३ ॥

संध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्पते न च तत्कार्यान्तरैर्न संकीर्यते न च तैः संकीर्यमाणस्यापि तस्य

---

विततव्याप्तिकत्वेनाङ्गिभावोचितस्य रसस्य रसान्तरैरितिवृत्तवशायातत्वेन परिमितकथाशकलव्याप्तिभिर्यः समावेशः समुपबृंहणं तस्य स्थायित्वेनेतिवृत्तव्यापितया भासमानस्य नाङ्गितामुपहन्ति । अङ्गितां पोषयत्येवेत्यर्थः । एतदुक्तं भवति—अङ्गिभूतान्यपि रसान्तराणि स्वभावादिसामग्र्या स्वावस्थायां यद्यपि लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते तथापि स चमत्कारस्तावत्येव न परितुष्य विश्राम्यति किं तु चमत्कारान्तरमनुधावति । सर्वत्रैव ह्यङ्गाङ्गिभावेऽयमेवोदन्तः । यथाह तत्रभवान्—'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारो हि तथा भूयसि वर्तते ॥' इति । **उपपादयितुमिति** । दृष्टान्तस्य समुचितस्य निरूपणेनेति भावः । न्यायेन चैतदेवोपपद्यते । कार्यं हि तावदेकमेवाधिकारिकं व्यापकं प्रासङ्गिककार्यान्तरोपक्रियमाणमवश्यमङ्गीकार्यम् । तत्पृष्ठवर्तिनीनां नायकचित्तवृत्तीनां तद्बलादेवाङ्गाङ्गिभावः प्रवाहपतित इति किमत्रापूर्वमिति तात्पर्यम् । तथेति व्यापितया । यदि वा एवकारो भिन्नक्रमः । तथैव तेनैव प्रकारेण कार्याङ्गाङ्गिभावरूपेण रसानामपि बलादेवासावापततीत्यर्थः । तथा च वृत्तौ वक्ष्यति तथैवेति । **कार्यमिति** । 'स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति' इति लक्षितं बीजम् । बीजात्प्रभृति, 'प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्तिः प्रबन्धस्य स तु बिन्दुः' इति बिन्दुस्वरूपतयार्थप्रकृत्या निर्वहणपर्यन्तं व्याप्नोति तदाह—**अनुयायीति** । अनेन बीजं बिन्दुश्चेत्यर्थः । प्रकृते संगृहीते । **कार्यान्तरैरिति** । 'आगर्भादाविमर्शाद्वा पताका विनिवर्तते' इति । प्रासङ्गिकं यत्पताका-

---

१. 'तच्च कार्यान्तरैः' क-ख.



१. 'व्याप्त' ग. २. 'काव्यान्तरं' ग.

प्राधान्यमपचीयते तथैव रसस्याप्येकस्य संनिवेशे क्रियमाणे विरोधो न कश्चित्। प्रत्युत प्रत्युदितविवेकानामनुसंधानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते।

ननु येषां रसानां परस्परविरोधः यथा—वीरशृङ्गारयोः शृङ्गारहास्ययो रौद्रशृङ्गारयोर्वीराद्भुतयोर्वीररौद्रयो रौद्रकरुणयोः शृङ्गाराद्भुतयोर्वा तत्र भवत्वङ्गाङ्गिभावः। तेषां तु स कथं भवेद्येषां परस्परं बाध्यबाधकभावः। यथा—शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोः शान्तशृङ्गारयोर्वा इत्याशङ्क्येदमुच्यते—

---

लक्षणार्थप्रकृतिनिष्ठं कार्यं यानि च ततो न व्याप्तितया प्रकरीलक्षणानि कार्याणि तैरित्येवं पञ्चानामर्थप्रकृतीनां वाक्यैकवाक्यतया निवेश उक्त इति। **तथाविध इति**। यथा तापसवत्सराजे। एवमनेन श्लोकेना······ ता······यां दृष्टान्तनिरूपणमिति वृत्तबलापतितत्वं च रसाङ्गाङ्गिभावस्येति द्वयं निरूपितम्। वृत्तिग्रन्थोऽप्युभयाभिप्रायेणैव नेयः। शृङ्गारेण वीरस्याविरोधो युद्धनयपराक्रमादिना कन्यारत्नलाभादौ। हास्यस्य तु स्पष्टमेव तदङ्गत्वम्। हास्यस्यापुरुषार्थस्वभावत्वेऽपि समधिकतररञ्जनोत्पादनेन शृङ्गाराङ्गतयैव तथात्वम्। रौद्रस्यापि तेन कथंचिदविरोधः। यथोक्तम्—'शृङ्गारश्च तैः प्रसभं सेव्यते।' तैरिति रौद्रप्रभृतिभिः। रक्षोदानवोद्धतमनुष्यैरित्यर्थः। केवलं नायिकाविषयमौग्र्यं तत्र परिहर्तव्यम्। असंभाव्यपृथिवीसंमार्जनादिजनितविस्मयतया तु वीराद्भुतयोः समावेशः। यथाह मुनिः—'वीरस्य चैव यत्कर्म सोऽद्भुतः' इति। वीर······················द्भुते भीमसेनादौ समावेशः। क्रोधोत्साहयोरविरोधात्। रौद्रकरुणयोरपि मुनिनैवोक्तः—'रौद्रस्यैव च यत्कर्म स ज्ञेयः करुणो रसः' इति। **शृङ्गाराद्भुतयोरिति**। यथा रत्नावल्यामैन्द्रजालिकदर्शने। **शृङ्गारबीभत्सयोरिति**। ययोर्हि परस्परोन्मूलनात्मकतयै-

---

१. 'अपनीयते' ग. २. 'रसादीनां' क-ख. ३. 'भाव एव' क-ख.

---

१. 'श्लोकेनाङ्गाङ्गिभावस्येति' क-ख. २. 'हास्यस्य स्वयं पुरुषार्थस्वभावत्वे' ग. ३. 'तथात्वात्' क-ख. ४. 'यथाह' इत्यारभ्य 'समावेशः' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. ५. 'अपि' ग.

अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता॥ २४॥

अङ्गिनि रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः। तत्राविरोधिरसस्याङ्गिरसापेक्षयात्यन्तमाधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः। उत्कर्षसाम्येऽपि तयोर्विरोधासंभवात्। यथा—

'एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो।
णेहेण रणरसेण अ भडस्स दोलाइअं हिअअम्॥'

---

वोद्भवस्तत्र कोऽङ्गाङ्गिभावः। आलम्बननिमग्नरूपतया च·········क्तिरुत्तिष्ठति। तत··············तया जुगुप्सेति समानाश्रयत्वेन तयोरन्योन्यसंभवोन्मूलकत्वम्। भयोत्साहेऽप्येवमेव विरुद्धौ वाच्यौ। शान्तस्यापि तत्त्वज्ञानसमुत्थितसमस्तसंसारविषयनिर्वेदप्राणत्वेन सर्वतो निरीहस्वभावस्य विषयासक्तिजीविताभ्यां रतिक्रोधाभ्यां विरोध एव। अविरोधी विरोधी वेति वाग्रहणस्यायमभिप्रायः—अङ्गिरसापेक्षया यस्य रसान्तरस्योत्कर्षो निबध्यते तदाऽविरुद्धोऽपि रसो निबद्धश्चोद्यावहः। अथ तु युक्ताङ्गिनि रसेऽङ्गभावतयान्योपपत्तिर्घटते तद्विरुद्धोऽपि रसो वक्ष्यमाणेन विषयभेदादियोजनेनोपनिबध्यमानो न दोषावह इति विरोधाविरोधावकिंचित्करौ। ·········विनिवेशनप्रकार एवेत्यवधातव्यमिति। अङ्गिनीति सप्तम्यनादरे। अङ्गिनं रसविशेषमनादृत्य न्यक्कृत्याङ्गभूतो न पोषयितव्य इत्यर्थः। **अविरोधितेति**। निर्दोषतेत्यर्थः। परिपोषपरिहारे त्रीन्प्रकारानाह—**तत्रेति**। ननु न्यूनत्वं कर्तव्यमिति वाच्येऽधिकस्य का संभावना येनोक्तमाधिक्यं न कर्तव्यमित्याशङ्क्याह—**उत्कर्षसाम्य इति**। 'एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः। स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम्॥' [इति च्छाया।] रोदिति प्रियेत्यतो रत्युत्कर्षः। समरतूर्येति भटस्येति चोत्साहोत्कर्षः। दोलायितमिति तयोरन्यूनाधिकतया साम्यमुक्तम्। एतच्च मुक्तकविषयमेव भवति न तु प्रबन्धविषयमिति केचिदाहुस्तच्चासत्। आधिकारिकेऽपीति-



१. 'तत्राह–विरोधिनो रसस्य' ग.

यथा वा—

[1]'कण्ठाच्छित्त्वाक्षमालावलयमिव करे हारमावर्तयन्ती
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन ।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा
देवी संध्याभ्यसूयाहसितपशुपतिस्तत्र दृष्टा तु वोऽव्यात् ॥'

इत्यत्र ।

अङ्गिरसविरुद्धानां व्यभिचारिणां [2]प्राचुर्येण निवेशनम् । निवेशने वा क्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिरिति द्वितीयः । अङ्गत्वेन पुनःपुनः

---

वृत्ते त्रिवर्गफले समप्राधान्यस्य संभवात् । तथाहि रत्नावल्यां सचिवायत्तसिद्धित्वाभिप्रायेण पृथिवीराज्यलाभ आधिकारिकं फलं कन्यारत्नलाभः प्रासङ्गिकं फलं नायिकाभिप्रायेण तु विपर्यय इति स्थिते मन्त्रिबुद्धौ नायकबुद्धौ च स्वाम्यमात्यबुद्ध्येकत्वात्फलमिति नीत्या एकीक्रियमाणया समप्राधान्यमेव पर्यवस्यति । यथोक्तम्—'कवेः प्रयत्नान्नेतृणां युक्तानाम्' इत्यलमवान्तरेण बहुना । एवं प्रथमं प्रकारं निरूप्य [1]द्वितीयमाह—**अङ्गीति** । **निवेशनमिति** । अङ्गभूते रसे इति शेषः । नन्वेवं नासौ परितुष्टो भवेदित्याशङ्क्य मतान्तरमाह—**निवेशने वेति** । अत एव वाग्रहणमुत्तरपक्षदार्ढ्यं सूचयति न विकल्पम् । तथा चैक एवायं प्रकारः । अन्यथा तु द्वौ स्याताम् । अङ्गिनो रसस्य यो व्यभिचारी तस्यानुवृत्तिरनुसंधानम् । यथा—'कोपात्कोमललोल–' इति श्लोकेऽङ्गिभूतायां रतावङ्गित्वेन यः क्रोध उपनिबद्धस्तत्र बद्ध्वा दृढं इत्यमर्षस्य निवेशितस्य क्षिप्रमेव रुदत्येति हसन्निति च रत्युचितेर्ष्यौत्सुक्यहर्षानुसंधानम् । तृतीयं प्रकारमाह—**अङ्गत्वेनेति** । अत्र

---

१. 'कण्ठं छित्त्वाक्षमालेत्यादिश्लोके' क-ख. २. 'प्राचुर्येणानिवेशनम्' क-ख.

---

१. 'द्वितीयं प्रकारं' ग.

प्रत्यवेक्षा परिपोषं नीयमानस्याप्यङ्गभूतस्य रसस्येति तृतीयः। अनया दिशान्येऽपि प्रकारा उत्प्रेक्षणीयाः। विरोधिनस्तु रसस्याङ्गिरसापेक्षया कस्यचिन्न्यूनता न संपादनीया। यथा शान्तेऽङ्गिनि शृङ्गारस्य शृङ्गारे वा शान्तस्य। परिपोषरहितस्य कथं रसत्वमिति चेत्, उक्तमत्राङ्गिरसापेक्षयेति। अङ्गिनो हि रसस्य यावान्परिपोषस्तावांस्तस्य न कर्तव्यः। स्वगतस्तु संभविपरिपोषः केन वार्यते। एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य। बहुरसेषु प्रबन्धेषु रसानामङ्गाङ्गिभावमनभ्युपगच्छताप्यशक्यप्रतिक्षेपमित्यनेन प्रकारेणाविरोधिनां विरोधिनां च रसानामङ्गाङ्गि-

---

च तापसवत्सराजे वत्सराजस्य पद्मावतीविषयः संभोगशृङ्गार उदाहरणीकर्तव्यः। **अन्येऽपीति**। विभावानुभावानां चाधिक उत्कर्षो न कर्तव्योऽङ्गिरसविरोधिनां निमेषणमेव वा न कार्यम्। कृतमपि चाङ्गिरसविभावानुभावैरुपबृंहणीयम्। परिपोषितापि चाविरुद्धरसविभावानुभावा अङ्गित्वेन प्रतिजागरयितव्या इत्यादि स्वयं शक्यमुत्प्रेक्षितुम्। एवं विरोध्यविरोधिसाधारणं प्रकारमभिधाय विरोधिविषयसाधारणदोषपरिहारप्रकारगतत्वेनैव विशेषान्तरमप्याह—**विरोधिन इति**। संभवतीति प्रधानविरोधित्वेनेति शेषः। **एतच्चेति**। उपकार्योपकारकभावो रसानां नास्ति। स्वचमत्कारविश्रान्तत्वात्। अन्यथा रसत्वायोगात्। तदभावे च कथमङ्गाङ्गितेत्यपि येषां मतं तैरपि कस्यचिद्रसस्य प्रकृष्टत्वं भूयः प्रबन्धस्य व्यापकत्वमन्येषां चाल्पप्रबन्धगामित्वमभ्युपगन्तव्यमिति वृत्तसंघटनाया एवान्यथानुपपत्तेः। भूयः प्रबन्धव्यापकस्य च रसस्य रसान्तरैर्यदि न काचित्संगतिस्तदितिवृत्तस्यापि न स्यात्संगतिश्चेदयमुपकार्योपकारकभावेन चमत्कारविश्रान्तेर्विरोधः कश्चिदिति समनन्तरमेवोक्तम्। तदाह—**अनभ्युपगच्छतेति**। अकाम इवाभ्युपगमयितव्य इति भावः। अन्यस्तु व्याचष्टे—एतच्चापेक्षिकमित्यादिग्रन्थो द्वितीयमतमभिप्रेत्य यत्र रसानामुपकार्योपकारकता नास्ति तत्रापि हि भूयो वृत्तव्याप्तत्वमेवाङ्गित्वमिति। एतच्चासत्।

---

१. 'अपि त्वङ्ग' ग. २. 'रसस्यैवेति' क-ख. ३. 'एतच्चापेक्षितं' ग.



१. 'विरोधात्' क-ख. २. 'भावैकरूपं बृंहणीयम्' ग.

भावेन समावेशो प्रबन्धेषु स्यादविरोधः । एतच्च सर्वं येषां रसो रसान्तरस्य व्यभिचारीभवति' इति निदर्शनं तन्मतेनोच्यते । मतान्तरेऽपि रसानां स्थायिनो भावा उपचाराद्रसशब्देनोक्तास्तेषामङ्गित्वे निर्विरोधित्वमेव ।

एवमविरोधिनां विरोधिनां च प्रबन्धस्थेनाङ्गिना रसेन समावेशो

---

एवं हि एतच्च सर्वमिति सर्वशब्देन य उपसंहार एकपक्षविषयः, मतान्तरेऽपीत्यादिना च यो द्वितीयपक्षोपक्रमः सोऽतीव दुःश्लिष्ट इत्यलं पूर्ववंश्यैः सह बहुना संलापेन । उपसंहरति—येषामिति । होवाध्यायसमाप्तावस्ति श्लोकः— 'बहूनां समवेतानां रूपं यस्य भवेद्बहु । स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥' इति । तत्रोक्तक्रमेणाधिकारिकेतिवृत्तव्यापिका चित्तवृत्तिरवश्यमेव स्थायित्वेन भाति प्रासङ्गिकवृत्तान्तगामिनी तु व्यभिचारि-येति रैसस्यमानतायामपि स्थायिव्यभिचारिभावस्य न कश्चि·······इति केचिद्व्याचचक्षिरे । तथा च भागुरिरपि किं रसानामपि स्थायिसंचारितास्तीत्याक्षिप्याभ्युपगमेनैवोत्तरमवोचद्बाढमस्तीति । अन्ये तु स्थायितया पतितस्यापि स्थायित्वमेव । यथा विक्रमोर्वश्यामुन्मादस्य चतुर्थेऽङ्के । इतीयन्तमर्थमवबोधयितुमयं श्लोकः । बहूनां चित्तवृत्तिरूपाणां भावानां मध्ये यस्य बहुलं रूपं यथोपलभ्यते स स्थायी भावः । स च रसो रसीकरणयोग्यः शेषास्तु संचारिण इति व्याचक्षते । न तु रसानां स्थायिसंचारिभावेनाङ्गाङ्गिता युक्ता । अत एवान्यो रसः स्थायीति षष्ठ्या सप्तम्या द्वितीयया वाश्रितादिषु गम्यादीनामिति समासं पठन्ति । तदाह—**मतान्तरेऽपीति । रसशब्देनेति ।** 'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः' इत्यादिप्राक्तनकारिकानिविष्टेनेत्यर्थः । अथ साधारणप्रकारमुपसंहरन्·······रणमासूत्रयति—**एवमिति** । तमित्यविरोधोपा·

---

१. 'अविरोधिता' क-ख.　२. 'तु' ग.

---

१. 'पूर्वोक्तेन' क-ख. २. 'भाव' क-ख. ३. 'रसस्य समानतायामपि स्थायिसंचारितास्तीत्याक्षिप्य' क-ख. ४. 'व्यभिचारिणः' ग. ५. 'रसान्तरानिविष्टेनेत्यर्थः' क-ख. ६. 'उपसंहरन्नयमाह' क-ख.

साधारणमविरोधोपायं प्रतिपाद्येदानीं विरोधिविषये तं प्रतिपादयितुमिदं[2]मुच्यते ।

विरोधैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ २५ ॥

ऐकाधिकरण्यविरोधी नैरन्तर्यविरोधी चेति द्विविधो[3] विरोधी । तत्र प्रबन्धस्थेन स्थायिनाङ्गिना रसेनौचित्यापेक्षया विरुद्धैकाश्रयो यो विरोधी यथा वीरेण भयानकः स विभिन्नाश्रयः कार्यः । तस्य वीरस्य आश्रयः कथानायकस्तद्विपक्षविषये संनिवेशयितव्यः । तथा सति च तस्य विरोधिनोऽपि यः पोषः स निर्दोषः । विपक्षविषये हि भयातिशयवर्णने नायकस्य नयपराक्रमादिसंपत्सुतरामुद्द्योतिता भवति । एतच्च मदीयेऽर्जुनचरितेऽर्जुनस्य पातालावतरणप्रसङ्गे वैशद्येन प्रदर्शितम् ।

एवमैकाधिकरण्यविरोधिनः प्रबन्धस्थेन स्थायिना रसेनाङ्गभावगमने निर्विरोधित्वं यथा तथा तद्दर्शितम् । द्वितीयस्य तु तत्प्रतिपादयितुमुच्यते—

---

यम् । विरुद्धेति विशेषणं हेतुगर्भम् । यस्तु स्थायी स्थाय्यन्तरेण संभाव्यमानैकाश्रयत्वाद्विरोधी भवेद्यथोत्साहेन भयं स विभिन्नाश्रयत्वेन नायकतद्विपक्षादिगामित्वेन कार्यः । **तस्येति** । तस्य विरोधिनोऽपि तथाकृतस्य तथानिबद्धस्य परिपुष्टतायाः प्रत्युत निर्दोषता नायकोत्कर्षाधानात् । अपरिपोषस्तु[1] दोष एवेति यावत् । अपिशब्दो भिन्नक्रमः । एवमेव वृत्तावपि व्याख्यानात्[2] । ऐकाधिकरण्यमेकाश्रयेण संबन्धमात्रम् । तेन विरोधी यथा—भयेनोत्साह ऐकाश्रयत्वे[3]ऽपि संभवति । कश्चिन्निरन्तरत्वेन निर्व्यवधानत्वेन विरोधी यथा रत्याविनिर्वेदः । **प्रदर्शितमिति** । 'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो महानुपप्लवोऽभवत्पुरे पुरंदरद्विषाम्' इत्यादिना । **द्वितीयस्येति** । नैरन्तर्यविरोधिनः । तदिति निर्विरोधित्वम् ।

---

१. 'विषयमेव' क-ख. २. 'इदं' ग-पुस्तके नास्ति. ३. 'द्विधा' ग. ४. 'वा' ग. ५. 'कथने' ग. ६. 'प्रबन्धे' क-ख.



---

१. 'अपरिपोषणं' क-ख. २. 'व्याख्यातम्' क-ख. ३. 'एकाश्रयत्वम्' ग.

**एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान् ।**
**रसान्तरव्यवधिना रसो व्यङ्ग्यः (न्यस्यः) सुमेधसा ॥२६॥**

यः पुनरेकाधिकरणत्वे निर्विरोधो नैरन्तर्ये तु विरोधी स रसान्तरव्यवधानेन प्रबन्धे निवेशयितव्यः । यथा शान्तशृङ्गारौ नागानन्दने निवेशितौ ।

शान्तश्च तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव । तथा चोक्तम्—

---

एकाश्रयत्वेन निमित्तेन यो निर्दोषेण न विरोधी किं तु निरन्तरत्वेन निमित्तेन विरोधे सति स तथाविधविरुद्धसत्तया विरुद्धेन रसान्तरेण मध्ये निवेशितेन युक्तः कार्य इति कारिकार्थः । प्रबन्ध इति बाहुल्यापेक्षम । मुक्तकेऽपि कदाचिदेवं भवेदपि । यद्वक्ष्यति—'एकवाक्यस्थयोरपि' इति । **यथेति** । तत्र हि—'रागस्यास्पदमित्यवैमि नहि मे ध्वंसीति न प्रत्ययः' इत्यादिनोपक्षेपात्प्रभृति परार्थशरीरवितरणात्मकनिर्वाहणपर्यन्तः शान्तो रसस्तस्य विरुद्धो मलयवतीविषयः शृङ्गारस्तदुभयाविरुद्धमद्भुतमन्तरीकृत्य क्रमप्रसरसंभावनाभिप्रायेण यः कविना निबद्धः 'अहो गीतमहो वादित्रम्' इति । एतदर्थमेव 'व्यक्तिर्व्यञ्जनधातुना–' इत्यादि नीरसप्रायमप्यत्र निबद्धमद्भुतरसपरिपोषकतयात्यन्तरसरसतावहमिति 'निर्दोषदर्शनाः कन्यकाः' इति च क्रमप्रसरो निबद्धः । यदाहुः—'चित्तवृत्तप्रसरप्रसंख्यानाधानः संख्याः पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेनेति । अनन्तरं च निमित्तनैमित्तिकप्रसङ्गागतो यः शेखरकवृत्तान्तोदितहास्यरसोपकृतः शृङ्गारस्तस्य विरुद्धो यो वैराग्यशमपोषको नागीयकलेवरास्थिजालावलोकनादिवृत्तान्तः स मित्रावसोः प्रविष्टस्य मलयवतीनिर्गमनकारिणः 'संसर्पद्भिः समन्तात्–' इत्यादि काव्य उपनिबद्धः क्रोधव्यभिचार्युपकृतवीररसान्तरितो निवेशितः । ननु नास्त्येव शान्तो रसः । तस्य तु स्थाय्येव नोपदिष्टो मुनिनेत्याशङ्क्याह—**शान्तश्चेति** । तृष्णानां विषयाणां यः क्षयः सर्वतो निवृत्तिरूपो निरोधस्तदेव सुखं तस्य यः स्थायीभूतस्य परिपोषो रस्यमानताकृतस्तदेव लक्षणं यस्य स शान्तो रसः । **प्रतीयत एवेति** । स्वानुभवेनापि

---

१. 'विरोधिनाम्' क-ख. २. 'नागानन्दे' ग. ३. 'तथेत्यारभ्य कलामखन्तं' क-ख-पुस्तकयोर्नास्ति.

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥'

यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावतासावलोकसामान्यमहानुभावचित्तवृत्तिविशेषवत्प्रतिक्षेप्तुं शक्यः। वीरे च तस्या-

निवृत्तभोजनाद्यशेषविषयेच्छाप्रसरत्वकाले संभाव्यत एव। अन्ये तु सर्वचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते। तृष्णासद्भावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात्। पर्युदासे त्वस्मत्पक्ष एवायम्। अन्ये तु 'स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः। पुनर्निमित्तापाये तु शान्त एव प्रलीयते॥' इति भरतवाक्यं दृष्टवन्तः सर्वरससामान्यस्वभावं शान्तमाचक्षाणा अनुपजातविशेषान्तरं चित्तवृत्तिरूपं शान्तस्य स्थायिभावं मन्यन्ते। एतच्च नातीवास्मत्पक्षाद्दूरम्। प्रागभावप्रध्वंसाभावकृतस्तु विशेषः। युक्तश्च प्रध्वंस एव तृष्णानाम्। यथोक्तम्—'वीतरागजन्मादर्शनात्' इति। प्रतीयत एवेति मुनिनाप्यङ्गीक्रियत एव 'क्वचिच्छमः' इत्यादि वदता। न च तदीयापर्यन्तावस्था वर्णनीया येन सर्वचेष्टोपरमादनुभवाभावेनाप्रतीयमानता स्यात्। 'शृङ्गारादेरपि फलभूमाववर्णनीयतैव पूर्वभूमौ तु प्रशान्तवाहिता', 'संस्कृतान्तरच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः' इति सूत्रद्वयनीत्या चित्राकारा यमनियमादि चेष्टा वा राज्यधरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दृष्टैवेत्यनुभवसद्भावाद्यमनियमादिमध्यासंभाव्यमानभूयोव्यभिचारिसद्भावाच्च प्रतीयत एव। ननु न प्रतीयते। नास्य विभावादयः सन्तीति चेत्, न। प्रतीयत एव तावदसौ। तस्य च भवितव्यमेव प्राक्तनकुशलपरिपाकपरमेश्वरानुग्रहादध्यात्मरहस्यशास्त्रवीतरागपरिशीलनादिभिर्विभावैरितीयतैव व्यभिचारिसद्भावः स्थायी च दर्शितः। ननु तत्र हृदयसंवादाभावाद्रस्यमानतैव नोपपन्ना। क एवमाह नास्तीति। यतः प्रतीयत एवेत्युक्तम्। ननु प्रतीयते सर्वस्य श्लाघास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसत्वाच्च्यवतामिति तदाह—**यदि नामेति**। ननु धर्मप्रधानोऽसौ वीर एवेति संभावयमान आह—**वीरे चेति**।

१. 'सर्वलोक' ग. २. 'न च वीरेतरस्यान्तर्भावः' ग.

१. 'तच्चा' क-ख. २. 'पर्युदासेति' [illegible] क-ख. ३. 'मध्यसद्भावमान' क-ख. ४. 'घनस' क-ख.

न्तर्भावः कर्तुं युक्तः । तस्याभिमानमयत्वेन व्यवस्थापनात् । अस्य चाहंकारप्रशमैकरूपतया स्थितेः । तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं परिकल्प्यते तद्वीररौद्रयोरपि तथा प्रसङ्गः । दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहंकाररहितत्वेन शान्तरसप्रभेदत्वम्, इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः । तदेवमस्ति शान्तो रसः । तस्य चाविरुद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम् । यथा प्रदर्शिते विषये । एतदेव स्थिरीकर्तुमिदमुच्यते—

**रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।**
**निवर्तते हि रसयोः समावेशे विरोधिता ॥ २७ ॥**

रसान्तरव्यवहितयोरेकप्रबन्धस्थयोर्विरुद्धयोर्विरोधिता निवर्तत इत्यत्र

---

तस्येति वीरस्य । **अभिमानमयत्वेनेति** । उत्साहो ह्यहमेवंविध इत्येवं प्राण इत्यर्थः । अस्य चेति शान्तस्य । **तयोश्चेति** । उत्साहमयत्वनिरीहत्वेनात्यन्तविरुद्धयोरपीति चशब्दार्थः । वीररौद्रयोस्त्वत्यन्तविरोधोऽपि नास्ति । समानरूपं च धर्मार्थोपयोगित्वम् । नन्वेवं दयावीरो धर्मवीरो दानवीरो वा नासौ कश्चित् । शान्तस्यैवेदं नामान्तरकरणम् । तथा च मुनिः—'दानवीरं धर्मवीरं युद्धवीरं तथैव च । दयावीरमपि प्राह ब्रह्मा त्रिविधसंमतम् ॥' इत्यागमपुरःसरं त्रैविध्यमेवाभ्यधात् । तदाह—**दयावीरादीनामिति** । आदिग्रहणेन विषयजुगुप्सारूपत्वाद्बीभत्सेऽन्तर्भावः शक्यते । सा त्वस्य व्यभिचारिणी भवति न तु स्थायितामेति । पर्यन्तनिर्वाहे तस्या मूलत एव विच्छेदात् । आधिकारिकत्वेन तु शान्तो रसो निबद्धव्य इति चन्द्रिकाकारः । तच्चेहास्माभिर्न पर्यालोचितम् । प्रसङ्गान्तरात् । मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठितत्वात्सर्वरसेभ्यः प्रधानतमः । स[२] चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके, अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयः[३] पूर्वपक्षसिद्धान्त इत्यलं बहुना । **स्थिरीकर्तुमिति** । शिष्यबुद्धावित्यर्थः । अपिशब्देन प्रब[४]-

---

१. 'यदा' ग. २. 'स चायं शान्तो रसः' ग. ३. 'निर्वहणः' ग. ४. 'प्रबन्धेषु यत्नसिद्धः' क-ख.

न काचिद्भ्रान्तिः । यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते । यथा—

'भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥'

इत्यादौ । अत्र हि शृङ्गारबीभत्सयोस्तदङ्गयोर्वा वीररसव्यवधानेन समावेशो न विरोधी ।

विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत् ।
विशेषतस्तु शृङ्गारे सुकुमारतरो ह्यसौ ॥ २८ ॥

यथोक्तलक्षणानुसारेण विरोधाविरोधौ सर्वेषु रसेषु प्रबन्धेऽन्यत्र च निरूपयेत्सहृदयः । विशेषतस्तु शृङ्गारे । स हि रतिपरिपोषात्मकत्वाद्रतेश्च स्वल्पेनापि निमित्तेन भङ्गसंभवात्सुकुमारतरः सर्वेभ्यो रसेभ्यो मनागपि विरोधिसमावेशं न सहते ।

---

न्यविषयतया सिद्धोऽयमर्थ इति दर्शयति—**भूरेण्विति** । विशेषणैरतीव [1]दूरापेतत्वसंभावनास्पदत्वमुक्तम् । स्वदेहानां ······न । देहत्वाभिमानादेव तादात्म्यसंभावनानिष्पत्तेरेकाश्रयत्वमस्ति । अन्यथा विभिन्नविषयत्वात्को विरोधः । ननु वीर एवात्र रसो न शृङ्गारो न बीभत्सः । किं तु रतिजुगुप्से हि वीरं प्रति व्यभिचारीभूते । भवत्वेवम्, तथापि प्रकृतोदाहरणता तावदुपपन्ना । तदाह—**तदङ्गयोर्वेति** । तयोरङ्गे तत्स्थायिभावावित्यर्थः । वीरो रस इति । 'वीराः स्वदेहान्' इत्यादिना तदीयो-

---

१. 'तम.' क-ख.



---

१. 'दूरापेतत्वसंभावनानिवृत्तेरेकाश्रयत्वमस्ति' क-ख.

अवधानातिशयवान्रसे तत्रैव सत्कविः ।
भवेत्तस्मिन्प्रमादो हि झगित्येवोपलक्ष्यते ॥ २९ ॥

तत्रैव च रसे सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि कविरवधानवान्प्रयत्नवान्स्यात् । तत्र हि प्रमाद्यतस्तस्य सहृदयमध्ये क्षिप्रमेवावज्ञानविषयता भवति । शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात्सर्वरसेभ्यः कमनीयतया प्रधानभूतः । एवं च सति

विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ ३० ॥

शृङ्गारविरुद्धरसस्पर्शः शृङ्गाराङ्गाणां यः स न केवलमविरोधलक्षणयोगे सति न दुष्यति यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा

---

त्साहाय्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति । मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकतेति भावः । अन्यत्र चेति मुक्तकादौ । स हि शृङ्गारः सुकुमारतम इति संबन्धः । सुकुमारस्तावद्रससजातीयः ततोऽपि करुणस्ततोऽपि शृङ्गार इति । **एवं चेति** । यतोऽसौ सर्वसंवादीत्यर्थः । तदित्थं शृङ्गारस्य विरुद्धा ये शान्तादयस्तेष्वपि तदङ्गानां शृङ्गाराङ्गाणां संबन्धी स्पर्शो न दुष्टः । तया भङ्ग्या रसान्तरगता अपि विभावानुभावाद्या वर्णनीया ययोः शृङ्गारोऽङ्गभावमुपागमत् । यथा मम स्तोत्रे—'त्वां चन्द्रचूडं सहसा स्पृशन्ती प्राणेश्वरं गाढवियोगतप्ता । सा चन्द्रकान्ताकृतिपुत्रिकेव संविद्विलीयापि विलीयते मे ॥' इत्यत्र शान्तविभावानुभावानामपि शृङ्गारभङ्ग्या निरूपणं विनेयानुन्मुखीकर्तुं या काव्यशोभा तदर्थं नैव दुष्यतीति संबन्धः । वाग्रहणेन पक्षान्तरमुच्यते । तदेव व्याचष्टे—**न केवलमिति** । वाशब्दस्यैतद्व्याख्यानम् । अविरोधलक्षणं परिपोषपरिहारादि पूर्वोक्तम् । तदर्थमपि वा विरुद्धसमावेशः । न केवलं पूर्वोक्तैः प्रकारैः

---

१. 'झटिति' ग.　२. 'प्रयतः' क-ख.　३. 'भविष्यति' क-ख.
४. 'सर्वसंसारिणां' क-ख.

---

१. 'वीररसस्य' क-ख.　२. 'देवस्तोत्रे' ग.　३. 'तदेतत्' क-ख.

क्रियमाणो न दुष्यति । शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशं गृह्णन्ति । सदाचारोपदेशरूपा हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारिता । किं च शृङ्गारस्य सकलजनमनोहराभिरामत्वात्तदङ्गसमावेशः काव्यशोभातिशयं पुष्यतीत्यनेनापि प्रकारेण विरोधिरसे शृङ्गाराङ्गसमावेशो न विरोधी । ततश्च ।

'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥'

इत्यादिषु नास्ति रसविरोधदोषः ।

---

काव्यशोभा विनेयोन्मुखीकरणमन्तरेणास्ते । व्यवधानाव्यवधाने अपि केचिल्लभ्येते यथान्यैर्व्याख्यातै । **सुखमिति** । रञ्जनापुरःसरमित्यर्थः । न तु काव्यं क्रीडारूपं क च वेदादिगोचरा उपदेशकथा इत्याशङ्क्याह—**सदाचारेति** । **मुनिभिरिति** । भरतादिभिरित्यर्थः । एतच्च प्रभुमित्रसंमितेभ्यः शास्त्रेतिहासेभ्यः प्रीतिपूर्वकं जायासंमितत्वे नाट्यकाव्यगतं व्युत्पत्तिकारित्वं पूर्वमेव निरूपितमस्माभिरिति न पुनरुक्तभयादिह लिखितम् । ननु शृङ्गाराङ्गताभङ्ग्या यद्विभावादिनिरूपणमेतावतैव किं विनेयोन्मुखीकारः । नैतदस्ति प्रकारान्तरमिति तदाह—**किं चेति** । **शोभातिशयमिति** । अलंकारविशेषमुपमाप्रभृतिं पुष्यति सुन्दरीकरोतीत्यर्थः । यथोक्तम्—'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलंकारा' इति । **मत्ताङ्गनेति** । अत्र हि शान्तविभावे सर्वस्यानित्यत्वे वक्ष्यमाणे न कस्यचिद्विभावस्य शृङ्गारभङ्ग्या निबन्धः कृतः । किं तु सत्यमिति परहृदयानुप्रवेशेनोक्तम् । न खल्वलीकवैराग्यकौतुकरुचिं प्रकटयामः अपि तु यस्य कृते सर्वमभ्यर्थ्यते तदेवेदं चल-

---

१. 'मनोभिरामत्वात्' ग. २. 'काव्ये' ग. ३. 'शृङ्गारविरोधिनि रसे' क-ख.

---

१. 'केनचित्' क-ख. २. 'व्याख्यायते' क-ख. ३. 'उक्तिः' क-ख.

**विज्ञायेत्थं रसादीनामविरोधविरोधयोः ।**
**विषयं सुकविः काव्यं कुर्वन्मुह्यति न क्वचित् ॥ ३१ ॥**

इत्थमनेनानन्तरोक्तेन प्रकारेण रसादीनां रसभावतदाभासानां परस्परं विरोधस्याविरोधस्य च विषयं विज्ञाय सुकविः काव्यविषये प्रतिभातिशययुक्तः काव्यं कुर्वन्न क्वचिन्मुह्यति ।

एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य व्यञ्जकवाच्यवाचकनिरूपणस्यापि तद्विषयस्य तत्प्रतिपाद्यते—

**वाच्यानां वाचकानां च यदौचित्येन योजनम् ।**
**रसादिविषयेणैतत्कर्म मुख्यं महाकवेः ॥ ३२ ॥**

वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादिविषयेणौचित्येन यद्योजनमेतन्महाकवेर्मुख्यं कर्म । अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् ।

---

मिति । तत्र मत्ताङ्गनापाङ्गभङ्गस्य लोलशृङ्गारं प्रति संभाव्यमानविभावानुभावत्वेनाङ्गस्य लोलतायामुपमानतोक्तेति प्रियतमाकटाक्षा हि सर्वस्याभिलषणीया इति तत्प्रतीत्या प्रवृत्तिमान् गुडजिह्विकया प्रसक्तानुप्रसक्तवस्तुतत्त्वसंवेदनेन वैराग्ये पर्यवस्यति विनेयः । तदेतदुपसंहरन्नस्योक्तस्य प्रकरणस्य फलमाह—**विज्ञायेत्थमिति ।** स्पष्टम् । ·······रसादिविषयव्यञ्जकानि यानि वाच्यानि विभावादीनि वाचकानि च सुप्तिङादीनि तेषां यन्निरूपणं तस्येति । तद्विषयस्येति रसादिविषयस्य । तदिति उपयोगित्वं मुख्यमिति । 'आलोकार्थी–' इत्यत्र यदुक्तं तदेवोपसंहृतम् । महाकवेरिति सिद्धवत्फलनिरूपणम् । एवं हि महाकवित्वं नान्यथेत्यर्थः । **इतिवृत्तविशेषाणामिति ।** इतिवृत्तं हि प्रबन्धवाच्यं तस्य विशेषाः प्रागुक्ताः 'विभावभावानुभावसंचार्यौचित्यचारुणः । विधिः कथाशरीरस्य–' इत्यादिना । **काव्यार्थीकृत्येति ।** अन्यथा लौकिकशास्त्रीयवाक्यार्थेभ्यः कः काव्यस्य विशेषः । एतच्च

---

१. 'परिज्ञाय' ग. २. 'वाचकानां च रसादिविशेषेण' ग.

---

१. 'सेव्यमानं' क-ख. २. 'प्रकरस्य' क-ख. ३. 'तदेवैतदुप–' क-ख.

एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति प्रतिपादयितुमाह—

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान्यस्ता एता वृत्तयो द्विविधाः स्मृताः ॥३३॥

व्यवहारो हि वृत्तिरित्युच्यते । तत्र रसानुगुण औचित्यवान्वाच्याश्रयो यो व्यवहारस्ता एताः कैशिक्याद्या वृत्तयः । वाचकाश्रयाश्चोपनागरिकाद्याः । वृत्तयो हि रसादितात्पर्येण संनिवेशिताः कामपि नाट्यस्य काव्यस्य च च्छायामावहन्ति । रसादयो हि द्वयोरपि तयोर्जीवभूताः । इतिवृत्तादि तु शरीरभूतमेव । अत्र केचिदाहुः—'गुणगुणिव्यवहारो रसादीनामितिवृत्तादिभिः सह न तु जीवशरीरव्यवहारः । रसादिमयं हि वाच्यं प्रतिभासते न तु रसादिभिः पृथग्भूतम्' इति । अत्रोच्यते—'यदि रसादिमयमेव वाच्यं यथा गौरत्वमयं शरीरम् । एवं

---

निर्णीतमाद्योद्द्योते 'काव्यस्यात्मा स एवार्थः–' इत्यत्रान्तरे । **एतच्चेति** । यदस्माभिरुक्तमित्यर्थः । भरतादावित्यादिग्रहणादलंकारशास्त्रेषु परुषाद्या वृत्तय इत्युक्तं भवति । **द्वयोरपि तयोरिति** । वृत्तिलक्षणयोर्व्यवहारयोरित्यर्थः । **जीवभूता इति** । 'वृत्तयः काव्यमातृकाः' इति ब्रुवाणेन मुनिना रसोचितेतिवृत्तसमाश्रयेणोपदेशेन रसस्यैव जीवितत्वमुक्तम् । भामहादिभिश्च—'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते । प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥' इत्यादिना रसोपयोगिजीवितः । शब्दवृत्तिलक्षणो व्यवहार उक्तः । **शरीरभूतमिति** । 'इतिवृत्तं हि नाट्यस्य शरीरं–' इति मुनिः । नाट्यं च रस एवेत्युक्तप्रायम् । **गुणगुणिव्यवहार इति** । अत्यन्तसंमिश्रतया प्रतिभासनाद्धर्मधर्मिव्यवहारो युक्तः । न

---

१. 'द्विविधाः स्थिताः' क-ख. २. 'वृत्तिरुच्यते' ग. ३. 'कैशिक्यादयः' ग. ४. 'वा' क-ख.

---

१. 'दिप्रभृतयः' क-ख. २. 'युञ्जते' ग.

सति यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वस्य तथा वाच्येन सहैव रसादयोऽपि सहृदयस्यासहृदयस्य च प्रतिभासेरन् । न चैवम् । तथा चैतत्प्रतिपादितमेव प्रथमोद्योते । स्यान्मतम् । रत्नानामिव जात्यत्वं प्रतिपत्तृविशेष(तः) संवेद्यं वाच्यानां रसादिरूपत्वमिति । नैवम् । यतो यथा जात्यत्वेन प्रतिभासमाने रत्ने रत्नस्वरूपानतिरिक्तत्वमेव तस्य लक्ष्यते । तया रसानां विभावानुभावादिरूपवाच्यव्यतिरिक्तत्वमेव लक्ष्यते । न चैवम् । नहि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः । अतएव च विभावादिप्रतीत्यविनाभाविनी

---

त्विति । क्रमस्यासंवेदनादिति भावः । प्रथमेति । 'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।' इत्यादिना प्रतिपादितमदः । ननु यद्यस्य धर्मरूपं तत्तत्प्रतिभाने सत्यस्य नियमेन भातीत्यनैकान्तिकमेतत् । माणिक्यधर्मो हि जात्यत्वलक्षणो विशेषो नेत्याशङ्कते—स्यादिति । एतत्परिहरति—नैवमिति । एतदुक्तं भवति—अत्यन्तोन्मिश्रस्वभावत्वे सति तद्धर्मत्वादिति विशेषणमस्माभिः कृतम् । उन्मग्नरूपता च न रूपवज्जात्यत्वस्य । अत्यन्तलीनस्वभावत्वात् । रसादीनां चोन्मग्नतास्त्येवेत्येवं केचिदेतं ग्रन्थमनैषुः । अस्मद्गुरवस्त्वाहुः—अत्रोच्यत इत्यनेनेदमुच्यते—यदि रसादयो वाच्यानां धर्मास्तथापि द्वौ पक्षौ । रूपादिसदृशा वा स्युर्माणिक्यगतजात्यत्वसदृशा वा । न तावत्प्रथमः पक्षः । सर्वान्प्रति तथानवभासात् । नापि द्वितीयः । जात्यत्ववदनतिरिक्तत्वेनाप्रकाशनात् । एष च हेतुराद्येऽपि पक्षे संगच्छत एव । तदाह—स्यान्मतमित्यादिना न चैवमित्यन्तेन । एतदेव समर्थयति—**नहीति । अतएव चेति** । यतो न वाच्यधर्मत्वेन रसादीनां प्रतीतिः । यतश्च

---

१. तत्रैवम्' क, 'तत्रैवम्' ख. २. 'रसादीनामपि' ग. ३. 'वाच्यानति' ग.

---

१. 'प्रतिभासे सर्वस्य' क-ख. २. 'अत्यन्तोन्मग्न' क-ख. ३. 'एवेति केचिद्ग्रन्थं' क-ख. ४. क-ख-पुस्तकयोः 'असद्गुरवः' इत्यारभ्य 'स्यादिति' इत्यन्तः पाठः 'प्रथमम्' इत्यारभ्य 'ग्रन्थमनैषुः' इत्यन्तः पाठश्चानन्तरं वर्तते. ५. 'तथा सति' ग. ६. 'स्यादिति' क-ख.

रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात्क्रमोऽवश्यंभावी। स तु लाघवान्न प्रकाश्यते 'इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादयः' इत्युक्तम्। ननु शब्द एव प्रकरणाद्यवच्छिन्नो वाच्यव्यङ्ग्ययोः सममेव प्रतीतिमुपजनयतीति किं तत्र क्रमकल्पनया। न हि शब्दस्य वाच्यप्रतीतिपरामर्श एव व्यञ्जकत्वे निबन्धनम्। तथा हि गीतादिशब्देभ्योऽपि रसाद्यभिव्यक्तिरस्ति। न च तेषामन्तरा वाच्यपरामर्शः। अत्रापि ब्रूमः—प्रकरणाद्यवच्छेदेन व्यञ्जकत्वं शब्दानामित्यनुमतमेवैतदस्माकम्। किं तु तद्व्यञ्जकत्वं तेषां कदाचित्स्वरूपविशेषनिबन्धनं कदाचिद्वाचकशक्तिनिबन्धनम्। तत्र येषां वाचकशक्तिनिबन्धनं तेषां यदि वाच्यप्रतीतिमन्तरेणैव स्वरूपप्रतीत्या निष्पन्नं

---

यत्प्रतीतौ वाच्यप्रतीतिः। सर्वथानुपयोगिनी तत एव हेतोः क्रमेणावश्यं भाव्यम्। सहभूतयोरुपकारयोगात्। स तु सहृदयभावनाभ्यासान्न लक्ष्यते अन्यथा तु लक्ष्येतापीत्युक्तं प्राक्। यस्यापि प्रतीतिविशेषात्मैव रस इत्युक्तिः। प्राक्तनस्यापि व्यपदेशिवत्त्वाद्रसादीनां प्रतीतिरित्येवमन्यत्र। ननु भवन्तु वाच्यादतिरिक्ता रसादयस्तत्रापि क्रमो लक्ष्यत इति तावत्त्वयैवोक्तम्। तत्कल्पने च प्रमाणं नास्ति। अन्वयव्यतिरेकाभ्यामर्थप्रतीतिमन्तरेण रसप्रतीत्युभयस्य पदविरहितस्वरालापगीतादौ शब्दमात्रोपयोगकृतस्य दर्शनात्। ततश्चैकयैव सामग्र्या सहैव वाच्यं व्यङ्ग्याभिमतं च रसादि भातीति वचनव्यञ्जनव्यापारद्वयेन न किंचिदिति तदाह—**नन्विति**। यत्रापि गीतशब्दानामर्थोऽस्ति तत्रापि तत्प्रतीतिरुपयोगिनी। ग्रामरागानुसारेणापहस्तितवाच्यानुसारतया रसोदयदर्शनात्। न चापि स सर्वस्य भवतीति दृश्यते तदेतदाह—**न चेति**। तेषामिति गीतादिशब्दानाम्। आदिशब्देनास्य वाद्यविलपितशब्दादयो निर्दिष्टाः। **अनुमतमिति**। 'यत्रार्थः शब्दो वा—' इति

---

१. 'व्यवस्थापनात्' क.ख. २. 'कारणाद्यव' ख. ३. 'विषय' क.ख. ४. 'प्रतीत्यनुनिष्पन्नं' क-ख.

---

१. 'प्राक्तन—त्वयैवोक्तम्' इति पाठो ग-पुस्तके नास्ति. २. 'पदविग्रहस्वरालापानां शब्द' क-ख. ३. 'प्रतीतिस्तदनुपयोगिनी' क-ख. ४. 'सर्वत्र भवन्तीति' ग.

तद्भवेन्न तर्हि वाचकशक्तिनिबन्धनम्। अथ तन्निबन्धनं तन्नियमेनैव वाच्यवाचकभावप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव। स तु क्रमो यदि लाघवान्न लक्ष्यते तत्किं क्रियते। यदि च वाच्यप्रतीतिमन्तरेणैव [1]प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्तदनवधारित-[2]प्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां काव्यमात्र-श्रवणादेवासौ भवेत्। सहभावे च वाच्यप्रतीतेरनुपयोगः उपयोगे वा न सहभावः। येषामपि स्वरूपविशेषप्रतीतिनिमित्तं व्यञ्जकत्वं

---

[त]त्रवोचामेति भावः। **न तर्हीति**। [1]तत्तद्गीतपदे चार्थावगमं विनैव रसावभासः स्यात्काव्यशब्देभ्यः, न चैवमिति वाचकशक्तिरपि तथापेक्षणीया। सा च वाच्यनिष्ठैवेति प्राग्वाच्ये प्रतिपत्तिरित्युपगन्तव्यम्। तदाह—**अथेति**। [2]तदिति वाचकशक्तिः। **वाच्यवाचकभावेति**। सैव वाचकशक्तिरित्युच्यते। एतदुक्तं भवति—माभूद्वाच्यं रसादिव्यञ्जकम्, अस्तु शब्दादेव तत्प्रतीतिस्तथापि तेन स्ववाचकशक्तिस्तस्यां कर्तव्यायां सहकारितयावश्यापेक्षणीयेत्ययं वाच्यप्रतीतेः पूर्वभावित्वमिति। ननु गीतशब्दवदेव वाचकशक्तिरित्यत्राप्यनुपयोगिनी। यत्तु क्वचिच्छ्रुतेऽपि काव्ये रसप्रतीतिर्न भवति तत्रोचितः प्रकरणावगमादिः सहकारी नास्तीत्याशङ्क्याह—**यदि चेति**। प्रकरणावगमो हि क उच्यते किं वाक्यान्तरसहायत्वम्, अथ वाक्यान्तराणां संबन्धिवाच्यम्। उभयपरिज्ञानेऽपि न भवति प्रकृतवाक्यार्थभेदेन रसोदयः। **स्वयमिति**। प्रकरणमात्रमेव परेण केनचिदेषां व्याख्यातमिति भावः। न चान्वयव्यतिरेकवर्तीं वाच्यप्रतीतिमपह्नुत्यादृष्टसद्भावाभावौ शरणत्वेनाश्रितौ मात्सर्यादधिकं किंचित्पुष्णीत इत्यभिप्रायः। नन्वस्तु वाच्यप्रतीतेरुपयोगः क्रमाश्रयेण किं प्रयोजनम्, सहभावमात्रमेव ह्युपयोग एकसामग्र्यधीनतालक्षण इत्याशङ्क्याह—**सहेति**। एवं ह्युपयोग इति संज्ञाकरणमात्रं वस्तुशून्यं स्यादिति भावः। उपकारिणो हि पूर्वभावितेति त्वयाप्यङ्गीकृतमित्याह—**येषामिति**। त्वद्दृष्टान्तेनैव वयं वाच्यप्रतीतेरपि [3]प्रतिपादयिष्याम इति भावः। ननु

---

१. 'प्रकाराद्यवच्छिन्नमात्र' क-ख. २. 'प्रकाराणां' क-ख.

---

१. 'ततश्च गीतवादे' क-ख. २. 'सैव हि वाचकशक्तिरित्युच्यते' क-ख. ३. 'समर्थयिष्यामहे' क-ख.

यथा गीतशब्दानां तेषामपि स्वरूपप्रतीतेर्व्यङ्ग्यप्रतीतेश्च[1] नियमभावी[2] क्रमः। तत्र[3] तु शब्दस्य क्रियापौर्वापर्यमनन्यसाध्यतत्फलघटनास्वाशुभाविनीषु वाच्येनाविरोधिन्यभिधेयान्तरविलक्षणे[4] रसादौ न प्रतीयते।

---

स चेत्क्रमः किं न लक्ष्यत इत्याशङ्क्याह—तत्र त्विति। क्रियापौर्वापर्यमित्यनेन क्रमस्य स्वरूपमाह—क्रियेति[1] क्रिये वाच्यव्यङ्ग्यप्रतीती। यदिवाभिधाव्यापारो व्यञ्जनापरपर्यायो ध्वननव्यापारश्चेति क्रिये तयोः पौर्वापर्यं न प्रतीयते। क्वेत्याह—रसादौ विषये। कीदृशि। अभिधेयान्तरादभिधेयविशेषाद्विलक्षणे। सर्वथैवानभिधेयेनानेन भवितव्यं तावत्क्रमेणेत्युक्तम्। तथा[2] वाच्येनाविरोधिनि। विरोधिनि तु लक्ष्यत एवेत्यर्थः। कुतो न लक्ष्यते इति निमित्तसप्तमीनिर्दिष्टं हेत्वन्तरगर्भं हेतुमाह—आशुभाविनीष्विति। अन्यसाध्यतत्फलघटनासु। घटनाः पूर्वं माधुर्यादिलक्षणाः प्रतिपादिता गुणनिरूपणावसरे। ताश्च तत्फलाः रसादिप्रतीतिः फलं यासाम्, तथा नान्यत्तदेव साध्यं यासाम्। नह्योजोघटनायाः करुणादि प्रतीतिः साध्या। एतदुक्तं भवति—यतो गुणवति काव्ये संकीर्णविषयतया संघटना प्रयुक्ता ततः क्रमो न लक्ष्यते। ननु भवत्वेवं संघटनायां स्थितिः क्रमस्तु किं न लक्ष्यते। तदा आशुभाविनीषु वाच्यप्रतीतिकालप्रतीक्षणेन विनैव झटित्येव रसादीन्भावयन्ति। तदास्वादं विदधतीत्यर्थः। एतदुक्तं भवति—संघटना व्यङ्ग्यत्वाद्रसादीनामनुपयुक्तेऽप्यर्थविज्ञाने पूर्वमेवोचिता संघटनाश्रयण एव यत आसूत्रितो रसास्वादस्तेन वाच्यप्रतीत्युत्तरकालभवेन परिस्फुटास्वादयुक्तोऽपि पश्चादुत्पन्नत्वेन भाति[3]। अभ्यस्ते[4] हि विषये विभावप्रतीतिक्रम इत्थमेव न लक्ष्यते। अभ्यासो ह्ययमेव यत्प्रणिधानादिनापि विनैव संस्कारबलवत्त्वात्सदैव प्रबुभुत्सुतया स्थापनमित्येवं यत्र धूमस्तत्राग्निरिति हृदयस्थितत्वाद्व्याप्तेः पक्षधर्मज्ञानमात्रमेवोपयोगि भवतीति परामर्शस्थानमाक्रमति। झटित्युत्पन्नेऽपि धूमज्ञाने तद्व्याप्तिस्मृत्युपकृतेस्तद्विजातीयप्रणिधानानुसरणादिप्रतीत्यन्तरानुप्रवेशविरहादाशुभाविन्यामग्निप्रतीतौ क्रमो न लक्ष्यते तद्वदिहापि। यदि

---

१. 'व्यङ्ग्यप्रतीतेश्च' ग-पुस्तके नास्ति. २. 'भावी' क-ख. ३. 'तत्तु शब्दक्रिया' क-ख. ४. 'वाच्यविरोधिनी' क-ख.

---

१. 'क्रियते इति क्रिया वाच्य' क-ख. २. 'यथा वाच्येन' क-ख. ३. 'भवति' क-ख. ४. 'अभ्यस्त हि विषय विनाभावप्रतीति' क-ख.

क्वचित्तु लक्ष्यत एव । यथानुरणनरूपव्यङ्ग्यप्रतीतिषु । तत्रापि कथमिति चेदुच्यते अर्थशक्तिमूलानुरणनरूपव्यङ्ग्ये ध्वनौ तावदभिधेयस्य तत्सामर्थ्याक्षिप्तस्य चार्थस्याभिधेयान्तरविलक्षणतयात्यन्तविलक्षणे[1] ये प्रतीती तयोरशक्यनिह्नवो निमित्तनिमित्तिभाव इति स्फुटमेव तत्र पौर्वापर्यम् । यथा प्रथमोद्द्योते प्रतीयमानार्थसिद्ध्यर्थमुदाहृतासु गाथासु । तथाविधे च विषये वाच्यव्यङ्ग्ययोरत्यन्तविलक्षणत्वाद्यैव एकस्य प्रतीतिः सैवेतरस्येति न शक्यते वक्तुम् । शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये तु ध्वनौ 'गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु' इत्यादावर्थद्वयप्रतीतौ शाब्द्यामर्थद्वयस्योपमानोपमेयभावप्रतीतिरुपमावाचकपदविरहे सत्यर्थसामर्थ्यादाक्षिप्तेति । तत्रापि सुलक्ष्यमभिधेयव्यङ्ग्यालंकारप्रतीत्योः पौर्वापर्यम् ।

---

तु वाच्याविरोधी रसो न स्यादुचिता च घटना न भवेत्तल्लक्ष्यैतैव क्रम इति । चन्द्रिकाकारस्तु पठितमनुपठतीति न्यायेन गजनिमीलिकया व्याचचक्षे—तस्य तस्य शब्दस्य फलं तद्वा फलं वाच्यव्यङ्ग्यप्रतीत्यात्मकं तस्य घटना निष्पादना यतोऽन्यसाध्या शब्दव्यापारैकजन्येति । नचात्रार्थसतत्त्वं व्याख्यानेन किंचिदुत्पश्याम इत्यलं पूर्ववंश्यैः सह विवादेन बहुना । यत्र तु संघटनाव्यङ्ग्यत्वं[1] नास्ति तत्र वक्ष्यत[2] एवेत्याह—**क्वचित्त्विति** । तुल्ये व्यङ्ग्यत्वे कुतो भेद इत्याशङ्क्याह—**तत्रापीति** । **स्फुटमेवेति** । 'अविवक्षितवाच्यस्य पदवाक्यप्रकाशता । तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥' इति हि पूर्वं वर्णसंघटनादिकं[3] नास्य व्यञ्जकत्वेनोक्तमिति भावः । **गाथास्विति** । 'भम धम्मिअ—' इत्यादिकासु । ताश्च तथैव व्याख्याताः । **शाब्द्यामिति** । शाब्द्यामपीत्यर्थः । उपमावाचको यथेवादिः । **अर्थसामर्थ्यादिति** । वाक्यार्थसामर्थ्यादिति यावत् । एवं वाक्यप्रकाशमात्रशक्तिमूलं

१. 'विलक्षणस्य ये प्रतीती' क-ख.

१. 'व्यङ्ग्यत्वादि' क-ख. २. 'वक्ष्यते' क-ख. ३. 'व्यञ्जनादिकं' ग.

पदप्रकाशशब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽपि[1] ध्वनौ विशेषणपदस्योभयार्थसंबन्धयोग्यस्य योजकं पदमन्तरेण योजनमशाब्दमप्यर्थादवस्थितमित्यत्रापि पूर्ववदभिधेयतत्सामर्थ्याक्षिप्तालंकारमात्रप्रतीत्योः[2] सुस्थितमेव पौर्वापर्यम् । आर्थ्यपि च प्रतिपत्तिस्तथाविधे विषये उभयार्थसंबन्धयोगा शब्दसामर्थ्यप्रतिप्रसवभूतेति शब्दशक्तिमूला[3] कल्प्यते। अविवक्षितवाच्यस्य तु ध्वनेः प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकमेवार्थान्तरप्रकाशनमिति नियमभावी क्रमः । तत्रापि[4] विवक्षितवाच्यत्वादेव वाच्येन सह व्यङ्ग्यस्य क्रमप्रतीतिविचारो न कृतः । तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्तिभावान्नियमभावी

---

विचार्य पदप्रकाशं विचारयति—**पदप्रकाशेति** । विशेषणपदस्येति जड इत्यस्य। योजकमिति यथेवादिकम् । योजनमिति कुप इति (?) अहमिति चोभयसमानाधिकरणतया योजनम्[1] । अभिधेयं च तत्सामर्थ्याक्षिप्तं च तयोरलंकारमात्रयोः प्रतीतयोः पौर्वापर्यं क्रमः । सुस्थितं सुलक्षितमित्यर्थः । मात्रग्रहणेन रसप्रतीतिस्तत्राप्यलक्ष्यक्रमैवेति दर्शयति । नन्वेवमार्थत्वं[2] शब्दशक्तिमूलत्वं चेद्विरुद्धमित्याशङ्क्याह—**आर्थ्यपीति**। नात्र विरोधः कश्चिदिति भावः । एतच्च वितत्य पूर्वमेव निर्णीतमिति न पुनरुच्यते। **स्वविषयेति** । अन्धशब्दादेरुपहतचक्षुष्कादिः स्वो विषयः । तत्र यद्वैमुख्यमनादर इत्यर्थः । **विचारो न कृत इति** । नामधेयनिरूपणद्वारेणेति शेषः । सहभावस्य शङ्कितुमप्यत्रायुक्तत्वादिति भावः । एवं रसादयः कैशिक्यादीनामितिवृत्तभागरूपाणां वृत्तीनां जीवितमुपनागरिकाद्यानां च सर्वस्यास्योभयस्यापि[3] वृत्तिव्यवहारस्य रसादिनियन्त्रितविषयत्वादिति यत्प्रस्तुतं तत्प्रसङ्गेन रसादीनां वाच्यातिरिक्तत्वं समर्थयितुं क्रमो विचारित इत्येतदुपसंहरति—**तस्मादिति** । अभिधानस्य शब्दरूपस्य पूर्वं प्रतीतिस्ततोऽभिधेयस्य । यदाह तत्रभवान्—'विषयत्वमनापन्नैः शब्दैर्नार्थः प्रका-

---

१. 'अपि ध्वनौ' **ग**-पुस्तके नास्ति. २. 'प्रतिपत्त्योः' **ग**. ३. 'शब्दमूला' **ग**. ४. 'तत्र त्वविवक्षित' **क-ख**.

---



१. 'संवलनम्' **ग**. २. 'नन्वेकं' **ग**. ३. 'सर्वस्याभिधेयवृत्ति' **क-ख**.

क्रमः। स तूक्त्युक्त्या क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यते। तदेवं व्यञ्जकमुखेन ध्वनिप्रकारेषु निरूपितेषु कश्चिद्ब्रूयात्—किमिदं व्यञ्जकत्वं नाम व्यङ्ग्यार्थप्रकाशनम्। नहि व्यञ्जकत्वं व्यङ्ग्यत्वं चार्थस्यापि व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वम्। व्यङ्ग्यापेक्षया च व्यञ्जकत्वसिद्धिरित्यन्योन्यसंश्रयादव्यवस्थानम्। ननु वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धिः प्रागेव प्रतिपादिता तत्सिद्ध्यधीना च व्यञ्जकसिद्धिरिति कः पर्यनुयोगावसरः। सत्यमेवैतत्। प्रागुक्तयुक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिः कृता स त्वर्थो व्यङ्ग्यतयैव कस्माद्व्यपदिश्यते। यत्र च प्राधान्येनानवस्थानं तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः। तत्परत्वाद्वाचकत्वस्य। अतश्च तत्प्रकाशिनो वाक्यस्य वाचकत्वमेव व्यापारः। किं तस्य व्यापारान्तरा-

---

श्यते' इत्यादि। 'अतो निर्णीतरूपत्वात्किमाख्येत्यभिधीयते'। अत्रापि चाविनाभाववत्समयस्याभ्यस्तत्वात्क्रमो न लक्ष्येतापि। उद्योतारम्भे यदुक्तं व्यञ्जकमुखेन ध्वनेः स्वरूपं प्रतिपाद्यत इति तदिदानीमुपसंहरन्व्यञ्जकभावं प्रथमोद्योते समर्थितमपि शिष्याणामेकप्रघट्टकेन हृदि निवेशयितुं पूर्वपक्षमाह—**तदेवमिति**। कश्चिदिति मीमांसकादिः। किमिदमिति वक्ष्यमाणचोदकस्याभिप्रायः। प्रागेवेति प्रथमोद्योते अभाववादनिराकरणे। अतश्च न व्यञ्जकसिद्ध्या तत्सिद्धिर्येनान्योन्याश्रयः शङ्क्येत अपि तु हेत्वन्तरैस्तस्य बाधितत्वादिति भावः। तदाह—**तत्सिद्धीति**। **स त्विति**। अस्त्वसौ द्वितीयोऽर्थस्तस्य यदि व्यङ्ग्य इति नाम कृतम्, वाच्य इत्यपि कस्मान्न क्रियते। अवगम्यमानत्वेन हि शब्दार्थत्वं तदेव वाचकत्वम्। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वमुचितम्। तत्पर्यन्तता(म)भिधानभूते तस्मिन्नर्थ इति मूर्धाभिषिक्तत्वं ध्वनेर्निरूपितम्। तत्रैवाभिधाव्यापारेण भवितुं युक्तम्। तदाह—**यत्र चेति**। **तत्प्रकाशिन इति**। तद्व्यङ्ग्याभिमतं

---

१. 'युक्तेः' ग.

---

१. 'निर्णीत' ग. २. 'किमाहेत्यभि' क-ख. ३. 'व्यङ्ग्य इति नाकृतं वाच्यमित्यपि......भिमतस्यापि कस्मात्' ग. ४. 'सर्वा' क-ख.

कल्पनया। तस्मात्तात्पर्यविषयो योऽर्थः स तावन्मुख्यतया वाच्यः। या त्वन्तरा तथाविधे विषये वाच्यान्तरप्रतीतिः सा तत्प्रतीतेरुपायमात्रं पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः। अत्रोच्यते—यत्र शब्दः स्वार्थमभिदधानोऽर्थान्तरमवगमयति तत्र यत्तस्य स्वार्थाभिधायित्वं यच्च तदर्थान्तरावगमहेतुत्वं तयोरविशेषो विशेषो वा। न तावदविशेषः। यस्मात्तौ द्वौ व्यापारौ भिन्नविषयौ भिन्नरूपौ च प्रतीयेते एव। तथाहि वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः। गमकत्वलक्षणस्त्वर्थान्तरविषयः। ततः स्वपरव्यवहारो वाच्यगम्ययोरपह्नोतुमशक्यः। एकस्य संबन्धित्वेन प्रतीतेरपरस्य संबन्धिसंबन्धित्वेन। वाच्यो ह्यर्थः साक्षाच्छब्दस्य संबन्धी तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः संबन्धिसंबन्धी। यदि च स्वसंबन्धित्वं साक्षात्तस्य स्यात्तदार्थान्तरव्यवहार एव न स्यात्।

---

प्रकाशयत्यवश्यं यद्वाच्यं तस्येति। उपायमात्रमित्यनेन साधारण्येनोक्ता भाट्टं प्राभाकरं वैयाकरणं च पक्षं सूचयति। भाट्टमते हि—'वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥' इति शब्दावगतैः पदार्थैस्तात्पर्येण योऽर्थ उत्थाप्यते स एव वाक्यार्थः स एव च वाच्य इति। प्राभाकरदर्शनेऽपि दीर्घदीर्घो व्यापारो निमित्तिनि वाक्यार्थे। पदार्थानां तु निमित्तभावः पारमार्थिक एव। वैयाकरणानां तु सोऽपि पारमार्थिक इति विशेषः। एतच्चास्माभिः प्रथमोद्द्योत एव वितत्य निर्णीतमिति न पुनरायस्यते ग्रन्थयोजनैव तु क्रियते। तदेतन्मतत्रयं पूर्वपक्षे योज्यम्। अत्रेति पूर्वपक्षे। उच्यत इति सिद्धान्तः। वाचकत्वं गमकत्वं चेति स्वरूपतो भेदः स्वार्थोऽर्थान्तरेण च क्रमेणेति विषयतः। (ननु तस्मा[२]च्चेदसौ गम्यतेऽर्थः कथं तर्ह्युच्य········। नो चेत्स तस्य न कश्चिदिति को विषयार्थः।······शङ्काह—न चेदिति। तस्मादिति)। **व्यवहार एवेति**। एवकारो भिन्नक्रमः। नैव स्यादित्यर्थः। [३]तावता न साक्षादात्मसंबन्धित्वं

---

१. 'त्वसौ न' क.ख. २. कोष्ठकान्तर्गतः पाठः क.ख. पुस्तकयोर्नास्ति. ३. 'यावता' क.

तस्माद्विषयभेदस्तावत्तयोर्व्यापारयोः सुप्रसिद्धः । रूपभेदोऽपि प्रसिद्ध एव । नहि यैवाभिधानशक्तिः सैवावगमनशक्तिः । अवाचकस्यापि गीतशब्दादे रसादिलक्षणार्थावगमदर्शनात् । अशब्दस्यापि चेष्टादेरर्थाविशेषप्रकाशनप्रसिद्धेः । तथाहि 'व्रीडायोगान्नतवदनया—' इत्यादिश्लोके चेष्टाविशेषः सुकविनार्थप्रकाशनहेतुः प्रदर्शित एव । तस्माद्भिन्नविषयत्वाद्भिन्नरूपत्वाच्च स्वार्थाभिधायित्वमर्थान्तरावगमहेतुत्वं च शब्दस्य । यत्तयोः स्पष्ट एव भेदः । विशेषश्चेन्न तर्हीदानीमवगमनस्याभिधेयसामर्थ्याक्षिप्तस्यार्थान्तरस्य वाच्यत्वव्यपदेश्यता । शब्दव्यापारगोचरत्वं तु तस्यास्माभिरिष्यत एव । तत्तु व्यङ्ग्यत्वेनैव न वाच्यत्वेन । प्रसिद्धाभिधानान्तरसंबन्धयोग्यत्वेन च तस्यार्थान्तरस्य च प्रतीतेः ।

---

तैरयुक्तार्थस्यैक एवाभिधालक्षणो व्यापार इत्याशङ्क्याह—**रूपभेद इति** । तत्र भिन्नेऽपि विषये······क्षशब्दादेर्बहुर्थोऽपीति प्रसिद्धमेव दर्शयति—**नहीति** । विप्रतिपिद्धमनु प्रतिहेतुमाह—**अवाचकस्यापीति** । यदेव वाचकत्वं तदेव गमकत्वं यदि स्यादवाचकस्यापि गमकत्वमपि न स्यात् गमकत्वेनैव वाचकत्वमपि न स्यात् । न चैतदुभयमपि गीतशब्दे शब्दव्यतिरिक्ते चाधोवक्त्रत्वकुचकम्पनबाष्पावेशादौ तस्यावाचकस्याप्यवगमकारित्वदर्शनादवगमकारिणोऽपि वाचकत्वेन प्रसिद्धत्वादिति तात्पर्यम् । एतदुपसंहरति—**तस्माद्भिन्नेति** । **न तर्हीति** । वाच्यत्वे ह्यभिधाव्यापारविषयता न तु व्यापारमात्रविषयता । तथात्वे तु सिद्धसाधनमित्येतदाह—**शब्दव्यापारेति** । ननु गीतादौ मा भूद्वाचकत्वमिह त्वर्थान्तरेऽपि········पकत्वमेवोच्यते । किं हि तद्वाचकत्वं स·········शङ्क्योच्यते इत्याह—**प्रसिद्धेति** । (शब्दान्तरेण) तस्यार्थान्तरस्य यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता न वाचकत्वोक्तिः शब्दस्य, नापि वाच्यत्वोक्तिरर्थस्य तत्र युक्ता । वाचकत्वं हि समयव-

---

१. 'अवगमनीयस्य' क-ख. २. 'विषयत्वं' क-ख.

---

१. 'ननु' ग. २. 'तदवगमकभिन्नोऽपि' ग. ३. 'वाच्ये' क. ४. 'इत्याशङ्क्याह' क-ख. अत्र टीकायां त्रिष्वपि पुस्तकेष्वतीव पौर्वापर्यमस्ति. अस्माभिस्तु बहुपुस्तकानुरोधात्तथैव स्थापितम्.

शब्दान्तरेण स्वार्थाभिधायिना यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता। न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोः। यतः पदार्थप्रतीतिरस्त्येवेति कैश्चिद्विद्वद्भिरास्थितम्। यैरप्यसत्यत्वमस्या नाभ्युपेयते तैर्वाक्यार्थपदार्थयोर्घटतदुपादानकारणन्यायोऽभ्युपगन्तव्यः। यथाहि घटे निष्पन्ने तदुपादानकारणानां न पृथगुपलम्भस्तथैव वाक्ये तदर्थे वा प्रतीतेः पदतदर्थानां तेषां तदा विभक्ततयोपलम्भे वाक्यार्थबुद्धिरेव दूरीभवेत्। न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः। न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति। वाच्यावभासाविनाभावेन तस्य प्रकाशनात्।

---

शादव्यवधानेन प्रतिपादकत्वं यथा तस्यैव शब्दस्य स्वार्थे। *तदाह—**प्रसिद्धेति।** प्रसिद्धेन वाचकतयाभिधानान्तरेण यः संबन्धो वाच्यत्वं तदेव यत्र तद्योग्यत्वं तेनोपलक्षितस्य। तदाह—**स्वार्थाभिधायिनेति।** वाच्यत्वं हि समयबलेन निर्व्यवधानं प्रतिपाद्यत्वं यथा तस्यैवार्थस्य शब्दान्तरं प्रति। *नन्वेवं मा भूद्वाचकशक्तिस्तथापि तात्पर्यशक्तिर्भविष्यतीत्याशङ्क्याह—**न चेति।** कैश्चिदिति वैयाकरणैः। यैरपीति भट्टप्रभृतिभिः। न चैवंविधं वाचकत्वमर्थं प्रति शब्दस्येहास्तिनापि तं शब्दं प्रति तस्यार्थस्योक्तरूपत्वम्। वाच्यत्वं यदि नास्ति तर्हि कथं तस्य विषयीकरणमुक्तमित्याशङ्क्याह—**प्रतीतिरिति।** अथ च प्रतीयते सोऽर्थो न च वाच्यवाचकव्यापारेणेति विलक्षण एवासौ व्यापार इति यावत्। तमेव न्यायं व्याचष्टे—**यथाहीति। तदुपादानकारणानामिति।** समवायिकारणानि कपालानि अनयोक्त्या निरूपितानि। सौगतकापिलमते तु यद्युपादातव्यघटकाले उपादानानां न सत्ता एकत्र क्षणक्षयित्वेन परत्र तिरोभूतत्वेन तथापि पृथगुक्ततया नास्त्युपलम्भ इतीयत्यंशे दृष्टान्तो दूरीभवेदिति अर्थैकत्वस्याभावादिति भावः। एवं पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं प्रकृते विषये निराकृत्याभिमतां प्रकाशशक्तिं साधयितुं तदुचितं

---

१. 'श्लेषान्तरेण' क. २. 'वाक्यवाक्यार्थ' क-ख. ३. 'व्यङ्ग्यवाच्ययोः' क-ख.

---

* अत्रत्यं व्याख्यानं मूलानुरोधेन व्यवस्थापितमस्ति. १. 'पृथगुपादानस्योपलम्भः' क-ख.

तस्माद्घटप्रदीपन्यायस्तयोः । यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते तद्वद्व्यङ्ग्यप्रतीतौ वाच्यावभासः । यत्तु प्रथमोद्योते 'यथा पदार्थद्वारेण–' इत्याद्युक्तं तदुपायत्वसाम्यमात्रस्य विवक्षया । नन्वेवं युगपदर्थद्वययोगित्वं वाक्यस्य प्राप्तम् । तद्भावे च तस्य [१]वाक्यतैव विघटते । तस्या ऐकार्थ्यलक्षणत्वात् । नैष दोषः । गुणप्रधानभावेन तयोर्व्यव[२]स्थानात् । व्यङ्ग्यस्य हि क्वचित्प्राधान्यं वाच्यस्योप[३]सर्जनभावः क्वचिद्वाच्यस्य प्राधान्यमपरस्य च [४]गुणभावः । तत्र व्यङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव । वाच्यप्राधान्ये तु प्रकारान्तरं निर्देक्ष्यते । तस्मात्स्थितमेतत्—व्यङ्ग्यपरत्वेऽपि [५]काव्यस्य न व्यङ्ग्य-

---

प्रदीपघटन्यायं प्रकृते योजयन्नाह—**तस्मादिति** । यतोऽसौ पदार्थवाक्यार्थन्यायेनेह युक्तस्तस्मात्प्रकृतं न्यायं व्याकरणपूर्वकं दार्ष्टान्तिके योजयति—**[१]यथैव हीति** । ननु पूर्वमुक्तम्—'यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते । वाक्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः ॥' इति तत्कथं स एव न्याय इह यत्नेन निराकृत इत्याशङ्क्याह—**यत्त्विति** । **तदिति** । न तु सर्वथा साम्येनेत्यर्थः । **एवमिति** । प्रदीपघटवद्युगपदुभयावभासप्रकारेणेत्यर्थः । तस्या इति वाक्यतायाः । ऐकार्थ्यलक्षणमर्थैकत्वाद्धि वाक्यमेकमुक्तम्, सकृद्गतो हि शब्दो यत्रैव समयस्मृतिं करोति स चेदनेनैवागमितं तद्विरम्य व्यापाराभावात्समयस्मरणानां बहूनां युगपदयोगात्[२]कोऽर्थभेदस्यावसरः । पुनः श्रुतस्तु स्मृतो नासाविति भावः । तयोरिति वाच्यव्यङ्ग्ययोः । **तत्रेति** । उभयोः प्रकारयोर्मध्याद्यदा प्रथमः प्रकार इत्यर्थः । प्रकारान्तरमिति गुणीभूतव्यङ्ग्यसंज्ञितम् । व्यङ्ग्यत्वमेवेति प्रकाशत्वमेवेत्यर्थः । ननु यत्परः स शब्दार्थ इति व्यङ्ग्यस्याप्राधान्ये वाच्यत्वमेव न्याय्यम्, [३]तस्य प्राधान्ये किं युक्तं

---

१. 'वाक्यतयैव घटते' क-ख. २. 'स्थापनात्' क-ख. ३. 'सर्जनी' क-ख. ४. 'गुणीभावः' क-ख. ५. 'वाक्यस्य' ग.

---

१. 'यथाहीति' क-ख. २. 'कथं भेदस्य' क-ख. ३. 'तदप्राधान्ये' क.

स्याभिधेयत्वमपि तु व्यङ्ग्यत्वमेव । किं च व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद्भवद्भिर्नाभ्युपगन्तव्यमतत्परत्वाच्छब्दस्य । तदस्ति तावद्व्यङ्ग्यः शब्दानां कश्चिद्विषय इति । यत्रापि तस्य प्राधान्यं तत्रापि किमिति तस्य स्वरूपमपह्नूयते । एवं तावद्वाचकत्वादन्यदेव व्यञ्जकत्वम् । इतश्च वाचकत्वाद्व्यञ्जकत्वस्यान्यत्वं यद्वाचकत्वं शब्दैकाश्रयमितरत्तु शब्दाश्रयमर्थाश्रयं च । शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात् । गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयापि भवति । किंतु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते । रूपभेदस्तावदयम्—यदमुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा । व्यञ्जकत्वं तु मुख्यतयैव शब्दस्य व्यापारः । न ह्यर्थाद्व्यङ्ग्यत्रयप्रतीतिर्या तस्या अमुख्यत्वं मनागपि लक्ष्यते । अयं चान्यः स्वरूपभेदः—यद्गुणवृत्तिरमुख्यत्वेन

---

व्यङ्ग्यत्वमिति चेत्सिद्धो नः पक्षः । एतदाह—**किं चेति** । ननु प्राधान्ये मा भूद्व्यङ्ग्यत्वमित्याशङ्क्याह—**यत्रापीति** । अर्थान्तरत्वं संबन्धिसंबन्धत्वमनुपयुक्तसमयत्वमिति व्यङ्ग्यतायां निबन्धनम्, तच्च प्राधान्येऽपि विद्यत इति स्वरूपमहेयमेवेति भावः । एतदुपसंहरति—**एवमिति** । विषयभेदेन स्वरूपभेदेन चेत्यर्थः । तावदिति वक्तव्यान्तरमासूत्रयति । तदेवाह—**इतश्चेति** । अनेन सामग्रीभेदात्कारणभेदोऽप्यस्तीति दर्शयति । एतच्च वितत्य ध्वनिलक्षणे 'यत्रार्थः शब्दो वा–' इति वाग्रहणं, 'व्यङ्क्तः' इति द्विवचनं च व्याचक्षाणैरस्माभिः प्रथमोद्द्योत एव दर्शितमिति पुनर्न विस्तार्यते । एवं विषयभेदात्स्वरूपभेदात्कारणभेदाच्च वाचकत्वान्मुख्यात्प्रकाशकत्वस्य भेदं प्रतिपाद्योभयाश्रयत्वाविशेषात्तर्हि व्यञ्जकत्वगौणत्वयोः को भेद इत्याशङ्क्यामुख्यादपि प्रतिपादयितुमाह—**गुणवृत्तिरिति** । उभयाश्रयापीति शब्दा(र्था)श्रया । उपचारलक्षणयोः प्रथमोद्द्योत एव विभज्य निर्णीतं स्वरूपमिति न पुनर्लिख्यते । **मुख्यतयैवेति** । अस्खलद्गतित्वेनेत्यर्थः । **व्यङ्ग्यत्रय-**

---

१. 'एतस्य' क-ख. २. 'अपह्रियते' ग. ३. 'व्यञ्जकत्वसामान्यत्वं' क-ख.

---



१. 'विचार्यते' क-ख. २. 'भेदप्रतीति विप्रतिपाद्य' ग. ३. 'स्खलद्गति' घ.

व्यवहितं वाचकत्वमेवोच्यते । व्यञ्जकत्वं तु वाचकादत्यन्तं विभिन्नमेव । एतच्च प्रतिपादितम् । अयं चापरो रूपभेदो यद्गुणवृत्तौ पदार्थोऽर्थान्तरमुपलक्षयति तदोपलक्षणीयार्थात्मना परिणत एवासौ संपद्यते । यथा 'गङ्गायां घोषः' इत्यादौ । व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत् । यथा—'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ । यदि च यत्रातिरस्कृतस्वरूपप्रतीतिरर्थोऽर्थान्तरं लक्षयति तत्र लक्षणाव्यवहारः क्रियते । तदेवं सति लक्षणैव मुख्यः शब्दव्यापार इति प्राप्तम् । यस्मात्प्रायेणैव वाक्यानां वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वम् । ननु त्वत्पक्षेऽपि यदार्थो व्यङ्ग्यत्रयं प्रकाशयति तदा शब्दस्य कीदृशो व्यापारः । उच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपह्नूयते । विषयभेदोऽपि गुणवृत्तिव्यञ्जकत्वयोः स्पष्ट एव । यतो व्यञ्जकत्वस्य रसा-

---

सेति । वस्त्वलंकाररसात्मकम् । **वाचकत्वमेवेति** । तत्रापि हि तथैव समयोपयोगोऽस्त्येव । **प्रतिपादितमिति** । इदानीमेव परिणत·········पेणासिर्भासमान (?) इत्यर्थः । कीदृश इति मुख्या वा न वा प्रकारान्तराभावात् । मुख्यत्वे वाचकत्वमन्यथा गुणवृत्तिः । गुणो निमित्तं सादृश्यादि तद्द्वारिका वृत्तिः शब्दस्य व्यापारो गुणवृत्तिरिति भावः । मुख्य एवासौ व्यापारः सामग्रीभेदाच्च वाचकत्वाद्व्यतिरिच्यत इत्यभिप्रायेणाह—**उच्यत इति** । एवमस्खलद्गतित्वात् (कथं) समयानुपयोगात्पृथगाभासमानत्वाच्चेति त्रिभिः प्रकारैः प्रकाशकत्वस्यैतद्विपरीतरूपत्वाच्च गुणवृत्तेः स्वरूपं भेदं व्याख्याय विषयभेदमाह—**विषयभेदोऽपीति** ।

---

१. 'व्यवस्थितं' **क-ख.** २. 'लक्षणीयात्परिणत' **क-ख.** ३. 'बोधयति' **ख.** ४. 'यत्रातितिरस्कृत' **ख.** ५. 'स्वप्रतीति' **ग.** ६. 'स्फुटः' **ग.**

---

१. 'मुख्येन वा' **क-ख.**

दयोऽलंकारविशेषा व्यङ्ग्यरूपावच्छिन्नं वस्तु चेति त्रयं विषयः। 'अस्खलद्गतित्वं समयानुपयोगित्वं पृथगवभासित्वं चेति त्रयम्। तत्र रसादिप्रतीतिर्गुणवृत्तिरिति न केनचिदुच्यते। न च शक्यते वक्तुं व्यङ्ग्यालंकारप्रतीतिरपि। तथैव वस्तु चारुत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत्प्रतिपादयितुमिष्यते तद्व्यङ्ग्यम्। तच्च न सर्वं गुणवृत्तेर्विषयः। प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्शनात्। तथोक्तं प्राक्। यदपि च विषयस्तदपि च व्यञ्जकत्वानुप्रवेशेन। तस्माद्गुणवृत्तेरपि व्यञ्जकत्वस्यात्यन्तविलक्षणत्वम्। वाचकत्वगुणवृत्तिविलक्षणस्यापि

---

वस्तुमात्रं गुणवृत्तेरपि विषय इत्यभिप्रायेण विशेषयति—**व्यङ्ग्यरूपावच्छिन्नमिति**। व्यञ्जकत्वस्य यो विषयः स गुणवृत्तेर्न विषयः। अन्यथा तस्या विषयभेदो योज्यः। तत्र प्रथमं प्रकारमाह—**तत्रेति**। **न च शक्यत इति**। लक्षणासामग्र्यास्तत्राविद्यमानत्वादिति हि पूर्वमेवोक्तम्। **तथैवेति**। न तत्र गुणवृत्तिर्युक्तेत्यर्थः। वस्तुनो यत्पूर्वं विशेषणं कृतं तद्व्याचष्टे—**चारुत्वप्रतीतय इति**। **न सर्वमिति**। किंचित्तु भवति। यथा—'निःश्वासान्ध इवादर्शः' इति यदुक्तम्—'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्' इति प्रसिद्धितो लावण्यादयः शब्दा वृत्तानुरोधव्यवहारानुरोधादेवेति[2]। यथा—'वदति बिसिनीपत्रशयनम्' इत्येवमादयः। प्रागिति प्रथमोद्द्योते 'रूढा ये विषयोऽन्यत्र' इत्यत्रान्तरे। (न सर्वमिति।) यथास्माभिर्व्याख्यातं तथा स्फुटयति—**यदपि चेति**। गुणवृत्तेरिति पञ्चमी। अधुनेतररूपोपजीवकत्वेन च तदितरस्मादित्यनेन पर्यायेण वाचकाद्गुणवृत्तेश्च द्वितीयादपि भिन्नं व्यञ्जकत्वमित्युपपादयति—**वाचकत्वेति**। चोऽवधारणे भिन्नक्रमः। अपिशब्दोऽपि। न केवलं पूर्वोक्तो हेतुकलापो यावत्तदुभयाश्रयत्वेन मुख्योपचाराश्रयत्वेन यद्व्यवस्थानं तदपि वाचकगुणवृत्तिविलक्षणस्यैवेति व्या-

---

१. 'अन्यश्च' क-ख. २. 'व्यवहारानुरोधैः' क-ख. ३. 'वाचकत्वगुणवृत्तिविलक्षणेत्ति' क-ख.

न तस्य तदुभयाश्रयत्वेन व्यवस्थानम् । व्यञ्जकत्वं हि क्वचिद्वाचकत्वाश्रयेण व्यवतिष्ठते । यथा विवक्षितान्यपरवाच्ये ध्वनौ । क्वचित्तु गुणवृत्त्याश्रयेण [1]यथा अविवक्षितवाच्ये ध्वनौ । तदुभयाश्रयत्वप्रतिपादनायैव च ध्वनेः प्रथमतरं द्वौ प्रभेदावुपन्यस्तौ । [2]तदुभयाश्रितत्वाच्च तदेकरूपत्वं तस्य न [3]शक्यते वक्तुम् । यस्मान्न तद्वाचकत्वैकरूपमेव । क्वचिल्लक्षणाश्रयेण वृत्तेः । न च लक्षणैकरूपमेवान्यत्र वाचकत्वाश्रयेण व्यवस्थानात् । न चोभयधर्मत्वेनैव तदेकैकरूपं न भवति । यावद्वाचकत्वलक्षणादिरूपरहित[4]शब्दधर्मत्वेनापि । तथाहि गीतध्वनीनामपि व्यञ्जकत्वमस्ति रसादिविषयम् । न च तेषां वाचकत्वं लक्षणा वा कथंचिल्लक्ष्यते । शब्दादन्यत्रापि च विषये व्यञ्जकत्वस्यापि दर्शनाद्वाचकत्वादिशब्दधर्मप्रकारत्वम[5]युक्तं वक्तुम् । यदि वाचकत्वलक्षणादीनां शब्दप्रकाराणां प्रसिद्धप्रकारविलक्षणत्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते तच्छब्दस्यैव प्रकारत्वेन कस्मान्न परिकल्प्यते ।

---

क्षिघटनम् । तेनायं तात्पर्यार्थः—यदुभयाश्रयत्वेन [1]व्यवस्थानात्तदुभयवैलक्षण्यमिति । एतदेव विभजते—**व्यञ्जकत्वं हीति** । प्रथमतरमिति प्रथमोद्योते 'स च—' इत्यादिना ग्रन्थेन । हेत्वन्तरमपि सूचयति—**न चेति** । वाचकत्वगौणत्वोभयवृत्तान्तवैलक्षण्य······तो हेतुः । तमेव प्रकाशयति—**तेषामिति** । गीतादिशब्दानाम् । ( हेत्वन्तरमपि सूचयति—) **शब्दादन्यत्रेति** । वाचकत्वगौणत्वाभ्यामन्यद्व्यञ्जकत्वं शब्दादन्यत्रापि वर्तमानत्वात्प्रमेयत्वादिवदिति हेतुः सूचितः । नन्वन्यत्रावाचके यद्व्यञ्जकं तद्भवतु वाचकत्वादेर्विलक्षणं तद्व्यञ्जकत्वं तदपि विलक्षणमेवास्त्वित्याशङ्क्याह—**यदीति** । आदिपदेन गौणं गृह्यते । **शब्दस्यैवेति** । व्यञ्जकत्वं वाचकत्वमिति हि पर्यायौ कल्प्येते तर्हि व्यञ्जकत्वं शब्द

---

१. 'यथास्मिन्' क-ख. २. 'तदुभयाश्रयत्वाच्च' क-ख. ३. 'शक्यं' ग. ४. 'शब्दाधिकत्वेन' ग. ५. 'अशक्यं' ग.

---

१. 'व्यवस्थानं क-ख.

तदेवं शाब्दे व्यवहारे त्रयः प्रकाराः—वाचकत्वं गुणवृत्तिर्व्यञ्जकत्वं च । तत्र व्यञ्जकत्वे यदा व्यङ्ग्यप्राधान्यं तदा ध्वनेस्तस्य चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्वौ प्रभेदावनुक्रान्तौ प्रथमतरं तौ सविस्तरं निर्णीतौ ।

अन्यो ब्रूयात्—ननु विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिता नास्तीति यदुच्यते तद्युक्तम् । यस्माद्वाच्यवाचकप्रतीतिपूर्विका यत्रार्थान्तरप्रतिपत्तिस्तत्र कथं गुणवृत्तिव्यवहारः । नहि गुणवृत्तौ यदा निमित्तेन केनचिद्विषयान्तरे शब्द आरोप्यते अत्यन्ततिरस्कृतस्वार्थः यथा 'अग्निर्माणवकः' इत्यादौ, यदा वा स्वार्थमंशेनापरित्यजंस्तत्संबन्धद्वारेण

---

इत्यपि पर्यायता कस्मान्न गृह्यते इच्छाया अव्याहतत्वात् । व्यञ्जकस्य तु विदितं स्वरूपं तद्विषयान्तरे कथं विपर्ययस्यताम् । एवं हि पर्वतगतो धूमोऽनग्निजोऽपि स्यादिति भावः । अधुनोपपादितं विभागमुपसंहरति—**तदेवमिति** । व्यवहारग्रहणेन समुद्रघोषादीन्व्युदस्यति । ननु वाचकत्वरूपोपजीवकत्वाद्गुणवृत्त्यनुजीवकत्वादिति च हेतुद्वयं यदुक्तं तदविवक्षितवाच्यभागे सिद्धं न भवति तस्य लक्षणैकशरीरत्वादित्यभिप्रायेणोपक्रमते—**अन्य इति । अन्यो ब्रूयादिति** । यद्यपि च तस्य तदुभयाश्रयत्वेन व्यवस्थानादिति ब्रुवता निर्णीतचरमेवैतत् तथापि गुणवृत्तेरविवक्षितवाच्यस्य च दुर्निरूप्यं वैलक्षण्यं यः पश्यति तं प्रत्याशङ्कानिवारणार्थोऽयमुपक्रमः । अत एवाद्यभेदस्याङ्गीकरणपूर्वकमयं द्वितीयभेदाक्षेपः । विवक्षितान्यपरवाच्य इत्यादिना पराभ्युपगमस्य स्वाङ्गीकारो दर्श्यते । गुणवृत्तिव्यवहाराभावे हेतुं दर्शयितुं तस्या एव गुणवृत्तेस्तावद्वृत्तान्तं दर्शयति—**नहीति** । गुणतया वृत्तिर्व्यापारो गुणवृत्तिः । गुणेन निमित्तेन सादृश्यादिना च वृत्तिः । अर्थान्तरविषयेऽपि शब्दस्य सामानाधिकरण्यमिति गौणं दर्शयति । यदा वा स्वार्थमिति लक्षणां दर्शयति । अनेनैव भेदद्वयेन च स्वीकृतमविवक्षितवाच्यं भेदद्वयात्मकमिति



१. 'संशयेन परित्यजन्' ख.

विषयान्तरमाक्रामति यथा—'गङ्गायां घोषः' इत्यादौ तदा विवक्षितवाच्यत्वमुपपद्यते। अत एव च विवक्षितान्यपरवाच्ये ध्वनौ वाच्यवाचकयोर्द्वयोरपि स्वरूपप्रतीतिरर्थावगमनं च दृश्यत इति व्यञ्जकत्वव्यवहारो युक्त्यनुरोधी। स्वरूपं प्रकाशयन्नेवं[1] परावभासको व्यञ्जक इत्युच्यते। तथाविधे विषये वाचकत्वस्यैव व्यञ्जकत्वमिति गुणवृत्तिव्यवहारे नियमेनैव[2] न शक्यते वक्तुम्[3]। अविवक्षितवाच्यस्तु ध्वनिर्गुणवृत्तेः कथं भिद्यते। तस्य प्रभेदद्वये गुणवृत्तिप्रभेदद्वयरूपता लक्ष्यत एव। यतोऽयमपि न दोषः। यस्मादविवक्षितवाच्यो ध्वनिर्गुणवृत्तिमार्गाश्रयोऽपि भवति न तु गुणवृत्तिरूप एव। गुणवृत्तिर्हि व्यञ्जक-

---

सूचयति। अत एवात्यन्ततिरस्कृते[1]........विषयान्तरमाश्रय(क्राम)ति चेत्यनेन शब्देन तदेव भेदद्वयं दर्शयति[2]—अत एव चेति। यत्तु[3] एवं तत्रोक्तहेतुबलाद्गुणवृत्तिव्यवहारो न्याय्यस्तत इत्यर्थः। युक्तिं लोकप्रसिद्धिरूपामबाधितां दर्शयति—**स्वरूपमिति**। उच्यत इति प्रदीपादिरिन्द्रियादेस्तु कारणत्वं न व्यञ्जकत्वं प्रतीत्युत्पत्तौ। एवमभ्युपगमं प्रदर्श्याक्षेपं दर्शयति—**अविवक्षितेति**। तुशब्दः पूर्वस्माद्विशेषं द्योतयति—**तस्येति**। अविवक्षितवाच्यस्य यत्प्रभेदद्वयं तस्मिन्गौणलाक्षणिकत्वात्मकं प्रकारद्वयं[4] लक्ष्यते निर्भासत इत्यर्थः। एतत्परिहरति—**अयमपीति**। गुणवृत्तेर्यो मार्गः प्रभेदद्वयं स आश्रयो निमित्ततया प्राक्कक्ष्यानिवेशी यस्येत्यर्थः। एतच्च पूर्वमेव निर्णीतम्। ताद्रूप्याभावे हेतुमाह—**गुणवृत्तिरिति**। गौणलाक्षणिकरूपोभयी अपीत्यर्थः। ननु व्यञ्जकत्वे कथं[5] शून्या गुणवृत्तिर्भवति। यतः पूर्वमेवोक्तम्—'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्। यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥' इति। नहि प्रयोजनशून्य उपचारः प्रयोजनांशनिवेशी च व्यञ्जनव्यापार इति भवद्भिरेवाभ्यधायीत्याशङ्क्याभिमतं व्यञ्जकत्वं विश्रा-

---

१. 'एव हि परावभासमानो' क-ख. २. 'नियमेन वै शक्यते' क-ख. ३. 'कर्तुम्' क-ख.

---

१. 'स्वार्थशब्देन' क-ख. २. 'सूचयति' क-ख. ३. 'यतो न' क-ख. ४. 'भेदद्वयं' क-ख. ५. 'न ग.'

त्वशून्यापि दृश्यते । व्यञ्जकत्वं च यथोक्तचारुत्वहेतुं[1] व्यङ्ग्यं विना न व्यवतिष्ठते । गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण चाभेदोपचाररूपा संभवति । यथा तीक्ष्णत्वादग्निर्माणवकः । आह्लादकत्वा[2]च्चन्द्र एवास्या मुखमित्यादौ । यथा च 'प्रिये[3] जने नास्ति पुनरुक्तम्' इत्यादौ । यापि लक्षणरूपा गुणवृत्तिः साप्युपलक्षणीयार्थसंबन्धमात्राश्रयेण चारुरूपव्यङ्ग्यप्रतीतिं विनापि संभवत्येव । यथा "मञ्चाः क्रोशन्ती"त्यादौ विषये । यत्र तु सा चारुरूपव्यङ्ग्यप्रतीतिहेतुस्तत्रापि व्यञ्जकत्वानुप्रवेशेनैव वाचकत्ववत् । असंभविना चार्थेन यत्र व्यवहारः यथा 'सुवर्णपुष्पां पृथिवीं' इत्यादौ तत्र चारुरूपव्यङ्ग्यप्रतीतिरेव प्रयो-

---

न्तिस्थानरूपं तत्र नास्तीत्याह—**व्यञ्जकत्वं चेति** । **वाच्यधर्मेति** । वाच्यविषयो यो धर्मोऽभिधाव्यापारस्तस्याश्रयेण तदुपबृंहणायेत्यर्थः । श्रुता(र्थापत्तिविधा)र्थान्तरस्याभिधेयार्थोपादान एव पर्यवसानादिति भावः । तत्र गौणस्योदाहरणमाह—**यथेति**[1] । द्वितीयमपि प्रकारं व्यञ्जकत्वशून्यं निदर्शयितुमुपक्रमते—**यापीति** । चारुरूपं विश्रान्तिस्थानं तदभावे स व्यञ्जकत्वव्यापारो नैवोन्मीलति । प्रत्यावृत्य वाच्यरूप एव विश्रान्तेः । क्षणदृष्टनष्टदिव्यविभवप्राकृतपुरुषवत् । ननु यत्र व्यङ्ग्येऽर्थे विश्रान्तिस्तत्र किं कर्तव्यमित्याशङ्क्याह—**यत्र त्विति** । अस्ति तत्रापरो व्यञ्जनव्यापारः परिस्फुट एवेत्यर्थः । दृष्टान्तं पराङ्गीकृतमेवाह—**व्यञ्जक(वाचक)त्ववदिति** । वाचकत्वे हि त्वयैवाङ्गीकृतो व्यञ्जनव्यापारः प्रथमं ध्वनिप्रभेदं मन्या ( मत्वा ? ) इति भावः । किं च वस्त्वन्तरे मुख्ये संभवति संभवदेव वस्त्वन्तरं मुख्यमेवारोप्यते । विषयान्तरमात्रतस्त्वारोपव्यवहार इति जीवितः (?) विचारस्य सुवर्णपुष्पाणां मूलत एवासंभवस्तदुच्चयनस्य तत्र क आरोपव्यवहारः । 'सुवर्णपुष्पां पृथिवीं' इति हि स्यादारोपः । तस्मादत्र व्यञ्जनव्यापार एव प्रधानभूतो नारोपव्यवहारः । स परं व्यञ्जनव्यापारानुरोधितयोत्तिष्ठति । तदाह—**असंभविनेति**[2] । **प्रयोजिकेति** । व्यङ्ग्यमेव हि प्रयोजनरूपं प्रती-

---

१. 'हेतुकं' क-ख. २. 'आह्लादहेतुत्वात्' ग. ३. 'प्रयोजने' क-ख.



१. 'यथातीक्ष्णत्वादि' क-ख. २. 'असंभाविनेति' क-ख.

जिकेति तथाविधेऽपि विषये गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधी । तस्मादविवक्षितवाच्ये ध्वनौ द्वयोरपि प्रभेदयोर्व्यञ्जकत्वविशेषाविशिष्टा गुणवृत्तिर्न तु तदेकरूपा सहृदयहृदयाह्लादिनी प्रतीयमाना । प्रतीतिहेतुत्वाद्विषयान्तरे तद्रूपशून्यायाश्च दर्शनात् । एतच्च सर्वं प्राक्सूचितमपि स्फुटतरप्रतीतये पुनरुक्तम् ।

अपि च व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः स प्रसिद्धसंबन्धानुरोधीति न कस्यचिद्विमतिविषयतामर्हति । शब्दार्थयोर्हि प्रसिद्धो यः संबन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसंबन्धादौपाधिकः प्रवर्तते । अत एव वाचकत्वा-

---

तिविश्रामस्थानमारोपिते त्वसंभवति प्रतीतिविश्रान्तिराशङ्कनीयापि न भवति । **सत्यामपीति** । व्यञ्जनव्यापारसंपत्तये लक्षणमात्रवृत्त्यामवलम्बितायामिति भावः । **तस्मादिति** । व्यञ्जकत्वलक्षणो यो विशेषस्तेनाविशिष्टा अविद्यमानं विशिष्टं विशेषो भेदनं यस्याः । व्यञ्जकत्वं न तस्या भेद इत्यर्थः । यदि वा व्यञ्जकत्वलक्षणेन व्यापारविशेषेणावि(शि)ष्टान्यकृतस्वभावा आसमन्ताद्व्याप्ता । **तदेकेति** । तेन व्यञ्जकत्वलक्षणेन सहैकं रूपं यस्याः सा तथाविधा न भवति । अविवक्षितवाच्ये व्यञ्जकत्वं गुणवृत्तेः पृथक्चारुप्रतीतिहेतुत्वात् । विवक्षितवाच्यनिष्ठव्यञ्जकत्ववत् । नहि गुणवृत्तेश्चारुप्रतीतिहेतुत्वमस्तीति दर्शयति—**विषयान्तर इति** । अग्निर्बटुरित्यादौ । प्रागिति प्रथमोद्द्योते । नियतस्वभाववाच्यवाचकत्वादौपाधिकत्वेन नियतं व्यञ्जकत्वं कथं न भिन्ननिमित्तमिति दर्शयति—**अपि चेति** । **औपाधिक इति** । व्यञ्जकवैचित्र्यं यत्पूर्वमुक्तं तत्कृत इत्यर्थः । अत एव समयनियमितादभिधाव्यापाराद्विलक्षण इति यावत् । एतदेव स्फुटयति—**अत एवेति** ।

---

१. 'विशेषणाविष्टा' क-ख.

---

१. 'विश्रान्ति' ग.

त्तस्य विशेषः । वाचकत्वं हि शब्दविशेषस्य नियत आत्मा संबन्धी । व्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात् । स त्वनियतः । औपाधिकत्वात् । प्रकरणाद्यवच्छेदेन तस्य प्रतीतेरितरथा त्वप्रतीतेः । ननु यद्यनियतस्तर्तिक तस्य स्वरूपपरीक्षया । नैष दोषः । यतः शब्दात्मनि तस्यानियतत्वं न तु स्वे विषये व्यङ्ग्यलक्षणे । लिङ्गत्वन्यायश्चास्य व्यञ्जकभावस्य लक्ष्यते । तथाहि लिङ्गत्वमाश्रयेषु नियतावभासम् इच्छाधीनत्वात्स्वविषयाव्यभिचारि च तथैवेदं यथा दर्शितं व्यञ्जकत्वम् । शब्दात्मनि नियतत्वादेव च तस्य वाचकत्वप्रकारता न शक्या कल्पयितुम् । यदि हि वाचकत्वप्रकारता तस्य भवेत्तच्छब्दात्मनि नियततापि स्याद्वाचकत्ववत् । स च तथाविध औपाधिको धर्मः शब्दानामौत्पत्तिकशब्दार्थसंबन्धवादिना वाक्यतत्त्वविदा पौरुषापौरुषेययोर्वा-

---

औपाधिकत्वं दर्शयति—**प्रकरणादीति** । **किं तस्येति** । अनियतत्वाद्यथारुचि कल्प्येत । पारमार्थिकं रूपं नास्ति । न चावस्तुनः परीक्षोपपद्यत इति भावः । **शब्दात्मनीति** । संकेतास्पदे घटस्वरूपमात्र इत्यर्थः । **आश्रयेष्विति** । नहि धूमे वह्निगमकत्वं सदातनम् । अन्यगमकत्वस्य च दर्शनात् । **इच्छाधीनत्वादिति** । इच्छामात्रं पक्षधर्मत्वजिज्ञासाव्याप्तिः संमूर्षाप्रभृतिः (?) । **स्वविषयेति** स्वस्मिन्विषये च गृहीतेऽत्रैव रूप्यादौ न व्यभिचरति । न कस्यचिद्धिमतिमेतीति य दुक्तं तत्स्फुटयति—**स चेति** । व्यञ्जकत्वलक्षण इत्यर्थः । **औत्पत्तिकेति** । ज न्मना द्वितीयो भावविकारः सत्तारूपः सामीप्याल्लक्ष्यते विपरीतलक्षणातो वा उत्पत्ति

---

१. 'संबन्धव्युत्पत्ति' क-ख. २. 'व्यञ्जक' क. ३. 'इच्छाविषयत्वाद्' ग. ४. 'वाचकत्वाप्रकारता' ग.

---

१. 'उपपन्ना' ग. २. 'सदातनं' ग. ३. 'अन्य···स्य वह्नयगमकत्वस्य' ग. ४. 'इच्छात्र व्यापकधर्मताजिज्ञासा' ग. ५. 'संमूर्छ' ख, 'सुस्यूषा' ग. ६. 'गृहीतेऽत्रैरूप्यादौ' क-ख. ७. 'वातूत्पत्तिः रूढा वा' क, 'पर उत्पत्तिकशब्दो' ग.

क्ययोर्विशेषमभिदधता नियमेनाभ्युपगन्तव्यः । तदनभ्युपगमे हि तस्य शब्दार्थसंबन्धनित्यत्वे सत्यप्यपौरुषेयपौरुषेययोर्वाक्ययोरर्थप्रतिपादने निर्विशेषत्वं स्यात् । तदभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितौपधिकव्यापारान्तराणां सत्यपि स्वाभिधेयसंबन्धापरित्यागे मिथ्यार्थतापि भवेत् । दृश्यते हि भावानामपरित्यक्तस्वस्वभावानामपि सामग्र्यन्तरसंपातसंपादितौपाधिकव्यापारान्तराणां विरुद्धक्रियत्वम् । तथा हि हिममयूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव प्रियाविरहदहनदह्यमानमानसैर्जनैरालोक्यमानानां सतां संतापकारित्वं प्रसिद्धमेव । तस्मात्पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसंबन्धे मिथ्यार्थत्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तं किंचिद्रूपमौपाधिकं व्यक्तमेवाभिधानीयम् । तच्च व्यञ्जकत्वादृते नान्यत् । व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम् । पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति स च व्यङ्ग्य एव न त्वभिधेयः ।

---

रूढ्या वा औत्पत्तिकशब्दो नित्यपर्यायः । तेन नित्ययोः शब्दार्थयोः शक्तिलक्षणं संबन्धमिच्छति जैमिनेयस्तेनेत्यर्थः । **निर्विशेषत्वमिति** । ततश्च पुरुषदोषानुप्रवेशस्याकिंचित्करत्वात्तन्निबन्धनं पौरुषेयेषु वाक्येषु पद[1]प्रामाण्यान्न सिध्येत् । प्रतिपत्तुरेव हि यदि तथा प्रतिपत्तिस्तर्हि वाक्यस्य न कश्चिदपराध इति कथमप्रामाण्यम् । अपौरुषेये हि वाक्ये प्रतिपत्ति (त्तृ)दौरात्म्यात्तथा स्यात् । ननु धर्मान्तराभ्युपगमेऽपि कथं मिथ्यार्थता । नहि प्रकाशकत्वलक्षणं स्वधर्मं जहाति शब्द इत्याशङ्क्याह—**दृश्यत इति** । **प्राधान्येनेति** । यदाह—एवमयं पुरुषो वेदेति भवति प्रत्ययः न त्वेवमर्थ इति । तथा प्रमाणान्तरदर्शनमत्र बाध्यते । ननु शब्दोऽन्वय इत्यनेन पुरुषाभिप्रायानुप्रवेशादेवा[3]ङ्गुल्यग्रवाक्यादौ मिथ्यार्थत्वमुक्तम् ।

---

१. 'रोपितोपाधिव्यापार' ग.

---

१. 'पौरुष' क-ख. २. 'प्रमाणान्तं' क, 'प्रामाण्यं' ग. ३. 'अङ्गुल्यर्पणवाक्यादौ' क-ख.

तेन सहाभिधानस्य वाच्यवाचकतालक्षणसंबन्धाभावात्। नन्वनेन न्यायेन सर्वेषामेवालौकिकानां वाक्यानां ध्वनिव्यवहारः प्रसक्तः। सर्वेषामेवानेन न्यायेन व्यञ्जकत्वात्। सत्यमेतत्। किं तु वक्त्रभिप्रायप्रकाशनेन[1] यदि[2] व्यञ्जकत्वं तत्सर्वेषामेव लौकिकानां वाक्यानामविशिष्टम्। ननु[3] वाचकत्वान्न भिद्यते, व्यङ्ग्यं हि तत्र नान्तरीयकतया व्यवस्थितम्। न[4] तु विवक्षितत्वेन व्यङ्ग्यस्य व्यवस्थितिः। तद्व्यञ्जकत्वं ध्वनिव्यवहारस्य प्रयोजकम्। यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां[5] प्रकाशते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानं[6] यत्। किंतु तदेव केवलमपरिमितविषयस्य ध्वनिव्यवहारस्य न प्रयोजकम्। व्यापकत्वात्। तथा[7] दर्शितभेदत्रयरूपं तात्पर्येण द्योत्यमानमभिप्रायरूपमनभिप्रायरूपं च सर्वमेव ध्वनिव्यवहारस्य प्रयोजकमिति यथोक्तव्यञ्जकत्वविशेषध्वनिलक्षणे नातिव्याप्तिर्न चाव्याप्तिः। तस्माद्वाक्यतत्त्वविदां मते न तावद्व्यञ्जकलक्षणः शाब्दो व्यापारः (न) विरोधी प्रत्युतानुगुण एव

---

**तेन सहेति**। अनियततया नैसर्गिकत्वाभावादिति भावः। **नान्तरीयकतयेति**। गामानयेति श्रुतेऽप्यभिप्राये व्यक्ते तदभिप्रायविशिष्टोऽर्थ एवाभिप्रेत आनयनादिक्रियायोग्यो न त्वभिप्रायमात्रेण किंचित्कृत्यमिति भावः। **विवक्षितत्वेनेति**। प्राधान्येनेत्यर्थः। **यत्त्विति**। ध्वन्युदाहरणेष्विति भावः। काव्यवाक्येभ्यो हि न नयनानयनाद्युपयोगिनी[1] प्रतीतिरभ्यर्थ्यते अपि तु प्रतीतिविश्रान्तिकारिणी। सा चाभिप्रायनिष्ठैव[2] नाभिप्रेतवस्तुपर्यवसाना। नन्वेवमभिप्रायस्यैव व्यङ्ग्यत्वात्त्रिविधं व्यङ्ग्यमिति यदुक्तं तत्कथमित्याह[3]। एवं मीमांसकानां नात्र विमतिर्युक्तेति प्रदर्श्य

---

१. 'वक्त्रभिप्रायविस्पष्टार्थप्रतिपादनेन' ख. २. 'यदिदं' ख. ३. 'तत्तु वाचक' क. 'यत्तु वाचक' ख. ४. 'न विवक्षितत्वेन। यस्य तु' क-ख. ५. 'शब्दार्थाभ्यामेव' क-ख. ६. 'प्रकाशमानं सत्' क-ख. ७. 'तत्तु यथा दर्शितं' क-ख.

---

१. 'नयनानुयानाद्यु' क, 'न नयनाद्यु' ग. २. 'निष्ठतयैव' क, 'निष्ठैव' ग. ३. 'इत्याशङ्क्याह' क-ख.

लक्ष्यते । परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति तैः सह किं विरोधाविरोधौ चिन्त्येते । कृत्रिमशब्दार्थसंबन्धवादिनां तु युक्तिविदामनुभवसिद्ध एवायं व्यञ्जकभावः शब्दानामर्थान्तराणामिव निर्विरोधश्चेति न प्रतिक्षेप्यपदवीमवतरति । वाचकत्वे हि तार्किकाणां विप्रतिपत्तयः प्रवर्तन्ताम् किमिदं

---

वैयाकरणानां नैवात्र सास्तीति दर्शयति—**परिनिश्चितेति** । परिनिश्चितं प्रमाणेन स्थापितं निरपभ्रंशं गलितभेदप्रपञ्चतया निरुपपत्त्यंशं विद्यार्थसंस्काररहितं शब्दाख्यं प्रकाशपरामर्शनस्वभावं ब्रह्म व्यापकत्वेन बृहद्विशेषशक्तिनिर्भरतया च बृंहितं विश्वनिर्माणशक्तीश्वरत्वाच्च बृंहणम् । **यै (तै) रिति** । एतदुक्तं भवति—वैयाकरणास्तावद्ब्रह्मपदेनान्यत्किंचिदिच्छन्ति तत्र का कथा वाचकत्वव्यञ्जकत्वयोः । अविद्यापदे तु तैरपि व्यापारान्तरमभ्युपगतमेव । एतच्च प्रथमोद्योते वितत्य निरूपितम् । एवं वाक्यविदां पदविदां चाविमतिविषयत्वं प्रदर्श्य प्रमाणतत्त्वविदां तार्किकाणामपि न युक्तात्र विमतिरिति दर्शयितुमाह—**कृत्रिमेति** । कृत्रिमः संकेतमात्रस्वभावः परिकल्पितः शब्दार्थयोः संबन्ध इति ये वदन्ति नैयायिकसौगतादयः । यथोक्तम्—न सामवायिकत्वाच्छब्दार्थप्रत्ययस्येति तथा शब्दार्थसंकेतितं प्राहुरिति । अर्थान्तराणामिति दीपादीनाम् । नन्वनुभवेन द्विचन्द्राद्यपि सिद्धं तच्च विमतिपदमित्याशङ्क्याह—**निर्विरोधश्चेति** । अविद्यमानो विरोधो यस्य विरोधो बाधकात्मको द्वितीयेन ज्ञानेन यस्य । तेनानुभवसिद्धश्चाबाधितश्चेत्यर्थः । अनुभवसिद्धं च न प्रतिक्षेप्यं यथा वाचकत्वम् । ननु तत्राप्येषां विमतिः । नैतत् । नहि वाचकत्वे सा विमतिः, अपि तु वाचकत्वस्य नैसर्गिकत्वकृत्रिमत्वादौ तदाह—**वाचकत्वे हीति** । नन्वेवं व्यञ्जकत्वस्यापि धर्मान्तरमुखेन विप्रतिपत्तिविषयतापि स्यादित्या-

---

१.'गलितप्रपञ्चतया विद्यारहितं शब्दार्थ' ग. २.'बृहद्विश्वनिर्भर' क-ख. ३.'शब्दः संकेतितानां' क-ख. ४. 'न च विमत्यापादनं' क-ख. ५. 'वा बोधात्मको' क-ख. ६. 'च प्रक्षेप्यं' क-ख.

स्वाभाविकं शब्दानामाहोस्वित्सामयिकमित्याद्याः। व्यञ्जकत्वे तु तत्पृष्ठभाविनि भावान्तरासाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनामवसरः। अलौकिके ह्यर्थे तार्किकाणामभिनिवेशाः प्रवर्तन्ते न तु लौकिके। न हि नीलमधुरादिष्वशेषलोकेन्द्रियगोचरे बाधारहिते तत्त्वे परस्परं विप्रतिपन्ना दृश्यन्ते। नहि बाधारहितं नीलं नीलमिति ब्रुवन्नपरेण प्रतिषिध्यते नैतन्नीलं पीतमेतदिति। तथैव व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतध्वनीनामशब्दरूपाणां च चेष्टादीनां यत्सर्वेषामनुभवसिद्धं तत्केनाभिह्नूयते (पह्नूयते?)। अशब्दमर्थं रमणीयं हि सूचयन्तो व्याहारास्तथाव्यापारनिबन्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते। तानुपहास्यतामात्मनः परिहरन्कथमभिसंदधीत सचेताः

---

शङ्काह—व्यञ्जकत्वे त्विति। भावान्तरेति। अक्षिनिकोचादेः सांकेतिकत्वं चक्षुरादि तस्यायोग्यतेति दृष्टा। काममस्तु संशयः शब्दस्याभिधेयप्रकाशने व्यञ्जकत्वं तु यादृशमेकरूपं भावान्तरेषु तादृगेव प्रकृतेऽपीति निश्चितैकरूपे कः संशयस्यावकाश इत्यर्थः। नैतन्नीलमिति नीले हि न विप्रतिपत्तिः। अपि तु प्राधानिकमिदं पारमाणवमिदं ज्ञानमात्रमिदमतितुच्छमिति तत्सृष्टौ लौकिक्य एव विप्रतिपत्तयः। **वाचकानामिति**। ध्वन्युदाहरणेष्विति भावः। **अशब्दमिति**। अभिधाव्यापारेणास्पष्टमित्यर्थः। **रमणीयमिति**। यद्गोप्यमानतयैव सुन्दरीभवतीत्यनेन ध्वन्यमानतायामसाधारणप्रतीतिलाभः प्रयोजनमुक्तम्। निबद्धाः प्रसिद्धाः। तानिति व्यवहारान् कः सचेता अभिसंदधीत। नाद्रियेतेत्यर्थः। लक्षणे शत्रादेशः। आत्मनः कर्मभूतस्य योपहसनीयता तस्याः परिहारेणोपलक्षितास्ताः परी-

---

१. 'हि' ग. २. 'निवेशः प्रवर्तते' ग. ३. 'ह्नूयते' ग. ४. 'व्यवहारास्तथा व्यवहारानिबद्धाश्चानिबद्धाश्च' क-ख. ५. 'इति संदधीत' ग.

---

१. 'कस्मानादियोग्यतेति' क-ख.

(ब्रूयात्) अस्त्यभिसंधानावसरे व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव तेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित् । अतश्चैतदवश्यमेव बोद्धव्यम् । यस्माद्वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वया प्रतिपादितम् । वक्त्रभिप्रायश्चानुमेयरूप एव । नन्वेवमपि यदि नाम स्यात्तत्किं नश्छिन्नम् । वाचकत्वगुणवृत्तिव्यतिरिक्तो व्यञ्जकलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिरभ्युपगतम् । तस्य चैवमपि न काचित्क्षतिः । तद्धि व्यञ्जकत्वं लिङ्गत्वमस्तु अन्यद्वा सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविषयत्वं च तस्यास्तीति नास्त्येवावयोर्विवादः । न पुनरयं परमार्थो यद्व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति । यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमात्तत्प्रकाशने शब्दानां लिङ्गत्वमेवेति तदेतद्यथास्माभिरभिहितं तद्विभज्य प्रतिपाद्यते श्रूयताम्—द्विविधो विषयः शब्दा-

---

जिहीर्षुरित्यर्थः । **अस्तीति** । व्यञ्जकत्वं नापह्नुते तत्त्वव्यतिरिक्तं न भवति । अपि तु लिङ्गलिङ्गिभाव एवायम् । **इदानीमेवेति** । जैमिनीयमतोपक्षेपे । **यदि नाम स्यादिति** । प्रौढवादितयाभ्युपगमेऽपि स्वपक्षस्तावन्न सिध्यतीति दर्शयति—**शब्देति** । शब्दस्य व्यापारः संधिविषयः शब्दव्यापारविषयः । अन्ये तु शब्दस्य यो व्यापारस्तस्य विषयो विशेष इत्याहुः । **न पुनरिति** । प्रदीपालोकादौ लिङ्गलिङ्गिभावे शून्योऽपि·········व्यङ्ग्यव्यञ्जकभावोऽस्तीति व्यङ्ग्यव्यञ्जकभावस्य लिङ्गलिङ्गिभावो व्यापक इति कथं तादात्म्यम् । **विषय इति** । शब्द उच्चरिते यावति प्रतिपत्तिस्तावान्विषय इत्युक्तः । तत्र शब्दप्रयुयुक्षा अर्थप्रतिपिपादयिषा चेत्युभय्यपि विवक्षानुमेया तावत् । यस्तु प्रतिपिपादयिषायां कर्मभूतोऽर्थस्तत्र

---

१. 'अतिसंधान' **ग.** २. 'भाविनः परः' **क-ख.** ३. 'अत्रोच्यते । नन्वेवमपि' **ग.** ४. 'व्यञ्जकत्व' **ख.**

---

१. 'प्रयुक्तप्रतिपिपादि' **ग.** २. 'विषया' **क-ख.**

नाम्—अनुमेयः प्रतिपाद्यश्च । तत्रानुमेयो विवक्षालक्षणः । विवक्षा च शब्दस्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा । तत्राद्या न शाब्दव्यवहाराङ्गम् । सा हि प्राणित्वमात्रप्रतिपत्तिफला । द्वितीया तु शब्दविशेषावधारणावसितव्यवहितापि शब्दकारणव्यवहारनिबन्धनम् । ते तु द्वे अप्यनुमेयो विषयः शब्दानाम् । प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः । स च द्विविधः वाच्यो व्यङ्ग्यश्च । प्रयोक्ता हि कदाचित्स्वशब्देनार्थं प्रकाशयितुं समीहते कदाचित्स्वशब्दानभिधेयत्वेन प्रयोजनापेक्षया कयाचित् । स तु द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते अपि तु कृत्रिमेणाकृत्रिमेण वा संबन्धान्तरेण । विवक्षाविषयत्वं हि तस्यार्थस्य शब्दैर्लिङ्गतया प्रतीयते न तु स्वरूपम् । यदि हि लिङ्गितया तत्र शब्दानां व्यवहारः स्यात्तच्छब्दार्थे सम्यङ् मिथ्यात्वादि विवादा एव न प्रवर्तेरन् । धूमादिलिङ्गानुमितानुमेयान्तरवत् । व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य संबन्धी भवत्येव । साक्षादसाक्षाद्भावो हि संबन्धस्याप्रयोजकः । वाच्यवाचकभावाश्रयत्वं च व्यञ्जकत्वस्य प्रागेव दर्शितम् ।

---

शब्दः कारणत्वेन विवक्षितः न त्वसावनुमेयः । तद्विषया हि प्रतिपिपादयिषैव केवलमनुमीयते । न च तत्र शब्दस्य करणत्वेनैव लिङ्गस्येतिकर्तव्यता पक्षधर्मग्रहणत्वादिका नास्ति अपि त्वन्यैव संकेतस्फुरणादिका । तन्न । तत्र शब्दो लिङ्गमितिकर्तव्यता च द्विधा एकयाभिधाव्यापारं करोति द्वितीयया व्यञ्जनाव्यापारम् । तदाह—**तत्रेत्यादिना** । **कयाचिदिति** । गोपनकृतसौन्दर्यादिलाभाभिसंधानादिकयेत्यर्थः । **शब्दार्थ इति** । अनुमानं हि निश्चयस्वरूपमेवेति भावः ।

---

१. 'सिताव्यवहितमपि' क-ख. २. 'निबन्धनी' क-ख. ३. 'शब्दात्' ग. ४. 'व्यापारः' क-ख. ५. 'व्यङ्ग्यव्यञ्जकत्वस्य' क-ख.



१. 'कारणत्वयोर्व' क; 'करणत्वयैव' ग. २. 'सरणादिका' क-ख.

तस्माद्वक्त्रभिप्रायरूपव्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः । तद्विषयीकृते तु प्रतिपाद्यतया । प्रतीयमाने तस्मिन्नभिप्रायरूपे[2] च वाचकत्वेनैव व्यापारः संबन्धान्तरेण वा । न तावद्वाचकत्वेन । यथोक्तं प्राक् । संबन्धान्तरेण व्यञ्जकत्वमेव । न च व्यञ्जकत्वं लिङ्गत्वरूपमेव । आलोकादिष्वन्यथा दृष्टत्वात् । तस्मात्प्रतिपाद्यो विषयः शब्दानां न लिङ्गत्वेन संबन्धी वाच्यवत् । यो हि लिङ्गत्वेन [3]संबन्धी यथा दर्शितो विषयः स[4] न वाच्यत्वेन प्रतीयते अपि त्वौपाधिकत्वेन । प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकानां लौकिकैरेव क्रियमाणानामभावः प्रसज्येतेति । एतच्चोक्तमेव । यथा च वाच्यविषये प्रमाणान्तरानुगमेन[5] सम्यक्त्वप्रतीतौ क्वचित्क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि न शब्दव्यापारविषयताहानिस्तद्वद्व्यङ्ग्यस्यापि । का[6]व्यविषये च व्यङ्ग्य[7]प्रतीतीनां [8]सत्यासत्यनिरूपणस्या-

---

**औपाधिकत्वेनेति** । वक्त्रिच्छा हि वाच्यादेरर्थस्य विशेषणत्वेन भाति । **प्रतिपाद्यस्येति** । अर्थाद्व्यङ्ग्यस्य । **लिङ्गित्व इति** । अनुमेयत्व इत्यर्थः । **लौकिकैरेवेति** । इच्छायां लोको न विप्रतिपद्यतेऽर्थे तु विप्रतिपत्तिमानेव । ननु यदा व्यङ्ग्योऽर्थः प्रतिपन्नस्तदा सत्यत्वनिश्चयोऽस्यानुमानादेव क्रियत इति पुनरप्यनुमेय एवासौ । मैवम् । वाच्यस्यापि हि[1] सत्यत्वनिश्चयोऽनुमानादेव । यदाहुः—'आप्तवादाविसंवादसामान्यादनुमानता' इति । न चैतावता वाच्यस्य प्रतीतिरानुमानिकी किं तु तद्गतस्य ततोऽधिकस्य सत्यत्वस्य तद्व्यङ्ग्यत्वेऽपि भविष्यति । एतदाह— **यथा चेत्यादिना** । एतच्चाभ्युपगम्योक्तं न त्वनेन प्रयोजनमिति[2] । **काव्यविषये चेति** । **अप्रयोजकमिति** । नहि तेषां वाक्यानामग्निष्टोमादिवाक्य-

---

१. 'रूप एव व्यङ्ग्यो' क-ख. २. 'अभिप्रायरूपेऽनभिप्रायरूपे वा' क-ख. ३. 'तेषां संबन्धी' क-ख. ४. 'असौ' ग. ५. 'गमनेन' क-ख. ६. 'कार्ये' ग. ७. 'वाच्यव्यङ्ग्य' क-ख. ८. 'सत्यत्वासत्यत्वनिरूपणाप्रयोजक' ग.

---

१. 'हीत्यस्य सत्यनिश्चयो' ग. २. '...' क-ख.

प्रयोजकत्वमेवेति तत्र प्रमाणान्तरव्यापारपरीक्षोपहासायैव संपद्यते । तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शंक्यते वक्तुम् । यत्त्वनुमेयरूपं व्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वं तद्ध्वनिव्यवहारस्याप्रयोजकम् । अपि तु व्यञ्जकत्वलक्षणः शब्दानां व्यापार औत्पत्तिकशब्दार्थसंबन्धवादिनाप्यभ्युपगन्तव्य इति प्रदर्शनार्थमुपन्यस्तम् । तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गत्वेन कदाचिद्रूपान्तरेण शब्दानां वाचकानामवाचकानां च सर्ववादिभिरप्रतिक्षेप्यमित्ययमस्माभिर्यत्न आरब्धः । तदेवं गुणवृत्तिवाचकत्वादिभ्यः शब्दप्रकारेभ्यो नियमेनैव तावद्विलक्षणं व्य-

---

वत्सत्यार्थप्रतिपादनद्वारेण प्रवर्तकत्वाय प्रामाण्यमन्विष्यते । प्रतीतिमात्रपर्यवसायित्वात् । प्रतीतेरेव चालौकिकचमत्काररूपाया व्युत्पत्त्यङ्गत्वात् । एतच्चोक्तं वितत्य प्राक् । **उपहासायैवेति** । नायं सहृदयः केवलं शुष्कतर्कोपक्रमकर्कशहृदयः प्रतीतिं परामष्टुं नालमित्येष उपहासः । नन्वेवं तर्हि मा भूद्यत्र यत्र व्यञ्जकता तत्र तत्रानुमानत्वम्, यत्र यत्रानुमानत्वं तत्र तत्र व्यञ्जकत्वमिति कथमपह्नूयत इत्याशङ्क्याह—**यत्त्वनुमेयेति** । तद्व्यञ्जकं न ध्वनिलक्षणम् । अभिप्रायव्यतिरिक्तविषयव्यापारादिति भावः । नन्वभिप्रायविषयं यद्व्यञ्जकत्वमनुमानैकयोगक्षेमं तच्चेन्न प्रयोजनं ध्वनिव्यवहारस्य तत्किमर्थं तत्पूर्वमुपक्षिप्तमित्याशङ्क्याह—**अपि त्विति** । एतदेव संक्षिप्य निरूपयति—**तद्धीति** । यत्र हि क्वचिदनुमानेनाभिप्रायादौ क्वचित्प्रत्यक्षेण दीपालोकादौ क्वचित्कारणेन गीतध्वन्यादौ क्वचिदभिधया विवक्षितान्यपरवाच्यादौ क्वचिद्गुणवृत्त्या विवक्षितवाच्येऽनुगृह्यमाणं व्यञ्जकत्वं दृष्टं तत एव तेभ्यः सर्वेभ्यो विलक्षणमस्य रूपं (न) सिध्यति । तदाह—**रूपान्तरेणेति** । ननु प्रसिद्धस्य किमर्थं रूपसंकोचः क्रियते । अभिधाव्यापारगुणवृत्त्यादेस्तस्यैव सामग्र्यन्तरोपनिपाताद्यद्विशिष्टं रूपं तदेव व्यक्तमुच्यतामित्याशङ्क्याह—

---

१. 'शक्यं' क-ख.

---

१. 'तदपीति' ग. २. 'क्वचिदभिधेयादौ क्वचिद्विवक्षितान्य' क-ख. ३. 'व्यञ्जकत्वं' क-ख.

ङ्गकत्वम् । तदन्तःपातित्वेनापि[1] तस्य न ग्रहादभिधीयमानमेतद्विशेष्यस्य ध्वनेर्यत्प्रकाशनं विप्रतिपत्तिनिरासाय सहृदयव्युत्पत्तये वा तत्क्रियमाणमेनतिसंधेयमेव[2] । न हि सामान्यमात्रलक्षणेनोपयोगिविशेषलक्षणानां प्रतिक्षेपः शक्यः कर्तुम् । एवं हि सति सत्तामात्रलक्षणे कृते सकलसद्वस्तुलक्षणानां पौनरुक्त्यप्रसङ्गः । तदेवम्—

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः[3] ।
ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम् ॥ ३४ ॥
प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥ ३५ ॥

---

**तदन्तरिति** । (तदन्तःपातित्वेऽपीति) न वयं संज्ञाविशेषान्निषेत्स्याम इति भावः । विप्रतिपत्तिस्ताद्दृग्विशेषो नास्तीति । व्युत्पत्तिः संशयाज्ञाननिरासः[1] । **न हीति** । गुणवृत्तिवाचकादयः सामान्यलक्षणम् उपयोगिषु विशेषेषु यानि लक्षणानि तेषाम् । उपयोगपदेन काकदन्तादीनां व्युदासः । **एवं हीति** । सामान्यत्रिपदार्थसङ्केतितसत्तेत्यनेनैव द्रव्यगुणकर्मणां लक्षितत्वाच्छ्रुतिस्मृत्यायुर्वेदधनुर्वेदप्रभृतीनां सकललोकयात्रोपयोगिनामनारम्भः स्यादिति भावः । विमतिविषयत्वे हेतुरविदितसतत्त्व इति । अतएवावमर्शनादत्र[2] न कस्यचिद्विमतिरेतस्माल्लक्षणात्प्रभृतीति प्रतिपादयितुमासीदित्युक्तम् । एवं यत्किंचिद्ध्वनेरात्मीयरूपं भेदोपभेदसहितं यच्च व्यञ्जकभेदमुखेन रूपं तत्सर्वं प्रतिपाद्य प्राणभूतं व्यङ्ग्यव्यञ्जकभावमेकप्रघट्टकेन शिष्यबुद्धौ विनिवेशयितुं[3] व्यञ्जकवादस्थानं रचितमिति ध्वनिं प्रति यद्वक्तव्यं तदुक्तमेव । अधुना तु गुणीभूतोऽप्ययं व्यङ्ग्यः कविवाचः पवित्रयतीत्यमुना द्वारेण तस्यैवात्मत्वं समर्थयितुमाह[4]—**प्रकार इति** । व्यङ्ग्येनान्वयो वाच्यस्योपकार इत्यर्थः ।

---

१. 'पातित्वेऽपि तस्य ग्रहादभिधेयमानं तद्विशेषस्य ध्वनेः' क-ख. २. 'अभिसंधेयमेव' क-ख. ३. 'अभिप्रायविषय' क-ख.

---

१. 'ज्ञान' क-ख. २. 'अत एवाधुनात्र' क-ख. ३. 'शिष्यबुद्धिषु निवे' क-ख. ४. 'उपसर्पयितुं' क-ख.

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम् । त[1]स्यैव तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः प्रकल्प्यते । तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता । यथा—

'लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन चारुत्वापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता ।

---

**प्रतिपादित इति** । 'प्रतीयमानं पुनरन्यदेव' इत्यत्रोक्तमिति । 'यत्रार्थः शब्दो वा' इत्यत्रान्तरे वाच्यं च वस्त्वादित्रयं तत्र वस्तुनो व्यङ्ग्यस्य ये भेदा उक्तास्तेषां क्रमेण गुणभावं दर्शयति—**तत्रेति** । एतदुदाहरति—**यथेति** । अभिलाषगर्भेयं कस्यचित्तरुणस्योक्तिः । अत्र सिन्धुशब्देन परिपूर्णता उत्पलशब्देन कटाक्षच्छटाः शशिशब्देन वदनं द्विरदकुम्भतटीशब्देन स्तनयुगलं कदलिकाण्डशब्देनोरुयुगलं मृणालदण्डशब्देन दोर्युग्ममिति ध्वन्यते । त[1]त्र चैषां स्वार्थस्य सर्वथानुपपत्तेर[2]न्धशब्दोक्तेन न्यायेन तिरस्कृतवाच्यत्वम् । स च प्रतीयमानोऽप्यर्थविशेषः 'अपरैव हि केयं' इत्युक्तिगर्भीकृते वाच्येंऽशे चारुत्वच्छायां विधत्ते । वाच्यस्यैव स्वात्मोन्मज्जनया निमज्जितव्यङ्ग्यजातस्य सुन्दरत्वेनाभासमानत्वात् । सुन्दरत्वे चास्यासंभाव्यमानसमागमसकललोक[3]सारभूतकुवलयादिभाववर्गस्य सुभगैकाधिकरणविश्रान्तलक्षणशब्दसमुच्चयरूपतया विस्मयविभावप्राप्तिपुरस्कारेण व्यङ्ग्यार्थोपस्मृतस्य तथाविध······वाच्यरूपतामज्जनेनाभिलाषादिविभावत्वात् । अत एवेयं········· । यद्यपि वाच्यस्य

---

१. 'तस्य च' ग. २. 'काव्यचारुत्वा' क-ख.

---

१. 'तत्र चेष्टार्थस्य सर्वथा' क-ख. २. '[illegible]' ग. ३. क-ख-पुस्तकयोः 'सारभूत' इत्यारभ्य 'अत एवेयं···' इत्यन्तः पाठो नास्ति.

यथोदाहृतम् 'अनुरागवती संध्या' इत्येवमादि । तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणभावः । यथोदाहृतम्—'संकेतकालमनसं' इत्यादि। रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदलंकारो दर्शितः । तत्र च तेषामाधिकारिकवाक्यापेक्षया गुणीभावो विवाहप्रवृत्तभृत्यानुयायिराजवत् । व्यङ्ग्यालंकारस्य गुणीभावो दीपकादिर्विषयः । तथा—

प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः ।
ये च तेषु प्रकारोऽयमेवं योज्यः सुमेधसा ॥ ३६ ॥

---

प्राधान्येऽपि रसध्वनौ तस्य गुणतेति सर्वत्र गुणीभूतव्यङ्ग्यप्रकारो मन्तव्यः । अत एव ध्वनेरात्मत्वमित्युक्तचरं बहुशः । अन्ये तु जलक्रीडावतीर्णतरुणीजनलावण्यद्रवसुन्दरीकृतनदीविषयेयमुक्तिरिति सहृदयाः । तत्रापि चोक्तप्रकारेणैव योजना । यदि वा नदीसंनिधौ स्नानावतीर्णयुवतिविषया । सर्वथा तावद्विस्मयमुखेनेयति व्यापाराद्गुणता व्यङ्ग्यस्य । उदाहृतमिति । एतच्च प्रथमोद्योत एव निरूपितम् । अनुरागशब्दस्य चाभिलाषे तदुपरक्तत्वलक्षणया लावण्यशब्दवत्प्रवृत्तिरित्यभिप्रायेणात्यन्ततिरस्कृतवाच्यत्वमुक्तम् । तस्यैवेति वस्तुमात्रस्य । रसादीति । आदिशब्देन भावादयः । रसवच्छब्देन प्रेयस्विप्रभृतयोऽलंकारा उपलक्षिताः । नन्वेवं प्रधानभूतस्य रसादेः कथं गुणीभावः, गुणीभावे वा कथमचारुत्वं न स्यादित्याशङ्क्य प्रत्युत सुन्दरता भवतीति प्रसिद्धदृष्टान्तमुखेन दर्शयति—तत्र चेति । रसवदाद्यलंकारविषये । एवं वस्तुनो रसादेश्च गुणीभावं प्रदर्श्यालंकारात्मनोऽपि तृतीयस्य व्यङ्ग्यप्रकारस्य तं दर्शयति—व्यङ्ग्यालंकारस्येति । उपमादेः । एवं प्रकारत्रयस्यापि गुणीभाव·········बहुतरलक्ष्यव्यापकतास्येति दर्शयितुमाह—तथेति । प्रसन्नानि प्रसादगुणयोगाद्गम्भीराणि च व्यङ्ग्यार्थापेक्षकत्वत्पदानि येषु । सुखावहा इति चारुत्वहेतुः । तत्रायमेव प्रकार इति भावः । सुमेधसेति । यस्त्वेतं प्रकारं तत्र योजयितुं न शक्तः स परमलीकसहृदयभावनामुकुलितलोच-

---

१. 'रसवदलंकारविषयः प्राक्प्रदर्शितः' क-ख. २. 'तत्र च रसानामाधि' क ख.

---

१. 'ततः' क-ख. २. क-ख-पुस्तकयोः 'अलंकारात्मनो' इत्यारभ्य 'गुणीभाव······' इत्यन्तं पाठत्रुटितः.

ये चैते परिमितस्वरूपा अपि [1]प्रकाशमानास्तथा रमणीयाः सन्तो विवेकिनां सुखावहाः काव्यबन्धास्तेषु सर्वेष्वेवायं प्रकारो गुणीभूतव्यङ्ग्यो नाम योजनीयः । यथा—

'लच्छी दुहिदा जामाउओ हरी तंस घरिणिआ गङ्गा ।
आमिअमिअङ्का अ सुआ अहो कुडुम्बं महोअहिणो ॥'

**वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।**
**प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ ३७ ॥**

वाच्यालंकारवर्गोऽयं [3]व्यङ्ग्यांशस्यालंकारस्य वस्तुमात्रस्य यथायोगमनुगमे सति च्छायातिशयं बिभ्रल्लक्षणकारैरेकदेशेन दर्शितः । स तु

---

नोक्त्योपहसनीयः स्यादिति भावः । लक्ष्मीः सकलजनाभिलाषभूमिर्दुहिता । जामाता हरिः । यः समस्तभोगापवर्गदानसततोद्यमी । तथा गृहिणी गङ्गा । यस्याः समभिलषणीये सर्वस्मिन्वस्तुन्यनुपहत उपायभावः । अमृतमृगाङ्कौ च सुतौ । अमृतमिह वारुणी । तेन गङ्गास्नानहरिचरणाराधनाद्युपायशतलब्धाया लक्ष्म्याश्चन्द्रोदयपानगोष्ठ्युपभोगलक्षणं मुख्यं फलमिति त्रैलोक्यसारभूतता प्रतीयमाना सती अहो कुटुम्बं महोदधेरित्यहोशब्दाच्च गुणीभावम[1]भ्येति । एवं नि[2]रलंकारेषूत्तानतायां तुच्छतयैव भासमानममुनान्तःसारेण काव्यं पवित्रीकृतमित्युक्त्वालंकारस्याप्यनेनैव च रम्यत्वमिति दर्शयति—**वाच्येति** । अंशत्वं [3]गुणत्वमत्र । **एकदेशेनेति** । एकदेशविवर्तिरूपकमनेन दर्शितम् । एकदेशविवर्तिरूपके 'राजहंसैरवीज्यन्त शरदीव सरो नृपाः' इत्यत्र हंसानां [4]यच्चारुत्वं प्रतीयमानं·······प्राप्तमलंकारैर्यावदेव दर्शितं······तावदमुना द्वारेण सूचितोऽयं प्रकार इत्यर्थः । अन्ये त्वेकदेशेन वाच्यविभागवैचित्र्यमात्रेणात्यनुद्भिन्नमेव व्याचचक्षिरे । व्यङ्ग्यं च यदलंकारान्तरं

---

१. 'प्रकाशमानविततार्थं' क-ख. २. 'पूआ' क-ख. ३. 'व्यङ्ग्यस्यांशस्यालंकारस्य वा यथायोगं' ग.

---

१. 'अनुभवति' क-ख. २. 'निरलंकारं' क-ख. ३. 'गुणमात्रम्' ग. ४. क-ख. पुस्तकयोः 'यच्चारुत्वं' इत्यारभ्य 'दर्शितं······' इत्यन्तः पाठो नास्ति.

तथारूपः प्रायेण सर्व एव परीक्ष्यमाणो लक्ष्ये निरीक्ष्यते । तथा हि दीपकसमासोक्त्यादिवदन्येऽप्यलंकाराः प्रायेण व्यङ्ग्यालंकारवस्त्वन्तर-संस्पर्शिनो दृश्यन्ते । यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालंकारेषु शक्यक्रिया । कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत् । भामहेनाप्यतिशयोक्तिलक्षणे यदुक्तम्—

'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥' इति ।

---

च वस्त्वन्तरं च तत्स्पृशत एवात्मनः संस्काराय श्लिष्यन्तीति ते तथा । महाकविभिरिति कालिदासादिभिः । काव्यशोभां पुष्यतीति यदुक्तं तत्र हेतुमाह—**कथं हीति** । हिशब्दो हेतौ । अतिशययोगिता कथं नोत्कर्षमावहेत् । काव्ये नास्त्येवासौ प्रकार इत्यर्थः । स्वविषये यदौचित्यं तेन चेद्धृदयस्थितेन तामतिशयोक्तिं कविः करोति । यथा भट्टेन्दुराजस्य—'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् । दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥' अत्र हि भगवतो मन्मथवपुषः सौभाग्यविषयः संभाव्यत एवायमतिशय इति तत्काव्ये लोकोत्तरैव शोभोल्लसति । अनौचित्येन तु शोभा लीयत एव । यथा—'अल्पं निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥' इति । नन्वतिशयोक्तिः सर्वालंकारेषु व्यङ्ग्यतयान्तर्लीनैवास्त इति यदुक्तं तत्कथम् । यतो भामहोतिशयोक्तिं सर्वालंकारसामान्यरूपामवादीत् । न च सामान्यं शब्दविशेषप्रतीतेः पृथग्भूततया पश्चात्तनत्वेन चकास्तीति कथमस्य व्यङ्ग्यत्वमित्याशङ्क्याह—**भामहेनेति** । भामहेन यदुक्तं तत्राप्ययमेवार्थोऽवगन्तव्य इति दूरेण संबन्धः । किं तदुक्तम्—**सैषेति** । यातिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिर-

---

१. 'व्यङ्ग्यालंकारान्तरसंस्पर्शि' क-ख.

---

१. 'स्पृशन्ति स्वात्मनः' क-ख. २. 'योग्यता' ग. ३. 'केनचित्' क-ख. ४. 'दून' क-ख. ५. 'दृष्ट' क-ख. ६. 'सामान्यशब्दात्' क-ख.

तत्रातिशयोक्तिर्यमलंकारमधितिष्ठति कविप्रतिभावशात्तस्य चारुत्वातिशययोगोऽन्यस्य त्वलंकारमात्रतैवेति सर्वालंकारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात्सैवं सर्वालंकाररूपेत्ययमेवार्थोऽवगन्तव्यः । तस्याश्चालंकारान्तरसंकीर्णत्वं कदाचिद्वाच्यत्वेन कदाचिद्व्यङ्ग्यत्वेन । व्यङ्ग्य-

---

लंकारप्रकारः सर्वः । 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः' इति वचनात् । शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानमित्ययमेवासावलंकारस्यालंकारान्तरभावः । लोकोत्तरेण चैवातिशयः । तेनातिशयोक्तिः सर्वालंकारसामान्यम् । तथा ह्यनयातिशयोक्त्यार्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते । तथा प्रमदोद्यानादिर्विभावतां नीयते विशेषेण च भाव्यते रसमयीक्रियत इति । (तावतैवोक्तं [1]कोऽसावित्याह—**अभेदोपचारात्सैवालंकाररूपेति**।) उपचारे प्रयोजनमाह—अतिशयोक्तिरित्यादिना अलंकारमात्रतैवेत्यन्तेन । मुख्यार्थबाधोऽप्यत्रैव दर्शितः कविप्रतिभावशादित्यादिना । अयं भावः—यदि तावदतिशयोक्तेः सर्वालंकारेषु सामान्यरूपता सा तर्हि तादात्म्यपर्यवसायिनीति तद्व्यतिरिक्तो नैवालंकारो दृश्यत इति कविप्रतिभानं न तत्रापेक्षणीयं स्यात् । अलंकारमात्रं च न किंचिद्दृश्यते। अथ सा काव्यजीवितत्वेन तु विवक्षिता । तथाप्यनौचित्येनापि निबध्यमाना तथा स्यात् । औचित्यवती जीवितमिति चेत् औचित्यनिबन्धनं रसभावादि मुक्त्वा नान्यत्किंचिदस्तीति तदेवा[2]न्तर्भासि मुख्यं जीवितमित्यभ्युपगन्तव्यं न तु सा । एतेन यदाहुः केचित्, औचित्यघटितसुन्दरशब्दार्थमये काव्ये किमन्येन ध्वनिनात्मभूतेन कल्पितेनेति स्ववचनमेव ध्वनिसद्भावाभ्युपगमसाक्षिभूतं मन्यमानाः प्रत्युक्ताः । तस्मान्मुख्यार्थबाधादुपचारे च निमित्तप्रयोजनसद्भावादभेदोपचार एवायम् । ततश्चोपपन्नमतिशयोक्तिर्व्यङ्ग्यत्वमिति यदुक्तम[3]लंकाराणां स्वीकरणं तदेव त्रिधा विभजते—**तस्याश्चेति** । **वाच्यत्वेनेति** । सापि वाच्या भवति ।

---

१. 'सैवालंकार' क-ख.

---



१. 'कोऽसावर्थः' क-ख. २. 'अन्तर्यामि' ग. ३. 'अलंकारान्तर' क-ख.

त्वमपि कदाचित्प्राधान्येन कदाचिद्गुणभावेन । तत्राद्ये पक्षे वाच्यालंकारमार्गः । द्वितीये तु ध्वनावन्तर्भावः । तृतीये तु गुणीभूतव्यङ्ग्यरूपता । अयं च प्रकारोऽन्येषामप्यलंकाराणामस्ति तेषां न सर्वविषयः । अतिशयोक्तेस्तु सर्वालंकारविषयोऽपि संभवतीत्ययं विशेषः । येषु चालंकारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भः यथा रूपकोपमातुल्ययोगितानिदर्शनादिषु तेषु गम्यमानधर्ममुखेनैव यत्सादृश्यं तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयः । समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानाद्गुणीभूतव्यङ्ग्यता निर्विवादैव । तत्र च गुणीभूतव्यङ्ग्यतायामलंकाराणां केषांचिदलंकारविशेषगर्भतायां नियमः । यथा व्याजस्तुतेः प्रेयोलंकारगर्भत्वे । केषांचिदलंकारमात्रगर्भतायां नियमः

---

यथा—'अपरैव हि केयमत्र' इति । अत्र रूपकेऽप्यतिशयशब्दस्पर्श[1] एव । अस्य त्रैविध्यस्य विषयविभागमाह—**तत्रेति** । तेषु प्रकारेषु मध्ये य आद्यः प्रकारस्तस्मिन् । नन्वतिशयोक्तिरेव चेदेवंभूता तत्किमपेक्षया प्रथमं तावदतिक्रमः सूचित इत्याशङ्क्याह—**अयं चेति** । योऽतिशयोक्तौ[2] निरूपितोऽलंकारान्तरेऽप्यनुप्रवेशात्मकः । नन्वेवमपि प्रथममिति केनातिशयेनोक्तमित्याशङ्क्याह—**तेषामिति** । एवमलंकारेषु तावद्व्यङ्ग्यस्पर्शोऽस्तीत्युक्त्वा तत्र किं व्यङ्ग्यत्वेन भातीति विभागं व्युत्पादयति—**येषु चेति** । रूपकादीनां पूर्वमेवोक्तं स्वरूपं, निदर्शनायास्तु क्रियैव तदर्थस्य विशिष्टस्योपदर्शनं दृष्टा निदर्शनेति । उदाहरणम्—'अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति । उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥' **प्रेयोलंकारेति** । चाटुपर्यवसायित्वात्तस्याः । सा चोदाहृतैव द्वितीयोद्द्योतेऽस्माभिः । उपमागर्भत्व इत्युपमाशब्देन सर्व एव तद्विशेषा रूपकादयः । अथ चौपम्यं सर्वसामान्यमिति

---

१. 'स्थापनात्' क-ख.

---

१ 'स्पृश' ख; 'स्पृशा' ग. २. 'अतिशयोक्तः' ग.

यथा संदेहादीनामुपमागर्भत्वे । केषांचिदलंकाराणां परस्परगर्भतापि संभवति । यथा दीपकोपमयोः । तत्र दीपकमुपमागर्भत्वेन प्रसिद्धम्। उपमापि कदाचिद्दीपकच्छायानुयायिनी । यथा मालोपमा । तथा हि 'प्रभामहत्या शिखयेव दीपः' इत्यादौ स्फुटैव दीपकच्छाया लक्ष्यते तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलंकाराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः । गुणीभूतव्यङ्ग्यत्वं च तेषां तथाजातीयानां सर्वेषामेवोक्तानुक्तानां सामान्यम् । तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ति । एकैकस्य रूपविशेषकथनेन तु सामान्यलक्षणरहि-

---

तेन सर्वमाक्षिप्तमेव । **स्फुटैवेति** । 'तया स पूतश्च विभूषितश्च' इत्येकेन दीपस्थानेन दीपनाद्दीपकमत्रानुप्रविष्टम् । प्रदीपसमानतया साधारणधर्माभिधानं ह्येतदुपमायां स्पष्टेनाभिधाप्रकारेणैव । **तथाजातीयानामिति** । चारुत्वातिशयवतामित्यर्थः । सुलक्षिता इति यत्किलैषां तद्विनिर्मुक्तं रूपं न तत्काव्येऽभ्यर्थनीयम् । उपमा हि 'यथा गौस्तथा गवयः' इति । 'गौर्वाहीकः' इति । श्लेषः द्विर्वचने तन्त्रात्मकः । यथासंख्यं सूचीमालान्तरेति (?) । दीपकं 'गामश्वम्' इति । संदेहः 'स्थाणुर्वा स्यात्' इति । अपह्नुतिः 'नेदं रजतम्' इति । पर्यायोक्तं 'पीनो दिवा नात्ति' इति । तुल्ययोगिता 'स्थाघ्वोरिच्च' इति । अप्रस्तुतप्रशंसा सर्वाणि ज्ञापकानि । यथा 'पदसंज्ञायामन्तर्वचनम् । अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न' इति । आक्षेपश्च उभयत्रविभाषासु विकल्पात्मकविशेषाभिधित्सया इष्टस्यापि विधेः पूर्वं निषेधनात्प्रतिषेधेन समीकृत इति न्यायात् । अतिशयोक्तिः 'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितवानर्कवर्त्मागृह्णात्' इति । एवमन्यत् । न चैवमादि काव्योपयोगीति । गुणीभूतव्यङ्ग्यतैवात्रालंकारतायां मर्मभूताल्लक्षितात्सुष्ठु लक्षयति । तथा सुपूर्णं कृत्वा लक्षिताः संगृहीता भवन्ति । अन्यथा त्ववश्यमव्याप्तिर्भवेत् । तदाह—**एकैकस्येति** । न चातिशयोक्तिवक्रोक्त्युपमादीनां सामान्यरूपत्वं चारु-

---

१. 'काचित्' ग. २. 'इत्यादौ विषये' ग. ३. 'उपलक्ष्यते' क-ख. ४. 'रूपकाद्यलंकाराः' ग. ५. 'उक्तानां' ख. 'उक्तानुक्तानां' ग.



---

१ 'प्रदीयमानतया' ग. २. 'पदम्' क-ख.

तेन प्रतिपादपाठेनैव शब्दा न शक्यन्ते तत्त्वतो निर्ज्ञातुम्। आनन्त्यात्। अनन्ता हि वाग्विकल्पास्तत्प्रकारा एव चालंकाराः। गुणीभूतव्यङ्ग्यस्य च प्रकारान्तरेणापि व्यङ्ग्यार्थानुगमलक्षणेव विषयत्वमस्त्येव। तदयं ध्वनिनिष्पन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः। सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारो यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम्। तदिदं[1] काव्यरहस्यं परमिति सूरिभिर्भावनीयम्[2]।

---

ताहीनानामुपपद्यते। चारुता चैतदायत्तेत्येतदेव गुणीभूतव्यङ्ग्यत्वसामान्यलक्षणम्। व्यङ्ग्यस्य च चारुत्वं रसाभिव्यक्तियोग्यतात्मकम्, रसस्य स्वात्मनैव विश्रान्तिधामस्तदात्मकत्वमिति नानवस्था काचिदिति तात्पर्यम्। **अनन्ता हीति।** प्रथमोद्द्योत एव व्याख्यातमेतत् 'वाग्विकल्पानामानन्त्यात्' इत्यत्रान्तरे। ननु सर्वेष्वलंकारेषु नालंकारान्तरं व्यङ्ग्यं चकास्ति। तत्कथं गुणीभूतव्यङ्ग्येन लक्षितेन सर्वेषां संग्रहः। मैवम्[3]। वस्तुमात्रं वा रसो वा व्यङ्ग्यं यद्गुणीभूतं भविष्यति तदेवाह—**गुणीभूतेति। गुणीभूतव्यङ्ग्यस्य चेति।** प्रकारान्तरेण वस्तुरसात्मनोपलक्षितस्य। यदि वेत्थमवतरणिका—ननु गुणीभूतव्यङ्ग्ये नालंकारा यदि लक्षितास्तर्हि लक्षणं वक्तव्यं किमिति नोक्तमित्याशङ्क्याह—**गुणीभूतेति।** विषयत्वमिति[4] यावत्। तेन लक्षणीयत्वं ध्वनिव्यतिरिक्तो यः प्रकारो व्यङ्ग्येनार्थानुगमो नाम तदेव लक्षणं तेनेत्यर्थः। व्यङ्ग्ये लक्षिते तद्गुणीभावे च निरूपिते किमन्यदस्य लक्षणं क्रियतामिति तात्पर्यम्। एवं 'काव्यस्यात्मा ध्वनिः' इति निर्वाह्योपसंहरति[5]—तदयमित्यादिना सौभाग्यमित्यन्तेन। यत्प्रागुक्तं सकलसत्कविकाव्योपनिषद्भूतमिति तन्न प्रतारणमात्रमर्थवादरूपं मन्तव्यमिति दर्शयितुं तदिदमिति। मुख्या भूषेत्यलंकृतिभृताम्। अपि शब्दालंकारशून्यानामपीत्यर्थः। प्रतीयमानकृता छाया शोभा सा च लज्जासदृशी गोपनासारसौन्दर्यप्राण-

---

१. 'तद्धि' ग. २. 'भावनीयमिति' क-ख.

१. 'व्यङ्ग्यत्वं च' क-ख. २. 'चैव' क-ख. ३. 'सह' ग. ४. 'विषयत्वमिति लक्षणीयत्वप्रकारो व्यङ्ग्येनार्थेनानुगमो नाम' क-ख. ५. 'निर्धार्य' क; 'निर्धार्य' ख.

मुख्या महाकविगिरामलंकृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥ ३८ ॥

अनया सुप्रसिद्धोऽप्यर्थः किमपि कामनीयकमानीयते । तद्यथा—

'विस्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्याः केऽपि लीलाविलासाः ।
अक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते संततं भावनीयाः ॥'

इत्यत्र केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानमक्लिष्टमनन्तमर्पयता का छाया नोपपादिता ।

---

त्वम् । अलंकारधारिणीनामपि नायिकानां लज्जा मुख्यं भूषणम् । प्रतीयमानच्छाया अन्तर्मदनोद्भिदजहृदयसौन्दर्यरूपा या । लज्जा ह्यन्तरुद्भिन्नमान्मथविकारानुगोपयिषारूपा मदनविजृम्भैव । वीतरागाणां यतीनां कौपीनापसारणेऽपि त्रपाकलङ्कादर्शनात् । तथा हि कस्यापि कवेः—'कुरङ्गीवाङ्गानि—' इत्यादिश्लोकः । तथा प्रतीयमानस्य प्रियतमाभिलाषानुनाथनप्रभृती(?)छाया कान्तिः । यथा शृङ्गाररसतरङ्गिणी हि लज्जावरुद्धा निर्भरतया तांस्तान्विलासान्नेत्रगात्रविकारपुरःसरान्प्रसूत इति गोपनासारसौन्दर्यलज्जाविजृम्भितमेतदिति भावः । **विस्रम्भेति** । मन्मथाचार्येण त्रिभुवनवन्द्यमानशासनेन अत एव लज्जा साध्वसध्वंसिना दत्ता येयमलङ्घनीयाज्ञा तदनुष्ठानेऽवश्यकर्तव्ये सति साध्वसलज्जात्यागेन संभोगकालोपनताः मुग्धाक्ष्या इति अकृतसंभोगपरिभावनोचितदृष्टिप्रसरचित्ररसपवित्रिता येऽन्ये विलासा गात्रनेत्रविकारा अत एवाक्षुण्णा नवनवरूपतया प्रतिक्षणमुन्मिषन्तस्ते केवलेन नान्यत्र व्यग्रेणैकान्तावस्थानपूर्वं सर्वेन्द्रियोपसंहारेण भावयितुं शक्या अर्हा उचिताः । यतः केनापि नान्येनोपायेन शक्यनिरूपणाः । गुणीभूतव्यङ्ग्यस्योदाह-

---

१. 'अलंकार' ग. २. 'काव्यार्थः' क-ख. ३. 'प्रतीयमानत्वं' क-ख.

---

१. 'परम्परारूपान्' ग. २. 'विस्रम्भ' क-ख. ३. 'प्रसरपवित्रिता' ग. ४. 'चित्तरस' ख. ५. 'विहाराः' ग.

**अर्थान्तरगतिः काका या चैषा परिदृश्यते ।**
**सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥ ३९ ॥**

या चैषा काका क्वचिदर्थान्तरप्रतीतिर्दृश्यते सा व्यङ्ग्यस्यार्थस्य गुणीभावे सति गुणीभूतव्यङ्ग्यलक्षणं काव्यप्रभेदमाश्रयते । यथा—'स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः' । यथा वा—

'आम असइओ ओरम पइव्वए ण तुएँ मलिणिअं सीलम् ।
किं उण जणस्स जाअ व्व चन्दिलं तं ण कामेमो ॥'

---

रणा(प्रकारा)न्तरमप्याह—अर्थान्तरेति । 'कक लौल्ये' इत्यस्य धातोः काकुशब्दः । तत्र हि साकाङ्क्षनिराकाङ्क्षक्रमेण पठ्यमानोऽसौ शब्दः.....................लौल्यमस्याभिधीयते । यदि वा ईषदर्थे कुशब्दस्तस्य कादेशः । तेन हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुः । तया तत्रार्थान्तरगतिः स काव्यविशेष इमं गुणीभूतव्यङ्ग्यप्रकारमाश्रितः । अत्र हेतुर्व्यङ्ग्यस्य तत्र गुणीभाव एव भवति । अर्थान्तरगतिशब्देनात्र काव्यमेवोच्यते । ततः प्रतीतेरत्र गुणीभूतव्यङ्ग्यत्वं वक्तव्यं प्रतीतिद्वारेण वा काव्यस्य निरूपितम् । अन्ये त्वाहुः—व्यङ्ग्यस्य गुणीभावेऽयं प्रकारः अन्यथा तु तत्रापि ध्वनित्वमेवेति तच्चासत् । काकुप्रयोग एव शब्दस्य स्पष्टत्वेन व्यङ्ग्यस्योन्मीलितस्यापि गुणीभावात् । काकुर्हि शब्दस्यैव कश्चिद्धर्मस्तेन स्पष्टं 'गोप्यैवं गदितः सलेशं' इति, 'हसन्नेत्रार्पिताकूतं' इतिवच्छब्देनैवानुगृहीतम् अत एव 'भम धम्मिअ' इत्यादौ काकुयोजने गुणीभूतव्यङ्ग्यतैव । व्यक्तोक्तत्वेन तदाभिमानाल्लोकस्य । स्वस्था इति, भवन्ति इति, मयि जीवति इति धार्तराष्ट्रा इति साकाङ्क्षदीप्तगद्गदतारप्रशमनोद्दीपनचित्रिता काकुर्न संभाव्योऽयमर्थोऽत्यर्थमनुचितश्चेत्यमुं व्यङ्ग्यमर्थं स्पृशन्ती तेनैवोपकृता सती क्रोधानुभावरूपतां व्यङ्ग्योपस्कृतस्य वाच्यस्यैव धत्ते । ( आमेति । 'भवामोऽसत्य उपरम पतिव्रते न त्वया मलिनितं शीलम् । किं पुनर्जनस्य जायेव नापितं तं न कामयामहे ॥' इति च्छाया । ) आम असइओ इत्यभ्युपगमकाकुः साकाङ्क्षोपहासा । उपरमेति निरा-

---

१. गुणीभावव्यङ्ग्यलक्षणमिमं' क ख.

---

१. 'निराकाङ्क्षहि' क.ख. २. 'आश्रित्य' ग. ३. 'ननु' ग. ४. 'काव्य' ग.
५. 'व्यङ्ग्योक्तत्वेन' क.ख. ६. 'असंभाव्य' ग.

शब्दशक्तिरेव हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सत्यर्थविशेषप्रतिपत्तिहेतुर्न काकुमात्रम् । विषयान्तरे स्वेच्छाकृत[1]तात्काकुमात्रात्तथाविधार्थप्रतिपत्त्यसंभवात् । स चार्थः काकुविशेषसहायशब्दव्यापारोपारूढो[2]ऽप्यर्थसामर्थ्यलभ्य[3] इति व्यङ्ग्यरूप एव । वाचकत्वानुगमेनैव तु यदा तद्विशिष्टा वाच्य[4]प्रतीतिस्तदा गुणीभूतव्यङ्ग्यतया तथाविधार्थद्योतिनः काव्यस्य व्यपदेशः । व्यङ्ग्यस्य विशिष्टवाच्याभिधायिनो हि गुणीभूतव्यङ्ग्यत्वम् ।

---

काङ्क्षतया सूचनगर्भा[1] । परिग्रहेति ( पतिव्रते इति ) दीप्ता सितयोगिनी(?) त्वया मलिनितं शीलमिति सगद्गदाकाङ्क्षा । किं पुनर्जनस्य जायेव मन्मथान्धीकृता चन्दिलं नापितमेव पामरप्रकृतिं न कामयामहे इति निराकाङ्क्षगद्गदोपहासगर्भा[2] । एषा हि कयाचिन्नायिकानुरक्तया कुलवध्वा दृष्टाविनयाया उपहास्यमानायाः प्रत्युपहासावेशगर्भोक्तिः काकुप्रधानैवेति । गुणीभावं दर्शयितुं शब्दस्य स्पष्टतां तावत् साधयति—**शब्दशक्तिरिति** । नन्वेवं व्यङ्ग्यत्वं कथमित्याशङ्क्याह—**स चेति** । अधुना गुणीभावं दर्शयति—**वाचकत्वेति** । वाचकत्वेऽनुगमो गुणत्वं व्यङ्ग्यव्यञ्जकभावस्य व्यङ्ग्यविशिष्टवाच्यप्रतीत्या । तत्रैव काव्यस्य प्रकाशकत्वं कल्प्यते । तेन च तथा व्यपदेश इति काकुयोजनायां सर्वत्र गुणीभूतव्यङ्ग्यतैव । अत एव 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यादौ विपरीतलक्षणमाहुस्ते न सम्यक्परामर्शाः । यन्मात्रोच्चारणकाल एव 'न कोपात्' इति दीप्ततारगद्गदसाकाङ्क्षकाकुबलान्निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गक्षमारूपत्वाभिप्रायेण प्रतिपत्तिरिति मुख्यार्थबाधाद्यनुसरणविघ्नाभावात्को लक्षणाया अवकाशः । 'दर्शे यजेत' इत्यत्र तु तथाविधकाक्वाद्युपायान्तराभावाद्भवतु विपरीतलक्षणा इत्यलमवा-

---

१. 'कृतकाकु' ग. २. 'व्यापारोऽप्यर्थरूढो' क-ख. ३. 'सामर्थ्याल्लभ्यते' ग. ४. 'वाच्यार्थ' क-ख.

---



१. 'गर्भा' ग. २. 'निर्गद्गदोपहास' ग.

**प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते ।**
**विधातव्या सहृदयैर्न तत्र ध्वनियोजना ॥ ४० ॥**

संकीर्णो हि कश्चिद्ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः। तत्र[2] यचस्य युक्तिसहायता तत्र[3] तेन व्यपदेशः कर्तव्यः । न सर्वत्र ध्वनिरागिणा भवितव्यम् । यथा—

'पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥'

यथा[4] च ।

'प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किंचिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥'

इत्यत्र 'निर्वचनं जघान' 'न किंचिदूचे' इति प्रतिषेधमुखेन व्यङ्ग्य-

---

न्तरेण बहुना । अधुना संकीर्णं विषयं विभजते—**प्रभेदस्येति** । **युक्त्येति** । चारुत्वप्रतीतिरेवात्र युक्तिः । पत्युरित्यनेनालक्तकोपरक्तस्य हि चन्द्रमसः परभाग-लाभोऽनवरतपादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टानुवृत्ति(वर्ति)न्या भाव्य-मिति चोपदेशः । शिरोविधृता च या चन्द्रकला तामपि परिभवेति सपत्नीलोका-पजय उक्तः । **निर्वचनमिति** । अनेन लज्जावहित्थभूरीर्ष्यासाध्वससौभाग्या-भिमानप्रभृति यद्यपि ध्वन्यते तथापि तन्निर्वचनशब्दार्थस्य कुमारीजनोचित-स्याप्रतिपत्तिलक्षणस्यार्थस्योपस्कारतां केवलमाचरति । उपस्कृतस्त्वर्थः शृङ्गारा-ङ्गतामेतीति । **प्रयच्छतेति** । उच्चैर्यानि कुसुमानि । कान्तया स्वयं ग्रहीतुम-शक्यत्वाद्याचितानीत्यर्थः । अस्मदुपाध्यायास्तु हृद्यतमानि पुष्पाणि अमुके, गृहाण गृहाणेत्युच्चैस्तारस्वरेणादरातिशयार्थं प्रयच्छता । अत एव लम्भितेति । **न किंचिदिति** । एवंविधेषु शृङ्गारादरावसरेषु तामेवायं स्मरतीति मानप्रदर्शन-

---

१. 'क्वचित्' ग. २. 'तत्र' ग-पुस्तके नास्ति. ३. 'तदनेन' क.ख. ४. 'तथा' क.ख.

स्यार्थस्योक्त्या [1]किंचिद्विषयीकृतत्वाद्[2]गुणीभाव एव शोभते । [3]यदा वक्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण [4]प्रतीयते तदा तस्य प्राधान्यम् । यथा 'एवंवादिनि देवर्षौ' इत्यादौ । इह पुनरुक्तिभङ्ग्यास्तीति वाच्यस्यापि प्राधान्यम् । तस्मान्नात्रानुरणनरूपव्यङ्ग्यध्वनिर्व्यपदेशो विधेयः ।

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥ ४१ ॥

गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो [6]रसभावादितात्पर्य[7]पर्यालोचनेन [8]पुनर्ध्वनिरेव संपद्यते । [9]यथात्रैवानन्तरोदाहृते श्लोकद्वये । यथा च ।

'दुराराधा राधा सुभग यदनेनापि [10]मृजत-
स्तवैतत्प्राणेशाजघनवसनेनाश्रु पतितम् ।

---

मेवात्र न युक्तमिति सातिशयमन्युसंभारो व्यङ्ग्यो वचननिषेधस्यैव वाच्यस्य संस्कारः। तद्वक्ष्यते—**उक्तिभङ्ग्यास्तीति** । तस्येति व्यङ्ग्यस्य । इहेति पत्युरित्यादौ । **वाच्यस्यापीति** । अपिशब्दो भिन्नक्रमः । प्राधान्यमपि भवति वाच्यस्य रसाद्यपेक्षया तु गुणतापीत्यर्थः । अत एवोपसंहारे ध्वनिशब्दस्य विशेषणमुक्तम् । एतदेव निर्वाहयन्काव्यात्मत्वं ध्वनेरेव परिदीपयति—**प्रकार इति** । श्लोकद्वय इति तुल्यच्छायं यदुदाहृतं पत्युरित्यादि तत्रेति । द्वयशब्दादेवंवादिनीत्यस्यानवकाशः । **दुराराधेति** । अकालकुपितापि पादपतिते मयि न प्रसीदसि अहो दुराराधासि मारोदीरित्युक्तिपूर्वं प्रियतमेऽश्रूणि मार्जयति इयमस्या अभ्युपगमगर्भोक्तिः ।

---

१. 'न किंचित्' ग. २. 'गुणभाव' ग. ३. 'तस्माद्यत्रोक्तिं विना' क-ख. ४. 'प्रकाशते तत्र' क-ख. ५. 'भ्रमः' क-ख. ६. 'रसभावतात्पर्य' क-ख. ७. 'पर्यालोचने स पुनः' क-ख. ८. 'पुनरेव ध्वनिः' ग. ९. 'यथा तत्रैवोदाहृते' ग. १०. 'सृजतः' क-ख.

---

१. 'ईदृशस्य' क-ख.

कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे
क्रियात्कल्याणं वो हरिरनुनयेष्वेवमुदितः ॥'

एवं स्थिते च 'न्यक्कारो ह्ययमेव' इत्यादिश्लोके निर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्वमुक्तम् । न तेषां[1] पदानामर्थान्तरसंक्रमितवाच्यध्वनिभ्रमो विधातव्यः । विवक्षितवाच्यत्वात्तेषाम् । तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते न तु व्यङ्ग्यरूपपरिणतत्वम् । तस्माद्वाक्यं तत्र ध्वनिः पदानि तु

---

सुभगेति । प्रियया[1] यः संभोगभूषणविहीनः क्षणमपि सोढुं न पार्यसे । अनेनापीति । पश्येदं प्रत्यक्षेणेत्यर्थः । तव च यदेवमादृतं लज्जादित्यागेनाप्येवं[2] धार्यते । मृजत इति । अनेन हि प्रत्युत स्रोतःसहस्रवाही बाष्पो भवति । यच्च त्वं हतचेतनो यन्मां विस्मृत्य तामेव कुपितां मन्यसे । अन्यथा कथमेवं कुर्याः[3] । पतितमिति । गत इदानीं रोदनावकाशोऽपीत्यर्थः । यदि तूच्यते इयताप्यादरेण (किमिति) कोपं न मुञ्चसि तत्किं क्रियते कठोरस्वभावं स्त्रीचेतः । स्त्रीति प्रेमाद्ययोगादस्तु विशेषमात्रमेतत्तु तस्य चैष स्वभावः । आत्मनि चैतत्सुकुमारहृदया योषित इति । न किंचिद्वज्रसाराधिकमासां हृदयं यदेवंविधवृत्तान्तसाक्षात्कारेऽपि सहस्रधा न दलति । उपचारैरिति दाक्षिण्यप्रयुक्तैः । अनुनयेष्विति बहुवचनेन वारंवारमस्य बहुवल्लभस्येयं स्थितिरिति सौभाग्यातिशय उक्तः । एवमेष व्यङ्ग्यार्थसारो वाच्यं भूषयति । तत्तु वाच्यं भूषितं सदीर्ष्याविप्रलम्भाङ्गत्वमेतीति । यत्तु त्रिष्वपि श्लोकेषु प्रतीयमानस्यैव रसाङ्गत्वं व्याचष्टे स्म स देवं विक्रीय तद्यात्रोत्सवमकार्षीत् । एवं हि व्यङ्ग्यस्य या गुणीभूतता प्रकृता सैव समूलं त्रुट्येत् । रसादिव्यतिरिक्तस्य हि व्यङ्ग्यस्य रसाङ्गभावयोगित्वमेव[4] प्राधान्यं नान्यत्किंचिदित्यलं पूर्ववंश्यैः सह विवादेन । **एवं स्थित इति** । अनन्तरोक्तेन प्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोर्विभागे स्थिते सतीत्यर्थः ।

---

१. 'न त्वेषां पदार्थानां' क-ख.

---

१. 'प्रियायाः' क-ख. २. 'यल्लज्जादित्यागे गोप्यैवं धार्यते' ग. ३. 'कुर्यात्' ग.
४. 'भागित्वं' क-ख.

गुणीभूतव्यङ्ग्यानि। न च केवलं गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानि यावदर्थान्तरसंक्रमितवाच्यानि ध्वनिप्रभेदरूपाण्यपि। यथात्रैव श्लोके रावण इत्यस्य ध्वनिप्रभेदान्तररूपस्य व्यञ्जकत्वम्। यत्र तु वाक्ये रसादितात्पर्यं नास्ति गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः। यथा—

'राजानमपि सेवन्ते विषमप्युपभुञ्जते।
रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः॥'

इत्यादौ वाच्यव्यङ्ग्ययोश्च प्राधान्याप्राधान्यविवेके परः प्रयत्नो विधातव्यः येन ध्वनिगुणीभूतव्यङ्ग्ययोरलंकाराणां चासंकीर्णो विषयः सुज्ञातो भवति। अन्यथा तु प्रसिद्धालंकारविषय एव व्यामोहः प्रवर्तते। तथा हि।

'लावण्यद्रविणव्ययो न गणितः क्लेशो महानार्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।

---

कारिकागतमपिशब्दं व्याख्यातुमाह—**न चेति**। एष च श्लोकः पूर्वमेव व्याख्यात इति न पुनर्लिख्यते। **यत्र त्विति**। यद्यपि चात्र विषये निर्वेदात्मकशान्तरसप्रतीतिरस्ति तथापि चमत्कारोऽयं वाच्यनिष्ठ एव। व्यङ्ग्यत्वसंभाव्यत्वविपरीतकारित्वादि तस्यैवानुयायिनश्चापिशब्दाभ्यामुभयतो योजिताभ्यां चशब्देन च स्थानत्रययोजितेन खलुशब्देन चोभयतो योजितेन मानवशब्देन स्पष्टमेव गुणीभूतम्। विवेकदर्शना चेयं न निरुपयोगेति दर्शयति—**वाच्यव्यङ्ग्ययोश्चेति**। **अलंकाराणां चेति**। यत्र व्यङ्ग्यं नास्त्येव तत्र तेषां शुद्धानां प्राधान्यम्। **अन्यथा त्विति**। यदि प्रयत्नवता न भूयत इत्यर्थः। व्यङ्ग्यप्रकारस्तु यो मया पूर्वमुत्प्रेक्षितस्तस्यासंदिग्धमेव व्यामोहस्थानमित्येवकाराभिप्रायः। द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपयोगित्वमुक्तम्। गणित इति। चिरेण हि योग्यो यः संप-

---

१. 'न च केवलपदान्यलक्ष्य' ग. २. 'अपि तु' ग. ३. 'हन्त' ग. ४. 'महान्स्वीकृतः' क-ख. ५. 'स्वच्छन्दस्य सखीजनस्य वसतश्चिन्तानलो दीपितः' क-ख.



१. 'संभावित्व' क-ख.

एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥'

इत्यत्र व्याजस्तुतिरलंकार इति व्याख्यायि केनचित्तन्न चतुरस्रम् । यतोऽस्याभिधेयस्यैतदलंकारस्वरूपमात्रपर्यवसायित्वेन सुश्लिष्टता । यतो न तावदयं रागिणः कस्यचिद्विकल्पः । तस्य 'एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता' इत्येवंविधोक्त्यनुपपत्तेः । नापि नीरागस्य ।

---

यते न तु विद्युदिव झटिति तत्रावश्यं गणनया भवितव्यम् । अनन्तकालनिर्माणकारिणोऽपि तु विधिर्न विवेकलेशोऽप्युदभूदिति परमस्य प्रेक्षावत्त्वम्[1] । अत एवाह—क्लेशो महानिति । स्वच्छन्दस्येति । विशृङ्खलस्येत्यर्थः । एषापीति । यत्स्वयं निर्मीयते तदेव च निहन्यत इति महद्वैशसमपिशब्देन वकारेण चोक्तम् । कोऽर्थ इति । न स्वात्मनो न लोकस्य निर्मितस्येत्यर्थः । तस्येति रागिणः । वराकी हतेति कृपालिङ्गितममङ्गलोपहतं चानुचितं वचनम् । तुल्यरमणाभावादिति स्वात्मन्यत्यन्तमनुचितम् । आत्मन्यपि हि तद्रूपासंभावनायां रागितायां च पशुप्रायत्वं स्यात् । ननु च रागिणोऽपि कुतश्चित्कारणात्परिगृहीतकतिपयकालव्रतस्य वा रावणप्रायस्य वा सीतादिविषये दुष्यन्तप्रायस्य वा निर्ज्ञातजातिविशेषे शकुन्तलादौ किमियं स्वसौभाग्याभिमानगर्भा[2] उत स्तुतिगर्भोक्तिर्न भवति । वीतरागस्य वा अनादिकालाभ्यस्तरागवासनावासितया मध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिः संभाव्या । नहि वीतरागो विपर्यस्तान्भावान्पश्यति । नह्यस्य वीणाक्वणितं काकरटितकल्पं प्रतिभाति । तस्मात्प्रस्तुतानुसारेणोभयस्यापीयमुक्तिरुपपद्यते । अप्रस्तुतप्रशंसायामपि ह्यप्रस्तुतः संभवन्नेवार्थो वक्तव्यः । नहि तेजसीत्थमप्रस्तुतप्रशंसा संभवति—अहो धिक्ते

---

१. 'स्वगुणानुरूपरमणाभावात्' ग.　२. 'इत्ययं श्लोको व्याजस्तुत्यलंकार—तन्न चैतत् चतुरस्रम्' ग.

---



१. 'उत्प्रेक्षावत्त्वम्' क-ख. २. 'गर्भा चोक्तिर्न' क-ख.

तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्। न चायं श्लोकः क्वचित्प्रबन्ध इति श्रूयते येन तत्प्रकरणानुगतार्थतास्य परिकल्प्यते। तस्मादप्रस्तुतप्रशंसेयम्। यस्मादनेन वाच्येन गुणीभूतात्मना निःसामान्यगुणावलेपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न कंचिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते। तथा चायं धर्मकीर्तेः श्लोक इति प्रसिद्धिः। संभाव्यते च तस्यैव। यस्मात्

'अनध्यवसितावगाहनमनल्पधीशक्तिना-
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं
प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम्॥'

इत्यनेनापि श्लोकेनैवंविधोऽभिप्रायः प्रकाशित एव। अप्रस्तुत-

---

कौण्र्यमिति। सा परं प्रस्तुतपरतयेति नात्रासंभव इत्याशङ्क्याह—**न चेति**। निःसामान्येति निजमहिमेति विशेषज्ञमिति परिदेवितमित्येतैश्चतुर्भिर्वाक्यखण्डैः क्रमेण पादचतुष्टयस्य तात्पर्यं व्याख्यातम्। नन्वत्रापि किं प्रमाणमित्याशङ्क्याह—**तथा चेति**। ननु किमियतेत्याशङ्क्य तदाशयेन निर्वादतदीयश्लोकार्पितेनास्याशयं संवादयति—**संभाव्यत इति**। अवगाहनमध्यवसितमपि न यत्र आस्तां तस्य[2] संपादनम्। परमं यदर्थतत्त्वं कौस्तुभादि वा उत्तमं लब्धं यत्र। परीक्षितमपि न प्राप्तं सदृशं तथाभूतपरिग्राहमेकैको ग्राहो जलचरः प्राणी ऐरावतोच्चैःश्रवोधन्वन्तरिप्रायो यत्र तदलब्धसदृशप्रतिग्राहकम्। **एवंविध इति**। परिदेवितविषय इत्यर्थः। इति चार्थे। अप्रस्तुतप्रशंसोपमालक्षणमलंकारद्वयम्। अनन्तरं तु स्वात्मनि विस्मयधामतयाद्भुते विश्रान्तिः। परस्य च श्रोतृजनस्यात्यादरास्पदतया प्रयत्नग्राह्यतया चोत्साहजननेनैवंभूतमत्यन्तोपादेयं सत्कतिपयसमुचितजनानुग्राहकं

---

१. 'समस्तसमत्सरज्वरस्य' क-ख.



---

१. 'विवेकान्ध्यमिति' ग. २. 'तस्यासंभावनम्' ग.

प्रशंसायां च यद्वाच्यं तस्य कदाचिद्विवक्षितत्वं कदाचिदविवक्षितत्वं कदाचिद्विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया । तत्र विवक्षितत्वं यथा—

'परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो[1]
　यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
　किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥'

यथा वा ममैव—

'अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
　भवत्येषां यस्य क्षणमुपगतानां विषयताम् ।
निरालोके लोके[2] कथमिदमहो चक्षुरधुना
　समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥'

---

कृतमिति स्वात्मनि कुशलकारिताप्रदर्शनया धर्मवीरस्पर्शनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिदेवितमात्रेण किं कृतं स्यात् । उत्प्रेक्षापूर्वकारित्वमात्मन्यावेदितं चेत्किं ततः स्वार्थपरार्थसंभवादित्यलं बहुना । ननु यथास्थितस्यार्थस्य संगतौ भवत्वप्रस्तुतप्रशंसा इह तु संगतिरस्त्येवेत्याशङ्क्य संगतावपि भवत्येवैषेति दर्शयितुमुपक्रमते—**अप्रस्तुतेति । नन्विति ।** यैरिदं जगद्दूषितमित्यर्थः । यस्य चक्षुषोर्विषयतां क्षणं गतानामेषां सफलता भवति तदिदं चक्षुरिति संबन्धः । आलोको विवेकोऽपि । **न सममिति** । हस्तो हि वरं स्पर्शादानादावप्युपयोगी । **अवयवैरिति** । अतितुच्छप्रायैरित्यर्थः[1] । अप्राप्तः पर उत्कृष्टो भोगो[2]ऽर्थलाभात्मकः स्वरूपप्रथनलक्षणो वा येन । तस्य कथयामीत्यादिप्रत्युक्तिः[3] । अनेन पदेनेदमाह—अक[4]-

---

१. 'मधुर इत्यादि' ग-पुस्तके एतावदेवास्ति न तु संपूर्णं पद्यम्. २ 'देशे' क-ख.

---

१. 'अर्थः' क-ख-पुस्तकयोर्नास्ति. २. 'भोगो' ग. ३. 'प्रत्युक्तः' ग.
४. 'कथनीय' ग.

अनयोर्हि द्वयोः श्लोकयोरिक्षुचक्षुषी विवक्षितस्वरूपे एव न तु प्रस्तुते। महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य कस्यचित्स्वरूपमुपवर्णयितुं द्वयोरपि श्लोकयोस्तात्पर्येण प्रस्तुतत्वात्। अविवक्षितत्वं यथा—

'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे॥'

नहि वृक्षविशेषेण सहोक्तिप्रत्युक्ती संभवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते।

विवक्षितत्वाविवक्षितत्वं यथा—

'उप्पहजाआएँ असोहिणीएँ फलकुसुमपत्तरहिआए।
वेरीएँ वइं देन्तो पामर हो ओहासिज्जिहसि॥'

---

थनीयमेतत्। श्रूयमाणं हि निर्वेदाय भवति। तथापि तु यदि निर्बन्धस्तत्कथयामि— **वैराग्यादिति**। काका दैवहतकमित्यादिना सूचितं ते वैराग्यमिति यावत्। साधुविदितमित्युत्तरम्। कस्मादिति वैराग्ये हेतुप्रश्नः। इदं कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूपणीयतयोत्तरम्। **वामेनेति**। अनुचितेन कुलादिनोपलक्षित इत्यर्थः। **वट इति**। छायामात्रकरणादेव फलदानादिशून्याद्दुरकंधर इत्यर्थः। **छायापीति**। शाखोटको हि स्मशानाग्निज्वालालीढलतापल्लवादिस्तरुविशेषः। अत्राविवक्षायां हेतुमाह—**नहीति**। समृद्धो योऽसत्पुरुषः। 'समृद्धसत्पुरुष' इति पाठे समृद्धेन ऋद्धिमात्रेण सत्पुरुषो न तु गुणादिनेति

---

१. 'श्रूयताम्' ग. २. 'करणे' क-ख. ३. 'वासिनो' क ख. ४. 'उत्पथजाताया अशोभनायाः फलकुसुमपत्ररहितायाः। बदर्या वृतिं ददत्पामर भो अवहसिष्यसे॥' इति छाया।



---

१. 'तेन' ग. २. 'तयोक्तम्' ग.

अत्र हि वाच्यार्थो नात्यन्तं संभवी । तस्माद्वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये ।

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥ ४२ ॥
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किंचिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥ ४३ ॥

व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसंजितकाव्यप्रकारः गुणभावे तु गुणीभूतव्यङ्ग्यता । ततोऽन्यद्रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं[२] यदाभासते तच्चित्रम् । न तन्मुख्यं काव्यम् । काव्यानुकारो ह्यसौ । तत्र किंचिच्छब्दचित्रं यथा दुष्करयमकादि । वाच्यचित्रं ततः शब्दचित्रादन्यद्व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं

---

व्याख्येयम् । **नात्यन्तमिति** । वाच्य एव नियमो नास्तीति न शक्यं वक्तुम् । व्यङ्ग्यस्यापि भावादिति तात्पर्यम् । उत्पथजाताया इति न यथाकुलोद्भूतायाः । अशोभनाया इति लावण्यरहितायाः । फलकुसुमपत्ररहिताया इत्येवंभूतापि कान्चित्पुत्रिणी वा भ्रात्रादिपक्षपरिपूर्णतया संबन्धिवर्गपोषका वा परिरक्ष्यते । बदर्या वृतिं ददत्पामर भोः, हसिष्यसे सर्वलोकैरिति भावः । एवमप्रस्तुतप्रशंसां प्रसङ्गतो निरूप्य प्रकृतमेव यन्निरूपणीयं तदुपसंहरति—**तस्मादिति** । अप्रस्तुतप्रशंसायामपि लावण्येत्यत्र श्लोके यस्माद्व्यामोहो लोकस्य दृष्टस्ततो हेतोरित्यर्थः । एव व्यङ्ग्यस्वरूपं निरूप्य सर्वथा यत्तच्छून्यं तत्र का वार्तेति निरूपयितुमाह—**प्रधानेत्यादिना** । कारिकाद्वयेन । **शब्दचित्रमिति** । यमकचक्रबन्धादिचित्रतया प्रसिद्धमेव । तत्तुल्यमेवार्थचित्रं मन्तव्यमिति भावः । **आलेख्यप्रख्यमिति** । रसादिजीव-

---

१. 'तु' ग. २. 'आलेख्यमिव' ग.

---

१. 'प्रशंसाप्रकरणं' क-ख. २. 'व्यङ्ग्यं स्वरूपतो निरूप्य सर्वथा तच्छून्यं यत्तन्निरूपितुमाह' क-ख.

रसादितात्पर्यरहितमुत्प्रेक्षादि । अथ किमिदं चित्रं नाम यत्र न प्रतीयमानार्थसंस्पर्शः । प्रतीयमानो ह्यर्थस्त्रिभेदः प्राक्प्रदर्शितः । तत्र यत्र वस्त्वलंकारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः । यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न संभवत्येव । यस्मादवस्तुसंस्पर्शिता [1]काव्यस्य नोप[2]पद्यते । वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य [3]चाङ्गत्वं प्रतिपद्यते । वि[4]भावत्वेन चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु किंचिद्यन्न चित्तवृत्तिविशेषमुपजनयति। [5]तदनुत्पादने वा कविविषयतैव तस्य न स्यात् । कविविषयश्च चित्रतया कश्चिन्निरूप्यते । अत्रोच्यते—सत्यम् । न तादृ[6]क्काव्यप्रकारोऽस्ति यत्र रसादीनामविप्रतिपत्तिः । किं तु यदा रसभावादिविवक्षाशून्यः कविः

---

रहितं मुख्यप्रतिकृतिरूपं चे[1]त्यर्थः । **अथ किमिदमिति** । आक्षेपे वक्ष्यमाण आशयः । अत्रोत्तरम्—**यत्रेति** । आक्षिप्तस्याभिप्रायं दर्शयति—**प्रतीयमान इति** । **अवस्तुसंस्पर्शितेति** । कचटतपादिवन्निरर्थकत्वं दशदाडिमादिवदसंबद्धार्थत्वं वेत्यर्थः । ननु मा भूत्कविविषय इत्याशङ्क्याह—**कविविषयश्चेति** । काव्यरूपतया यद्यपि न निर्दि[2]ष्टस्तथापि कविगोचरीकृत एवासौ वक्तव्यः । अन्यस्य वा[3] स्वकेलिवृत्तान्ततुल्यस्येहाभिधानायोगात् । कविश्चेद्गोचरीकरोति नूनममुना प्रीतिर्जनयितव्या । सा चावश्यं विभावानुभावव्यभिचारिपर्यवसायिनीति भावः । **किं त्विति** । 'विवक्षा तत्परत्वेन नाङ्गित्वेन कथंचन' इत्यादिर्योऽलंकार-

---

१. 'तावत्काव्यस्य' ग. २. 'नापाद्यते' क-ख. ३. 'वाङ्गत्वं' ग. ४. 'अतो विभावत्वेन' क-ख. ५. 'तदुपादाने च' ग. ६. 'काव्यवाक्प्रकारः' क-ख.

---



१. 'चेत्यर्थः' क-ख. २. 'व्यपदिष्टः' क-ख. ३. 'वासुकिवृत्तान्तस्येह' ग.

शब्दालंकारमर्थालंकारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते । विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः । वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते । तदिदमुक्तम्—

'रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः ॥'

एतच्च चित्रं कवीनां विश्रृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम् । इदानींतनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः । यतः

---

निवेशने समीक्षाप्रकार उक्तस्तं यदा नानुसरतीत्यर्थः । **रसादिशून्यतेति** । नैव यत्र रसप्रतीतिरस्ति यथा पाकानभिज्ञसूदविरचिते मांसपाकविशेषे । ननु वस्तुसौन्दर्यादवश्यं भवति कदाचित्तथा स्वादोऽकुशलकृतायामपि शिखरिण्यामित्याशङ्क्याह—**वाच्येत्यादि** । **अनेनापीति** । पूर्वं सर्वथा तच्छून्यत्वमधुना तु दौर्बल्यमित्यपिशब्दस्यार्थः । अज्ञकृतायां च शिखरिण्यामहो शिखरिणीति न तज्ज्ञानां चमत्कारः । अपि तु दधिगुडमरिचं चैतदसमञ्जसयोजितमिति वक्तारो भवन्ति । **उक्तमिति** । मयैवेत्यर्थः । अलंकाराणां शब्दार्थोभयरूपाणां निबन्ध इत्यर्थः । ननु 'तच्चित्रमभिधीयते' इति किमनेनोपदिष्टेन । अकाव्यरूपं हि तदिति कथितम् । हेयतया तदुद्दिश्यत इति चेत्, घटे कृते कविर्न भवतीत्येतदपि वक्तव्यमित्याशङ्क्य कविभिः खलु तत्कृतमतो हेयतयोपदिश्यत इत्येतन्निरूपयति—

---

१. 'सामर्थ्येन कवि' ग. २. 'रसभावप्रतीतिः' क-ख. ३. 'यत्तु' ग.
४. 'यतश्च' क-ख. ५. 'विश्रृङ्खलं नितरां' ग. ६. 'अनवेक्ष्यैव' ग.

---



१. 'भवति तथास्वादोऽत्र' ग.

परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते। रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि हि भावा यथायथमुचितरसभावतया चेतनवृत्तान्तयोजनया वा न सन्त्येव ते ये यान्ति न रसाङ्गताम्। तथा चेदमुच्यते—

'अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥
भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥'

तस्मान्नास्त्येव तद्वस्तु यत्सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते। तथोपनिबध्यमानं वा न चारुत्वातिशयं पुष्णाति। सर्वमेतच्च महाकवीनां काव्येषु दृश्यते। अस्माभिरपि स्वेषु

---

**एतच्चेत्यादिना। परिपाकवतामिति।** शब्दार्थविषयो रसौचित्यलक्षणः परिपाको विद्यते येषाम्। 'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्' इत्यपि रसौचित्यशरणमेव वक्तव्यमन्यथा निर्हेतुकं तत्। **अपार इति।** अनाद्यन्त इत्यर्थः। यथारुचि परिवृत्तिमाह—**शृङ्गारीति।** शृङ्गारोक्तविभावानुभावव्यभिचारिचर्वणारूपप्रतीतिमयो न तु स्त्रीव्यसनीति मन्तव्यम्। अत एव भरतमुनिः 'कवेरन्तर्गतं भावं', 'काव्यार्थान्भावयति' इत्यादिषु कविशब्दमेव मूर्धाभिषिक्ततया प्रयुङ्क्ते। निरूपितं चैतद्रसस्वरूपनिर्णयावसरे। **जगदिति।** तद्रसनिमज्जनादित्यर्थः। शृङ्गारपदं रसोपलक्षणम्। स एवेति यदा वर्णनारसिको न भवति तदा परिदृश्य-



१. 'सति' क-ख. २. 'कविरेकः' ग.

काव्यप्रबन्धेषु यथायथं दर्शितमेव । स्थिते चैवं सर्व एव काव्यप्रकारो न ध्वनिधर्मतामतिपतति । रसाद्यपेक्षया कवेर्गुणीभूतव्यङ्ग्यलक्षणोऽपि प्रकारस्तदङ्गतामवलम्बते प्राक् । यदा तु चाटुषु देवतास्तुतिषु वा रसादीनामङ्गतया व्यवस्थानं हृदयवतीषु च षट्प्रज्ञादिगाथासु कासुचिद्व्यङ्ग्यविशिष्टवाच्यात्प्राधान्यं तदपि गुणीभूतव्यङ्ग्यस्य ध्वनिनिष्पन्दभूतत्वमेवेत्युक्तं प्राक् । तदेवमिदानींतनकविकाव्यनयोपदेशे क्रियमाणे प्राथमिकानामभ्यासार्थिनां यदि परं चित्रेण व्यवहारः, प्राप्तपरिणतीनां तु ध्वनिरेव प्राधान्येन काव्यमिति स्थितमेतत् । तदयमत्र संग्रहः—

---

मानोऽप्ययं भाववर्गो यद्यपि सुखदुःखमोह[1]माध्यस्थ्यमात्रं किं किं वितरति तथापि कविवर्णनोपकारं विना लोकातिक्रान्तरसास्वादभुवं ना[2]धिशेत इत्यर्थः । चारुत्वातिशयं यन्न पुष्णाति ततो नास्त्येवेति संबन्धः । खेष्विति विषमबाणलीलादिषु । **हृदयवतीष्विति** । 'अअलिआ' इति प्राकृतकविगोष्ठ्यां प्रसिद्धासु । त्रिवर्गोपायोपेयकुशलाः सहृदयाः षट्प्रज्ञाः प्रातिवेश्मिका उच्यन्ते । तद्गाथा यथा भट्टेन्दुराजस्य—'लङ्घिअगअणा फलहीलआओ होन्तु त्ति[3] वड्ढिआसीहि । अलिअट्ठअसिसंपाडिवेन च पुआविणीं चइणु ॥' अत्र लङ्घितगगना कार्पासलता भवन्त्विति हालिकस्याशिषं वर्ध[4]यन्त्या प्रातिवेश्मिकः परनिर्वृतिं प्रापित इति चौर्यसंभोगाभिलाषिणीयमित्यनेन व्यङ्ग्येन विशिष्टं वाच्यमेव सुन्दरम् । 'गोलाकच्छकुडङ्गे हरेणजम्बूसु पच्चमाणासु । हलिअबहुआ णिअंसइ चम्बूरसरत्तअं सिअअम् ॥' अत्र गोदावरीकच्छलतागहने हरेणजम्बूफलेषु (?) पच्यमानेषु । हालिकवधूः परिधत्ते जम्बूफलरसरक्तं निवसनमिति त्वरितचौर्यसंभोगसंभाव्यमानजम्बूफलरसरक्तत्वपरभागं निह्नुवानं गुणीभूतव्यङ्ग्यमित्यलं बहुना । ध्वनिरेव काव्यमित्यात्मात्मिनोरभेद एव वस्तुतो व्युत्पत्तय इति विभागः कृत इत्यर्थः । वाग्रहणात्तदा-

---

१. 'द्यपेक्षायां' ग.

---

१. 'मोहमयो व्यङ्ग्यमलौकिकं वितरति । तथापि कविवर्णनयारोहं विना' क-ख. २. 'नातिशेते' ग. ३. 'तिवइ भत्ती व । फलिअसमासिसं पाडिवेसवं तु आविणिविआ ॥' क-ख. ४. 'वर्धयन्त्या वेद्रुमा निवृति' क-ख.

'यस्मिन्रसो वा भावो वा तात्पर्येण प्रकाश्यते[1] ।
संवृत्त्याभिहितं वस्तु यत्रालंकार एव वा ॥
काव्याध्वनिर्ध्वनेर्व्यङ्ग्यं प्राधान्यैकनिबन्धनः ।
सर्वत्र तत्र विषयी[2] ज्ञेयः सहृदयैर्जनैः ॥'

**सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।**
**संकरसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ ४४ ॥**

तस्य च ध्वनेः स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वाच्यालंकारैश्च[3] संकरसंसृष्टिव्यवस्थायां क्रियमाणायां बहुप्रभेदता लक्ष्ये दृश्यते । तथाहि स्वप्रभेदसंकीर्णः, स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसंकीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो[4] वाच्यालंकारान्तरसंकीर्णो वाच्यालंकारान्तरसंसृष्टः संसृष्टालंकार-

---

भासादेः पूर्वोक्तस्य ग्रहणम् । **संवृत्त्येति** । गोप्यमानतया लब्धसौन्दर्यमित्यर्थः । काव्याध्वनिरिति काव्यमार्गे[1] । **विषयीति** । त्रिविधस्य ध्वनेः काव्यमार्गो विषय इति यावत् । एवं श्लोकद्वयेन संग्रहार्थमभिधाय बहुप्रकारत्वप्रदर्शिकां कारिकां पठति—**सगुणीति** । गुणीभूतव्यङ्ग्येन सहालंकारैर्ये वर्तन्ते स्वे[2] ध्वनेः प्रभेदास्तैः संकीर्णतया संसृष्ट्या वानन्तप्रकारो ध्वनिरिति तात्पर्यम् । बहुप्रकारतां[3] दर्शयति—**तथाहीति** । स्वभेदैर्गुणीभूतव्यङ्ग्येनालंकारैः प्रकाश्यत इत्यत्र ये भेदास्तत्रापि प्रत्येकं संकरेण संसृष्ट्या चेति षट् । संकरस्यापि त्रयः प्रकाराः । अनुग्राह्यानुग्राहकभावेन संदेहास्पदत्वेनैकपदानुप्रवेशेनेति द्वादश भेदाः । पूर्वं च ये पञ्चत्रिंशद्भेदा निरुक्तास्ते गुणीभूतव्यङ्ग्यस्यापि मन्तव्याः स्वप्रभेदास्तावन्तोऽलंकारा इत्येकसप्ततिः । तत्र संकरत्रयेण संसृष्ट्या च गुणने द्वे शते चतुरशीत्यधिके । तावता पञ्चत्रिंशतो मुख्यभेदानां गुणने सप्तसहस्राणि चत्वारिंशतानि विंशत्यधिकानि भवन्ति ।

---

१. 'प्रकाशते' क-ख. २. 'विजयी' ग ३. 'वाच्यालंकारान्तरैश्च' क-ख. ४. 'वाच्यालंकारान्तरसंसृष्टः संसृष्टालंकारसंकीर्णः संकीर्णालंकारसंसृष्टश्चेति' ग.



---

१. 'काव्यमार्ग' इति ग. २. 'ते' ग. ३. 'प्रभेदतां' क-ख.

संकीर्णः संसृष्टालंकारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते । तत्र स्वप्रभेदसंकीर्णत्वं कदाचिदनुग्राह्यानुग्राहकभावेन । यथा—'एवंवादिनि देवर्षौ—' इत्यादौ । अत्र ह्यर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिप्रभेदेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदोऽनुगृह्यमाणः प्रतीयते । एवं कदाचित्प्रभेदद्वयसंपातसंदेहेन । यथा—

'खणपाहुणिआ देअर एसा जाआएँ किंपि दे भणिदा ।
रुअइ पडोहरलवहीघरम्मि अणुणिज्जउ वराई ॥'

अत्र ह्यनुनीयतामित्येतत्पदमर्थान्तरसंक्रमितवाच्यत्वेन विवक्षितान्य-

---

अलंकाराणामानन्त्यात्त्वसंख्यत्वम् । तत्र व्युत्पत्तये कतिपयभेदेषूदाहरणानि दित्सुः कारिकायामन्यपदार्थत्वेन प्रधानतयोक्तत्वात्तदाश्रयाण्येव चत्वार्युदाहरणान्याह—**तत्रेति । अनुगृह्यमाण इति** । लज्जया हि प्रतीताभिलाषशृङ्गारोऽत्रानुगृह्यते व्यभिचारिभूतत्वेन । क्षण उत्सवस्तत्र निमन्त्रणेनानीता हे देवर, एषा ते जायया किमपि भणिता रोदिति । पडोहरे शून्ये वलभीगृहे । अनुनीयतां वराकी । सा तावद्देवरानुरक्ता तज्जायया विदितवृत्तान्तया किमप्युक्तेत्येषोक्तिस्तद्वृत्तान्तं दृष्टवत्या अन्यस्या देवरचौरकामिन्याः । तत्र गृहिण्यायं वृत्तान्तो ज्ञात इत्युभयतः कलहायितुमिच्छन्त्येवमाह । तत्रार्थान्तरे संभोगेनैकान्तोचितेन परितोष्यतामित्येवंरूपे वाच्यस्य संक्रमणम् । यदि वा त्वं तावदेतस्यामेवानुरक्त इतीर्ष्याकोपतात्पर्यादनुनयमन्यपरं विवक्षितम् । एषा तवेदानीमुचितमगर्हणीयं प्रेमास्पदमित्यनुनयो विवक्षितः । वयं त्विदानीं गर्हणीया संवृत्ता इत्येव तत्परतयोभयथापि च स्वाभिप्रायप्रकाशनादेकतरनिश्चयेन प्रमाणाभाव इत्युक्तम् । विवक्षितस्य हि स्वरूपस्थस्यैवान्यपरत्वम् । संक्रान्तिस्तु तस्यैव तद्रूपापत्तिः । यदि वा देवरानुरक्ताया एव तं देवरमन्यया सहावलोकितसंभोगवृत्तान्तं प्रतीयमुक्तिः । देवरेत्यामन्त्रणात् । पूर्वव्याख्याने

---

१. 'क्षणप्राघुणिका देवर एषा जायया किमपि ते भणिता । रोदिति शून्यवलभीगृहेऽनुनीयतां वराकी ॥' इति च्छाया.

परवाच्यत्वेन च संभाव्यते । न चान्यतरपक्षनिर्णये प्रमाणमस्ति । एकव्यञ्जकानुप्रवेशेन तु व्यङ्ग्यत्वमलक्ष्यक्रमव्यङ्ग्यस्य स्वप्रभेदान्तरापेक्षया बाहुल्येन संभवति । यथा—'स्निग्धश्यामल–' इत्यादौ । स्वप्रभेदसंसृष्टत्वं च यथा पूर्वोदाहरण एव । अत्र ह्यर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्यस्य च संसर्गः । गुणीभूतव्यङ्ग्यसंकीर्णत्वं यथा—'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादौ । यथा वा—

'कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥'

अत्र ह्यलक्ष्यक्रमव्यङ्ग्यस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्या-

---

तु तदपेक्षया देवरेत्यामन्त्रणं व्याख्यातम् । **बाहुल्येनेति** । सर्वत्र काव्ये रसादितात्पर्यं तावदस्ति तत्र रसध्वनेर्भावध्वनेश्चैकेन व्यञ्जकेनाभिव्यञ्जनम् । स्निग्धश्यामलेत्यत्र विप्रलम्भशृङ्गारस्य तद्व्यभिचारिणश्च शोकावेगात्मनश्चर्वणीयत्वात् । एवं त्रिविधं संकरं व्याख्याय संसृष्टिमुदाहरति—**स्वप्रभेदेति** । **अत्र हीति** । लिप्तशब्दादेरतिरस्कृतो वाच्यः; रामादौ तु संक्रान्त इत्यर्थः । एवं स्वप्रभेदं प्रति चतुर्भेदानुदाहृत्य गुणीभूतव्यङ्ग्यं प्रत्युदाहरति—**गुणीभूतेति** । अत्र हीत्युदाहरणद्वयेऽपि । **अलक्ष्यक्रमव्यङ्ग्यस्येति** । रौद्रस्य । व्यङ्ग्यविशिष्टेत्यनेन गुणता व्यङ्ग्यस्योक्ता । पदैरित्युपलक्षणे तृतीया । तेन तदुपलक्षितो योऽर्थो व्यङ्ग्यो गुणीभावेन वर्तते तेन संमिश्रता संकीर्णता । सा चानुग्राह्यानुग्राहकभावेन संदेहयोगेनैकस्य व्यञ्जकानुप्रवेशेन चेति यथासंभवमुदाहरणद्वये योज्या । तथा हि 'मे यदरय' इत्यादिभिः सर्वैरेव पदार्थैः कर्तेत्यादिभिश्च विभावादिरूपतया रौद्र एवानुगृह्यते । कर्तेत्यादौ च

---

१. 'निश्चये' क-ख. २. 'कदाचिद्विभिन्नयोरेकश एकव्यञ्जकानु' ग. ३. 'व्यञ्जकत्वं' क-ख.



१. 'परत्वं' ग. २. 'शब्दादौ तिरस्कृतवाच्यरसादौ' क-ख.

भिधायिभिः पदैः संक्रमिता । अत एव च पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयत्वे च ध्वनेः संकीर्णतायामविरोधः स्वप्रभेदान्तरवत् । यथाहि ध्वनिप्रभेदान्तराणि परस्परं संकीर्यन्ते पदार्थवाक्यार्थाश्रयत्वेन च न विरुद्धानि। किं चैकव्यङ्ग्याश्रयत्वे तु प्रधानगुणभावो विरुध्यते । नतु व्यङ्ग्यभेदापेक्षया ततोऽप्यस्य न विरोधः । अयं च संकरसंसृष्टिव्यवहारो बहूनामेकत्र वाच्यवाचकभाव इव व्यङ्ग्यव्यञ्जकभावेऽपि निर्विरोध एव मन्तव्यः । यत्र तु पदानि कानिचिदविवक्षितवाच्यान्यनुरणनरूपव्यङ्ग्यवाच्यानि वा तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः

---

प्रतिपदं प्रत्यवान्तरवाक्यं प्रतिसमासं च व्यङ्ग्यमुत्प्रेक्षितुं शक्यमेवेति न लिखितम् । पाण्डवा यस्य दासा इति तदीयोक्त्यनुकारः । तत्र च गुणीभूतव्यङ्ग्यतापि योजयितुं शक्या । वाच्यस्यैव क्रोधोद्दीपनत्वात् । दासैश्च कृतकृत्यैः स्वाम्यवश्यं द्रष्टव्य इत्यर्थशक्त्यनुरणनरूपता । उभयथापि चारुत्वादेकपक्षग्रहे प्रमाणाभावः। एकव्यञ्जकानुप्रवेशस्तु तैरेव पदैः गुणीभूतस्य व्यङ्ग्यस्य प्रधानीभूतस्य च रसस्य विभावादिद्वारतयाभिव्यञ्जनात् । **अत एव चेति** । यतोऽत्र लक्ष्ये दृश्यते तत इत्यर्थः । ननु व्यङ्ग्यं गुणीभूतं प्रधानं चेति विरुद्धमेतद्दृश्यमानमप्युक्तत्वान्न श्रद्धेयमित्याशङ्क्य व्यञ्जकभेदात्तावन्न विरोध इति दर्शयति—**स्वेति** । स्वप्रभेदान्तराणि संकीर्णतया पूर्वमुदाहृतानीति तान्येव दृष्टान्तयति । तदेव व्याचष्टे—**यथाहीति** । तथात्रापीत्यध्याहारोऽत्र कर्तव्यः । 'तथा हि' इति वा पाठः । ननु व्यञ्जकभेदात्प्रथमभेदयोः परिहारोऽस्तु एकव्यञ्जकानुप्रवेशे तु वक्तव्यमित्याशङ्क्य पारमार्थिकं परिहरन्नाह— **किंचेति । ततोऽपीति** । यतो व्यङ्ग्यं गुणीभूतमन्यच्च प्रधानमिति को विरोधः । ननु वाच्यालंकारे विषये श्रुतोऽयं संकरादिव्यवहारो न तु व्यङ्ग्यविषय इत्याशङ्क्याह—**अयं चेति । मन्तव्य इति** । मननेन प्रतीत्या तथा निश्चयति ( निश्चेय इति )। उभयत्रापि प्रतीतेरेव शरणत्वादिति भावः । एवं गुणीभूतव्यङ्ग्यसंकरभेदानुदाहृत्य संसृष्टिमुदाहरति—**यत्र तु पदानीति**। कानि-

---

१. 'संमिश्रिता' क ख. २. 'तथा हि' क-ख ३. 'यत्तु' ग.

---

१. 'एवेति' क-ख. २. 'अत एवेति' ग. ३. 'परिभवः' क-ख. ४. 'व्यङ्ग्यत्रीन्संकर' क-ख. ५. 'यत्त्विति' ग.

संसृष्टत्वम् । यथा—'तेषां गोपवधूविलाससुहृदां' इत्यादौ । अत्र हि 'विलाससुहृदां' 'राधारहःसाक्षिणां' इत्येते पदे ध्वनिप्रभेदरूपे 'ते' 'जाने' इत्येते च पदे गुणीभूतव्यङ्ग्यरूपे । वाच्यालंकारसंकीर्णत्वमलक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति रसालंकारे च काव्ये सर्वत्रैव सुव्यवस्थितम् । प्रभेदान्तराणामपि कदाचित्संकीर्णत्वं भवत्येव । यथा ममैव—

'या व्यापारवती रसान्रसयितुं[1] काचित्कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थ[2]विषयोन्मेषा च[3] वैपश्चिती ।

---

चिदित्यनेन संकरावकाशं निराकरोति । सुहृच्छब्देन साक्षिशब्देन चाविवक्षितवाच्यो ध्वनिः 'ते' इत्यादिना साधारणगुणगणाभिव्यक्तोऽपि न गुणत्वमवलम्बते । वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात् । 'जाने' इत्यनेनोत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपं प्रधानीक्रियते । एवं गुणीभूतव्यङ्ग्येऽपि चत्वारो भेदा उदाहृताः । अधुनालंकारगतांस्तान्दर्शयति—**वाच्यालंकारेति** । व्यङ्ग्यत्वे त्वलंकाराणामुक्तभेदाष्टक एवान्तर्भाव इति वाच्यशब्दस्याशयः । **काव्य इति** । एवंविधमेव हि काव्यं भवति । (प्रभेदान्तराणामपीति) । **सुव्यवस्थितमिति** । 'विवक्षा तत्परत्वेन इति द्वितीयोद्द्योतमूलोदाहरणेभ्यः संकरत्रयं संसृष्टिश्च लभ्यत एव ।', 'चलापाङ्गां दृष्टिं' इत्यत्र हि रूपकव्यतिरेकस्य प्राग्व्याख्यातस्य शृङ्गारानुग्राहकत्वं स्वभावोक्तेः शृङ्गारस्य चैकानुप्रवेशः । 'उप्पह जाया' इति गाथायां परस्वभावोक्तिर्वा ध्वनिर्वेति प्रकरणाद्यभावे एकतरग्राहकं प्रमाणं नास्ति । यद्यप्यलंकारो रसमवश्यमनुगृह्णाति तथापि 'नातिनिर्वहणैषिता' इति यदभिप्रायेणोक्तं तत्र संकरासंभवात्संसृष्टिरेवालंकारेण रसध्वनेः । यथा—'बाहुलतिकापाशेन बध्वा दृढं' इत्यत्र । प्रभेदान्तराणामपीति रसादिध्वनिव्यतिरिक्तानाम् । **व्यापारवतीति** । निष्पादनप्राणो हि रस इत्युक्तम् । तत्र विभावादियोजनात्मिका वर्णना । ततः प्रभृति घटनापर्यन्ता क्रिया व्यापारः तेन सततयुक्तो रसादिरिति रस्यमानतासारा-

१. 'ग्रसयितुं' ग. २. 'परिनिश्चितार्थं' क-ख. ३. 'अस्ति' ग.

---

१. 'सर्वत्रावकाशं' क-ख. २. 'वाचकेनापि' क-ख. ३. 'रूपकस्य' क-ख. ४. 'गृह्णाति भूयसा' ग.

ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ॥'

इत्यत्र विरोधालंकारेणार्थान्तरसंक्रमितवाच्यस्य ध्वनिप्रभेदस्य

---

न्स्थायिभावान्रसयितुं रस्यमानतापत्तियोग्यान्कर्तुम् । काचिदिति लो...त्रापति बोधावस्थात्यागेनोन्मीलयन्ती । अत एव ते कवयः वर्णनायोगात् । नवेति क्षणेक्षणे नूतनैर्वैचित्र्यैर्जगन्त्यासूत्रयन्ती । दृष्टिरिति प्रतिभारूपा । तत्र दृष्टिश्चाक्षुषं ज्ञानं षाडवादि (?) । [१]रसे यो विरोधालंकारोऽत एव नवा तदनुगृहीतश्च ध्वनिः । तथाहि चाक्षुषं ज्ञानं नाविवक्षितमत्यन्तमसंभवाभावात् । न वान्यपरम् । अपि त्वर्थान्तरे ऐन्द्रियकविज्ञानाभासोल्लसिते प्रतिभानलक्षणेऽर्थे संक्रान्तम् । संक्रमणे च विरोधोऽनुग्राहक एव । तद्वक्ष्यती—'विरोधालंकारेण' इत्यादिना । या चैवंविधा दृष्टिः परिनिष्ठितोऽचलः अर्थविषये निश्चेतव्ये विषये उन्मेषो यस्याः । तथान्येन परिनिश्चि(ष्ठि)ते विषये उन्मेषः सम्यगवबोधकारी अपूर्वप्रमाणलाभलक्षणो यस्याः । तथा परिनिश्चिते लोकप्रसिद्धेऽर्थे न तु कविवदपूर्वस्मिन्नर्थे उन्मेषो यस्याः सा । विपश्चितामियं वैपश्चिती । ( ते अवलम्ब्येति । ) कवीनामिति । वैपश्चितीतिवचनेन नाहं कविर्न पण्डित इत्यात्मनोऽनौद्धत्यं ध्वन्यते । अनात्मीयमपि दरिद्रगृह इवोपकरणतयान्यत आहृतमेतन्मया दृष्टिद्वयमित्यर्थः । ते द्वे अपीति नह्येकया दृष्ट्या सम्यङ्निर्वर्णनं निर्वहति । विश्वमित्यशेषम् । अनिशमिति पुनःपुनर[२]नवरतं निर्वर्णयन्तो निःशेषेण वर्णयन्तो वर्णनया तथा निश्चयार्थं वर्णयन्तः । इदमित्थमिति परामर्शानुमानादिना निर्भज्य [३]निर्वर्णनं किमत्र सारं स्यादिति तिलशस्तिलशो निर्वर्णयन्(नम्) । [४]यच्च निर्वर्ण्यते तत्खलु मध्ये व्यापार्यमाणया मध्ये चार्थविशेषेषु निश्चितोन्मेषया निश्चलया दृष्ट्या सम्यङ्निर्वर्णितं भवति । वयमिति । मिथ्या[५]त्वदृष्ट्याहरणप्रयासव्यसनिन इत्यर्थः । श्रान्ता इति । न केवलं सारं लब्धं यावत्प्रत्युत खेदः प्राप्त इति भावः । चशब्दस्तुशब्दस्यार्थे । अब्धिशयनेति योगनिद्रया त्वमत एव सारस्वरूपवेदी स्वरूपावस्थित इत्यर्थः । श्रान्तस्य शयनस्थितं प्रति बहुमानो

---

१. 'रसेभ्यो विरोधास्त एव' क-ख. २. 'अविरतं' ग. ३. 'निर्वेदनं' क.
४. 'यत्तु' ग. ५. 'मिथ्या तद्दृष्ट्या' क.

संकीर्णत्वम्[1] । वाच्यालंकारसंसृष्टत्वं च पदापेक्षयैव । यत्र हि कानिचित्पदानि वाच्यालंकारभाञ्जि कानिचिच्च ध्वनिप्रभेदयुक्तानि । यथा—

'दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां[2]
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।

---

भवति । त्वद्भक्तीति । त्वमेव परमात्मस्वरूपो[1] विश्वसारस्तस्य भक्तिः शब्दादिपूर्वकमुपासनाक्रम(ज)स्तदावेशस्तेन तुल्यमपि न लब्धमास्तां तावत्तज्जातीयम् । एवं प्रथममेव परमेश्वरभक्तिभाजः कुतूहलमात्रावलम्बितकविप्रामाणिकोभयवृत्तेः पुनरपि परमेश्वरभक्तिविश्रान्तिरेव युक्तेति मन्वानस्येयमुक्तिः । सकलप्रमाणपरिनिश्चितदृष्टादृष्टविषयविशेषजं यत्सुखं यदपि वा लोकोत्तरं रसचर्वणात्मकं तत उभयतोऽपि परमेश्वरविश्रान्त्यानन्दः प्रकृष्यते । तदानन्दविप्रुण्मात्रावभासो हि रसास्वाद इत्युक्तं प्रागस्माभिः । लौकिकं तु सुखं ततोऽपि निर्कृष्टप्रायं बहुतरदुःखानुषङ्गादिति तात्पर्यम् । तत्रैव दृष्टिशब्दापेक्षयैकपदानुप्रवेशः । दृष्टिमवलम्ब्य निर्वर्णनमिति विरोधालंकारो वाश्रीयताम् । अन्धपदन्यायेन दृष्टिपदेऽत्यन्ततिरस्कृतवाच्यो वास्तु इत्येकतरनिश्चये नास्ति प्रमाणम् । प्रकारद्वयेनापि हृद्यत्वात् । न च पूर्वत्राप्येवं वाच्यम् । नवाशब्देन शब्दशक्त्यनुरणनतया विरोधस्य सर्वथावलम्बनात् । एवं संकरं त्रिविधमुदाहृत्य संसृष्टिमुदाहरति—**वाच्येति** । सकलवाक्ये हि यद्यलंकारोऽपि व्यङ्ग्यार्थोऽप्रधानं तदानुग्राह्यानुग्राहकसंकरस्तदभावे त्वसंगतिरित्यलंकारेण वा ध्वनिना वा पर्यायेग द्वाभ्यामपि वा युगपत्पदविश्रान्ताभ्यां भाव्यमिति त्रयो भेदाः । एतद्गर्भीकृत्य सावधारणमाह—**पदापेक्षयैवेति** । यत्रानुग्राह्यानुग्राहकभावं प्रत्याशङ्कापि नावतरति तं तृतीयमेव प्रकारमुदाहर्तुमुपक्रमते—**यत्र हीति** । यस्माद्यत्र कानिचिदलंकारभाञ्जि कानिचिद्ध्वनियुक्तानि । यथा दीर्घीकुर्वन्नित्यत्रेति । तथाविधपदापेक्षयैव वाच्यलंकारसंसृष्टत्वमित्यावृत्त्या पूर्वग्रन्थेन संबन्धः कर्तव्यः । **अत्र हीति** । अत्रत्यो हिशब्दो मैत्रीपदमित्यस्यानन्तरं योज्य इति ग्रन्थसंगतिः । **दीर्घीकुर्वन्निति** । सिप्रावातेन हि दूरमप्यसौ शब्दो नीयते । तथा

---

१. 'असंकीर्णत्वम्' ग. २. 'सारसीनां' ग.

---

१. 'स्वभावः' क-ख. २. '[illegible]' क-ख. ३. '[illegible]' क-ख. ४. 'निकृष्टतमप्रायं' ग. ५. 'पर्यायेण द्वाभ्यामपि वा' क-ख-पुस्तकयोर्नास्ति.

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥'

अत्र हि मैत्रीपदमविवक्षितवाच्यो ध्वनिः । पदान्तरेष्वलंकारान्त-

---

सुकुमारपवनस्पर्शजातहर्षाच्चिरं कूजन्तीति । तत्कूजितं च वातान्दोलितसिप्रातरङ्ग-जमधुरशब्दमिश्रं भवतीति दीर्घत्वम् । पटुिति । तथासौ सुकुमारो वायुर्येन तज्जः शब्दः सारकूजितमपि नाभिभवति तत्स ब्रह्मचारी तदेव दीपयति । न च दीपनं तदीयमनुपयोगि यतस्तन्मदेन कलमधुरमाकर्णनीयम् । प्रत्यूषेष्विति । प्रभातस्य तथाविधस्यैवावसरत्वाद्बहुवचनं सदैव तत्रैषा हृद्यतेति निरूपयति । स्फुटितान्य-वर्तमानमकरन्दभरेण (तथा स्फुटितानि) विकसितानि नयनहारीणि यानि कमलानि तेषां य आमोदस्तेन या मैत्री अन्यासङ्गावियोगे परस्परानुकूल्यलाभस्तेन कषाय उपरक्तो मकरन्देन च कषायवर्णीकृतः । स्त्रीणामिति । सर्वस्य तथाविधस्य त्रैलोक्यसारभूतस्य य एवं करोति स सुरतकृतां ग्लानिं तान्तिं हरति । अथ च तदीयां ग्लानिं पुनः संभोगाभिलाषोद्दीपनेन हरति । न च प्रसह्यभूततया (?) अपि त्वङ्गानुकूलो हृद्यस्पर्शः हृदयान्तर्भूतश्च । प्रियतमे तद्विषये प्रार्थनार्थं चाटूनि कारयति । प्रियतमोऽपि तत्पवनस्पर्शप्र... प्रार्थनाचाटूनि करोतीति तेन तथा कार्यत इति । परस्परानुरागप्राणशृङ्गारसर्वस्वभूतोऽसौ पवनः । युक्तं चैतत्तस्य यतः सिप्रा-परिचितोऽसौ वात इति नागरिको नत्वविदग्धो ग्राम्यप्राय इत्यर्थः । प्रियतमोऽपि रतान्तेऽङ्गानुकूलः संवाहनादिप्रार्थनार्थं चाटुकार एवमेव सुरतग्लानिं हरति । कूजितं चानङ्गीकरणवचनादि मधुरध्वनितं दीर्घीकरोति । चाटुकरणावसरे च स्फुटितं विकसितं यत्कमलकान्तिधारि वदनं तस्य थामोदमैत्री सौरभपरिचयस्तेन कषाय उपरक्तो भवति । अङ्गेषु चतुःषष्ट्यामालिङ्गने(नादि)ष्वनुकूलः । एवं शब्द-रूपगन्धस्पर्शा यत्र हृद्या यत्र च पवनोऽपि तथाविधः सोऽवश्यमभिगन्तव्यो देश इति मेघदूते मेघं प्रति कामिन इयमुक्तिः । उदाहरणे लक्षणं योजयति—**मैत्रीपदमिति** । हिशब्दोऽनन्तरं पठितव्य इत्युक्तमेव । **अलंकारान्तराणीति** ।

---

१. 'शिप्रा' ग.

---



१. 'हर्षैश्चिरं कूजितं' क-ख. २. 'तथाविधावसरं' क-ख.

राणि संसृष्टालंकारान्तरसंकीर्णो ध्वनिर्यथा—

'दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥'

अत्र हि समासोक्तिसंसृष्टेन विरोधालंकारेण संकीर्णस्यालक्ष्यक्रम-

---

उत्प्रेक्षास्वभावोक्तिरूपकोपमाः क्रमेणेत्यर्थः । एवमियता 'सगुणीभूतव्यङ्ग्यैः सालंकारैः सहप्रभेदैः स्वैः । संकरसंसृष्टिभ्यां' इत्येतदन्तं व्याख्यायोदाहरणानि च निरूप्य 'पुनरपि' इति यत्कारिकाभागे पदद्वयं तस्यार्थं प्रकाशयत्युदाहरणद्वारेणैव —**संसृष्टेति** । पुनःशब्दस्यायमर्थः—न केवलं ध्वनेः स्वप्रभेदादिभिः संसृष्टिसंकरौ विवक्षितौ यावत्तेषामन्योन्यमपि स्वप्रभेदानां स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वा संकीर्णानां संसृष्टानां च[2] ध्वनीनां संकीर्णत्वं च संसृष्टत्वं दुर्लक्ष्यमिति विस्पष्टोदाहरणं न भवतीत्यभिप्रायेणालंकारस्यालंकारेण संसृष्टस्य संकीर्णस्य वा ध्वनौ संकरसंसर्गौ प्रदर्शनीयौ । तदस्मिन्भेदचतुष्टये प्रथमं भेदमुदाहरति—**दन्तक्षतानीति** । बोधिसत्त्वस्य स्वकिशोरभक्षणप्रवृत्तां सिंहीं प्रति निजशरीरं प्रयच्छतः[3] केनचिचाटुकं क्रियते । प्रोद्भूतः(द्भिन्नः) सान्द्रः पुलकः परार्थसंपत्तिजेनानन्दभरेण यत्र । रक्ते रुधिरे मनोऽभिलाषो यस्याः। अनुरक्तं च मनो यस्याः। मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः । जातस्पृहैरिति च वयमपि कदाचिदेवं कारुणिकपदवीमधिरोक्ष्यामस्तदा सत्यतो मुनयो भविष्याम इति मनोराज्ययुक्तैः । समासोक्तिश्च नायिकावृत्तान्तप्रतीतेः । दयावीरस्येति दयाप्रयुक्तत्वात् । अत्र धर्मस्य धर्मवीर एव दयावीरशब्देनोक्तः । वीरश्चात्र रसः । उत्साहस्यैव स्थायित्वादिति भावः । दयावीरशब्देन वा शान्तमुपदिशति । सोऽत्र रसः संसृष्टालंकाराणा(?)मनुगृह्यते । समासोक्तिमहिम्ना ह्ययमर्थः संपद्यते—यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसंभोगावसरे जातपुलकस्तथा त्वं परार्थसंपादनाय स्वशरीरदान इति करुणातिशयोऽनुभावविभावसंपदोद्दीपितः । द्वितीयं भेदमुदाहरति—**संसृष्टेति** । अभिनवं हृद्यं पयोदानां मेघानां रसितं



---

१. 'कथा' क-ख. २. 'च ध्वनीनां' क-ख-पुस्तकयोर्नास्ति. ३. 'वितीर्णवतः' ग.

व्यङ्ग्यस्य ध्वनेः प्रकाशनम् । दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात् । संसृष्टालंकारसंसृष्टत्वं च ध्वनेर्यथा—

'अहिणअपओअररसिएसु पहिअसामाइएसु दिअहेसु ।
सोहइ पसारिअगिआणँ णच्चिअं मोरवन्दाणम् ॥'

अत्र ह्युपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संसृष्टत्वम् ।

**एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते ।**
**संख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः ॥ ४५ ॥**

---

येषु दिवसेषु । तथाविधपथिकान्प्रति श्यामायितेषु मोहजनकत्वाद्रात्रिरूपतामाचरितवत्सु । यदि वा पथिकानां श्यामायितं दुःखवशेन श्यामिका येभ्यः । शोभते प्रसारितग्रीवाणां मयूरवृन्दानां नृत्तम् । अभिनवपयोधररसितेषु पथिकसमाजेषु सत्सु मयूरवृन्दा(वना)नां प्रसारितगीतानां प्रकृष्टसारणानुसारिगीतानां तथा ग्रीवारेचकाय प्रसारितग्रीवाणां नृत्तं शोभते । पथिकान्प्रति श्यामा इवाचरन्तीति प्रलयेन लुप्तोपमा निर्दिष्टा । पथिकसमाजेष्विति कर्मधारयस्य स्पष्टत्वाद्रूपकम् । ताभ्यां ध्वनेः संकर इति ग्रन्थकारस्याशयः । अत्रैवोदाहरणेऽन्यद्भेदद्वयमुदाहर्तुं शक्यमित्याशयेनोदाहरणान्तरं न दत्तम् । तथाहि—व्याघ्रादेराकृतिगणत्वे पथिकसमाजेष्वित्युपमारूपकाभ्यां संदेहास्पदत्वेन संकीर्णाभ्यामभिनवप्रयोगे च रसिकेष्विति ···मिति···शब्दशक्त्युद्भवस्तस्य संसर्गमात्रमनुग्राहकत्वाभावात् । 'पहिअसामाइएसु' इत्यत्र तु पदे संकीर्णाभ्यां शब्दशक्तिमूलस्य ध्वनेः संकीर्णत्वमेकव्यञ्जकानुप्रवेशादिति संकीर्णालंकारसंसृष्टः संकीर्णालंकारसंकीर्णश्चेत्यपि भेदद्वयं मन्तव्यम् । एतदुपसंहरति—**एवमिति** । स्पष्टम् । अथ 'सहृदयमनःप्रीतये' इति यत्सूचितं

---

१. 'प्रकाशनेन' क-ख. २. 'भूतत्वम्' क-ख. ३. 'अभिनवपयोधररसितेषु पथिकश्यामायितेषु दिवसेषु । शोभते प्रसारितग्रीवाणां(गीतानां)नृत्तं मयूरवृन्दानाम् ॥' इति च्छाया.

---

१. 'सारानुसारी' क-ख. २. 'अभिनवप्रयोगे ··· मात्र' क-ख.

अनन्ता हि ध्वनेः प्रकाराः सहृदयानां व्युत्पत्तये तेषां[1] दिङ्मात्रं कथितम् ।

इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः ।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः ॥ ४६ ॥

उक्तस्वरूपध्वनिनिरूपणनिपुणा हि सत्कवयः सहृदयाश्च निय[2]तमेव काव्यविषये परां प्रकर्षपदवीमासादयन्ति ।

अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः ॥ ४७ ॥

एतद्ध्वनिवर्णनेन निर्णीतं काव्यतत्त्वमस्फुटस्फुरितं सदशक्नुवद्भिः प्रतिपादयितुं वैदर्भी गौडी पाञ्चाली चेति रीतयः प्रवर्तिताः । रीतिलक्षणविधायिनां हि काव्यतत्त्वमेतदस्फुटतया मनाक्स्फुरितमासीदिति[3] तदत्र स्फुटतया [4]संप्रदर्शितमित्यन्येन रीतिलक्षणेन न किंचित् ।

शब्दतत्त्वाश्च याः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन्काव्यलक्षणे ॥ ४८ ॥

---

तदानीं (न) शब्दमात्रमपि तु निर्व्यूढमित्याशयेनाह—**इत्युक्तेति** । यः प्रयत्नतो विवेचित एवमादिकलक्षणो ध्वनिरेतदेव काव्यतत्त्वं यथोदितेन प्रपञ्चनिरूपणं कर्तुमशक्नुवद्भिरलंकारै रीतयः प्रवर्तिता इत्युत्तरकारिकया संबन्धः । अन्ये तु यःशब्दस्थाने 'अयं' इति पठन्ति । प्रकर्षपदवीनिर्माणे बोधे वेति भावः । व्याकर्तुमशक्नुवद्भिरित्यत्र हेतुः—अस्फुटं कृत्वा स्फुरितमिति । (लक्षिता इति) रीतिर्हि गुणेष्वेव पर्यवसायिता । यदाह—विशेषो गुणात्मा गुणाश्च रसपर्यवसायिन एवेति ह्युक्तं प्राग्गुणनिरूपणे 'शृङ्गार एव मधुरः' इत्यत्रेति । **प्रकाशन्त इति** । अनु-

---

१. 'ते स्वयमुत्प्रेक्षणीयाः' क-ख. २. 'नियमेनैव काव्य' क-ख. ३. 'इति लक्ष्यते तत्र' ग. ४. 'संप्रदर्शितेनान्येन' ग.

अस्मिन्व्यङ्ग्यव्यञ्जकभावविवेचनमये काव्यलक्षणे ज्ञाते सति याः काश्चित्प्रसिद्धा उपनागरिकाद्याः शब्दतत्त्वाश्रया वृत्तयो याश्चार्थतत्त्वसंबद्धाः कैशिक्यादयस्ताः सम्यग्रीतिपदवीमवतरन्ति[1]। अन्यथा तु तासामदृष्टार्थानामिव वृत्तीनामश्रद्धेयत्वमेव स्यान्नानुभवसिद्धत्वम्। एवं स्फुटतयैव लक्षणीयं स्वरूपमस्य[2] ध्वनेः। यत्र शब्दानामर्थानां च केषांचित्प्रतिपत्तृ[3]विशेषसंवेद्यं जात्यत्वमिव[4] रत्नविशेषाणां चारुत्वमनाख्येयमवभासते[5] काव्ये तत्र ध्वनिव्यवहार इति यल्लक्षणं ध्वनेरुच्यते केनचित्तदयुक्तमिति नावधेयतामर्हति[6]। यतः शब्दानां स्वरूपभेदस्तावद[7]क्लिष्टत्वे सत्यप्रयुक्तप्रयोगः। वाचकाश्रयस्तु[8] प्रसादो व्यञ्जकत्वं चेति विशेषः। अर्थानां च स्फुटत्वेनावभासनं[9] व्यङ्ग्यपरत्वं व्यङ्ग्यविशिष्टत्वं

---

भवसिद्धतां काव्यजीवित्वे प्रयान्तीत्यर्थः। **रीतिपदवीमिति**। तद्वदेव रसपर्यवसायित्वात्। 'प्रतीतिपदवीं' इति वा पाठः। नागरिकया ह्युपरमते अनुप्रासवृत्तिः शृङ्गारादौ विश्राम्यति। परुषेति दीप्तेषु रौद्रादिषु। कोमलेति हास्यादौ। तथा—'वृत्तयः काव्यमातृकाः' इति यदुक्तं मुनिना तत्र रसोचित एव चेष्टाविशेषो वृत्तिः। यदाह—'कौशिकी श्लक्ष्णनेपथ्या शृङ्गाररससंभवा' इति। इयता 'तस्याभावं जगदुरपरे' इत्यादावभावविकल्पेषु 'वृत्तयो रीतयश्च गताः श्रवणगोचरं तदतिरिक्तः कोऽयं ध्वनिरिति' तत्र कथंचिदभ्युपगमः कृतः कथंचिद्दूषणं दत्तमस्फुटस्फुरितमिति वचनमनेन इदानीं 'वाचां स्थितमविषये' इति यदूचे तत्तु प्रथमोद्द्योते दूषितमपि दूषयति सर्वप्रपञ्चकथने हि असंभाव्यमेवानाख्येयत्वमित्यभिप्रायेण। **अक्लिष्टत्व इति**। श्रुतिकष्टाद्यभाव इत्यर्थः। अप्रयुक्तस्य प्रयोगो...

---

१. 'प्रतिपत्तिपदवीं' ग. २. 'लक्षणीयस्वरूपस्यास्य' क-ख. ३. 'प्रतिपत्ति' क., 'प्रतिपत्त्य' ख. ४. 'जात्यत्वमेव' क. ५. 'एवावभासते' क-ख. ६. 'नामधेयं' ग. ७. स्वरूपाश्रयः' ग. ८. 'वाचकत्वाश्रय' क-ख. ९. 'भासमानं व्यङ्ग्यपरत्वं व्यङ्ग्यांशविशिष्टत्वं' क-ख.

---

१. 'स्फुरितत्वादिति' ग.

चेति विशेषः। तौ च विशेषौ व्याख्यातुमशक्यौ व्याख्यातौ बहुप्रकारम्। तद्व्यतिरिक्तानाख्येयविशेषसंभावना तु विवेकावसादगर्भरभसमूलैव। यस्मादनाख्येयत्वं सर्वशब्दार्थगोचरत्वेन न कस्यचित्संभवति। अन्ततोऽनाख्येयशब्देन तस्याभिधानसंभवात्। सामान्यसंस्पर्शिविकल्पशब्दगोचरत्वे सति प्रकाशमानत्वं तदनाख्येयमुच्यते क्वचित् तदपि काव्यविशेषाणां रत्नविशेषाणामिव न संभवति। तेषां लक्षणकारैर्व्याकृतरूपत्वात्। रत्नविशेषाणां च सामान्यसंभावनयैव मूल्यस्थितिपरिकल्पनादर्शनाच्च। उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव। वैकटिका एव हि रत्नतत्त्वविदः, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः। यत्त्वनिर्देश्यत्वं सर्वलक्षणविषये बौद्धानां प्रसिद्धं तत्तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्यामः। इह तु ग्रन्थान्तरश्रवणलवप्रकाशनं सहृदयवैमनस्यप्रदायीति न प्रक्रियते। बौद्धमतेन वा यथा प्रत्यक्षादिलक्षणं तथास्माकं ध्वनिलक्षणं भविष्यति। तस्माल्लक्षणान्तरस्याघटनादर्शनादशब्दार्थत्वाच्च तस्योक्तमेव ध्वनिलक्षणं साधीयः। तदिदमुक्तम्—

---

···पौनरुक्त्यम्। ताविति शब्दगतोऽर्थगतश्च। विवेकस्यावसादोऽभावो निर्विवेकत्वम्। सामान्यस्पर्शी यो विकल्पस्ततोऽयं शब्दो दृष्टान्तेऽपि नास्तीति दर्शयति—**रत्नविशेषाणां चेति**। ननु सर्वत्र तन्न संवेद्यत इत्याशङ्क्याभ्युपगमेनैवोत्तरयति—**उभयेषामिति**। रत्नानां काव्यानां च। ननु···र्थं शब्दाः स्पृशन्तीत्यपेत्यनिर्देश्यवदेकमित्या·····················वस्थानामुक्तमिति चेदत्राह—**यत्त्विति**। एवं हि सर्वभाववृत्तान्ततुल्य एव ध्वनिरिति ध्वनिस्वरूपमनाख्येयमित्यति-

१. 'निर्भर' ग. २. 'तु यदा' क-ख. ३. 'कदापि' ग. ४. 'रूपाणाम्' क-ख. ५. 'उभयेषां प्रतीतिविशेष' ग. ६. 'च' क-ख. ७. 'सर्वस्वलक्षणविषयं' क-ख. ८. 'घटनात्' क-ख.



१. 'यस्य तस्य निर्विवेकत्वम्' ग. २. 'यः' क-ख.

'अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः।
न लक्षणं लक्षणं तु साधीयोऽस्य यथोदितम् ॥'

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके तृतीय उद्योतः।

---

व्यापकं लक्षणं स्यादिति भावः। ग्रन्थान्तर इति विनिश्चयटीकायां धर्मोत्तमायां या विवृतिरमुना ग्रन्थकृता कृता तत्रैव तद्व्याख्यातम्। उक्तमिति संग्रहार्थं मयैवेत्यर्थः। अनाख्येयांशकाव्याभासो विद्यते यस्मिन्काव्ये तस्य भावस्तत्र लक्षणं ध्वनेरिति संबन्धः। अत्र हेतुः—**निर्वाच्यार्थतयेति**। निर्विभज्य वक्तुमशक्यत्वादित्यर्थः। अन्यस्तु 'निर्वाच्यार्थतया' इत्यत्र निसो नञर्थत्वं परिकल्प्यानाख्येयांशभासित्वेऽयं हेतुरिति व्याचष्टे तत्तु क्लिष्टम्। हेतुश्च साध्यनिष्ठ इत्युक्तव्याख्यानमेवेति शिवम्।

किं लोचनं विनालोको भाति चन्द्रिकयापि हि।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥
काव्यालोक······························।
·················कृतार्थान्संविधास्यति ॥
आसूत्रितानां भेदानां स्फुटतापत्तिदायिनीम्।
त्रिलोचनप्रियां वन्दे मध्यमां परमेश्वरीम् ॥

इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तोन्मीलिते सहृदयालोक(ध्वन्यालोक)-
लोचने ध्वनिसंकेते तृतीय उद्योतः।

---

१. 'च' ग.

चतुर्थ उद्द्योतः ।[1]

एवं ध्वनिं सप्रपञ्चं विप्रतिपत्तिनिरासार्थं व्युत्पाद्य तद्व्युत्पादने प्रयोजनान्तरमुच्यते—

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः ।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ १ ॥

य एष ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्गः प्रकाशितस्तस्य फलान्तरं कविप्रतिभानन्त्यम् । कथमिति चेत् ।

अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥ २ ॥

अतो हि ध्वनेरुक्तप्रभेदमध्यादन्यतमेनापि प्रकारेण विभूषिता सती वाणी पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायाति । तथाह्यविवक्षितवाच्यस्य ध्वनेः प्रकारद्वयसमाश्रयणेन[3] नवत्वं पूर्वार्थानुगमेऽपि[4] यथा—

'स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥'

इत्यस्य

'सविभ्रमस्मितोद्भेदा लोलाक्ष्यः प्रस्खलद्गिरः ।
नितम्बालसगामिन्यः कामिन्यः कस्य न प्रियाः ॥'

इत्येवमादिषु श्लोकेषु सत्स्वपि तिरस्कृतवाच्यध्वनिसमाश्रयेणापूर्वत्वमेव प्रतिभासते । तथा—

१. चतुर्थोद्द्योतस्य टीका नोपलभ्यते. २. 'अक्ष्य' ग. ३. 'श्रयेण' क-ख.
४. 'पूर्वोक्तानु' क-ख.

'यः प्रथमः प्रथमः स तु तथाहि हतहस्तिबहलपललाशी[1] ।
श्वापदगणेषु सिंहः सिंहः केनाधरीक्रियते ॥'

इत्यस्य[2]

'स्वतेजःक्रीतमहिमा केनान्येनातिशय्यते ।
महद्भिरपि मातङ्गैः सिंहः केनाभिभूयते ॥'

इत्येवमादिषु श्लोकेषु सत्स्वप्यर्थान्तरसंक्रमितवाच्यध्वनिसमाश्रयेण नवत्वम् । (विवक्षितान्यपरवाच्यस्यापि[3] उक्तप्रकारसमाश्रयेण नवत्वम्) तत्रालक्ष्यक्रमप्रकारसमाश्रयेणान्यथात्वम् । यथा—

'निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधू-
र्बोधत्रासनिरुद्धचुम्बनरसाप्याभोगलोलं स्थिता ।
वैलक्ष्याद्विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः
साकाङ्क्षप्रतिपत्ति नाम हृदयं यातं तु पारं रतेः ॥'

इत्यस्य[4] श्लोकस्य

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

इत्यादिषु सत्स्वपि नवत्वम् । यथा वा—'तरङ्गभ्रूभङ्गा—' इत्यादिश्लोकस्य 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादिश्लोकापेक्षयान्यत्वम् ।

**दिशानयानुसर्तव्यो रसादिबहुविस्तरः ।**
**मितोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात् ॥ ३ ॥**

---

१. 'तथाभिहतहस्ततार्पितपलाशी' ग. २. 'अस्य' ग. ३. कोष्ठकान्तःस्थितः पाठः क-ख-पुस्तकयोर्नास्ति. ४. 'अस्य' ग. ५. [illegible]

बहुविस्तारोऽयं रसभावतदाभासतत्प्रशमनलक्षणो मार्गो यथास्वं विभावानुभावप्रभेद[1]कलनया यथोक्तं प्राक् स सर्व एवानया दिशानुसर्तव्यः । यस्य रसादेराश्रयादयं काव्यमार्गः पुरातनैः कविभिः सहस्रसंख्यैरसंख्यैर्वा बहुप्रकारं क्षुण्णत्वान्मितोऽप्यनन्ततामेति । रसभावादीनां हि प्रत्येकं विभावानुभावव्यभिचारिसमाश्रयादपरिमितत्वम् । तेषां चैकैक[2]प्रभेदापेक्षयापि तावज्जगद्वृत्तमुपनिबध्यमानं सुकविभिस्तदिच्छावशादन्यथा स्थितमप्यन्यथैव विवर्तते । प्रतिपादितं चैतच्चित्रविचारावसरे । [3]गाथा चात्र कृतैव महाकविना—

'[4]अंतहट्टिए वि तहसंठिए व्व हिअअम्मि जा णिवेसेइ ।
अत्थविसेसे सा जअइ विकडकइगोअरा वाणी ॥'

तदित्थं रसभावाद्याश्रयेण काव्यार्थानामानन्त्यं सुप्रतिपादितम् । एतदेवोपपादयितुमुच्यते—

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥ ४ ॥**

तथा विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्य[5]प्रकारसमाश्रयेण नवत्वम् । यथा—'धरणीधारणायाधुना त्वं शेषः' इत्यादौ

'शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।
यदलङ्घितमर्यादाश्चलन्तीं बि[6]भ्रते भुवम् ॥'

---

१. 'प्रभेदकतया' ग. २. 'चषामेकैक' ग. ३. 'तथा च गाथाकृतात्र महा' क-ख. ४. 'अतथास्थितानपि तथासंस्थितानिव हृदये या निवेशयति । अर्थविशेषान्सा जयति विकटकविगोचरा वाणी ॥' इति च्छाया. ५. 'व्यङ्ग्यरूप' ग. ६. 'विभृयाः क्षितिम्' क-ख.

इत्यादिषु सत्स्वपि तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण[1] नवत्वम् । यथा—'एवंवादिनि देवर्षौ' इत्यादिश्लोकस्य ।

'कृते वरकथालापे कुमार्यः पुलकोद्गमैः ।
सूचयन्ति स्पृहामन्तर्लज्जयावनताननाः ॥'

इत्यादिषु सत्स्वप्यर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिर्मित-[2] शरीरत्वेन नवत्वम् । यथा—'सज्जेइ सुरहिमासो–' इत्यादेः

'सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः ।
रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः ॥'

इत्यादिषु सत्स्वप्यपूर्वत्वमेव ।

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्न-शरीरत्वे सति नवत्वम् । यथा—

'साअरविइण्णजोव्वणहत्थालम्बं[3] समुण्णमन्तेहिं ।
अब्भुट्ठाणम्मिव मम्महस्स दिण्णं तुह थणेहिं ॥'

अस्य हि गाथार्थस्य

'उँदिह[4]···कआभोआ जह जह थणआ विणन्ति बालाणम् ।
तह तह लद्धावासो व मम्महो हिअअमाविसइ ॥'

एतद्गाथार्थेन न पौनरुक्त्यम् । यथा वा—'वाणिअअ हत्थिदन्ता–' इत्यादिगाथार्थस्य ।

'करिणीवेहव्वअरो[5] मह पुत्तो एक्ककाण्डविणिवाई ।
हअसोन्हाएँ तह कहो जह कण्डकरण्डअं वहइ ॥'

---

१. 'श्रयणेन' ग. २. 'प्रौढोक्तिमात्र' ग. ३. 'सादरवितीर्णयौवनहस्तालम्बं समुन्नमद्भ्याम् । अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥' इति च्छाया. ४. अस्फुटेयं गाथा. ५. 'करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती । हतस्नुषया तथा कृतो यथा काण्डकरण्डकं वहति ॥' इति च्छाया.

[1]एवमादिष्वर्थेषु सत्स्वप्यनालीढतैव ।

यथा च व्यङ्ग्यभेदसमाश्रयेण ध्वनेः काव्यार्थानां [2]नवत्वमुपपद्यते तथा व्यञ्जकभेदसमाश्रयेणापि । तत्तु ग्रन्थविस्तरभयान्न लिख्यते स्वयमेव सहृदयैरभ्यूह्यम् । अत्र च पुनःपुनरुक्तमपि सारतयेदमुच्यते—

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन्विविधे संभवत्यपि ।**
**रसादिमय [3]एकस्मिन्कविः स्यादवधानवान् ॥ ५ ॥**

अस्मिन्नर्थानन्त्यहेतौ व्यङ्ग्यव्यञ्जकभावे [4]विचित्रे संभवत्यपि कविरपूर्वलाभार्थे रसादिमय [5]एकस्मिन्व्यङ्ग्यव्यञ्जकभावे यत्नादवदधीत । रसभावतदाभासरूपे हि व्यङ्ग्ये तद्व्यञ्जकेषु च [6]यथानिर्दिष्टेषु वर्णपदवाक्यरचनाप्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं संपद्यते । तथा च रामायणमहाभारतादिषु सङ्ग्रामादयः पुनःपुनरभिहिता अपि नवनवाः प्रकाशन्ते । प्रबन्धे चाङ्गी रस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति । कस्मिन्निवेति चेत्, यथा रामायणे यथा [7]वा महाभारते । रामायणे हि करुणो रसः स्वयमादि[8]कविना सूत्रितः 'शोकः श्लोकत्वमागतः' इत्येवंवादिना । निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता । महाभारतेऽपि [9]शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः । एतच्चांशेन विवृतमेवान्यैर्व्याख्याविधायिभिः । स्वयं चोद्गीर्ण

१. 'इत्येवमादिषु सत्स्व' क-ख. २ 'अपृथगर्थत्वं' ग. ३. 'एतस्मिन्' क-ख. ४. 'विचित्रे शब्दानां' क-ख. ५. 'एतस्मिन्' क-ख. ६. 'यथामति' ग. ७. 'च' क-ख. ८. 'मुनिना सूचितः' ग. ९. 'शास्त्ररूपपूर्वकाव्यावस्थान्वयिनि' ग.

तेनोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकमतिविमलज्ञानालोकदायिना लोकनाथेन—

'यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥'

इत्यादि बहुशः कथयता । ततश्च शान्तो रसो रसान्तरैर्मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते । अङ्गाङ्गिभावश्च यथा रसानां[1] तथा प्रतिपादितमेव । पारमार्थिकान्तस्तत्त्वानपेक्षया शरीरस्येवाङ्गभूतस्य[2] रसस्य पुरुषार्थस्य च स्वप्राधान्येन चारुत्वमप्यविरुद्धम् । ननु महाभारते यावान्विवक्षाविषयः सोऽनुक्रमण्यां सर्व एवानुक्रान्तो न चैतत्तत्र दृश्यते । प्रत्युत सर्वपुरुषार्थप्रबोधहेतुत्वं सर्वरसगर्भत्वं च महाभारतस्य तस्मिन्नुद्देशे स्वशब्दनिवेदितत्वेन प्रतीयते । अत्रोच्यते—सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्यां दर्शितं दर्शितं तु व्यङ्ग्यत्वेन । 'भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्यस्मिन्वाक्ये ह्ययमर्थो[3] व्यङ्ग्यत्वेन विवक्षितो यदत्र महाभारते पाण्डवादिचरितं यत्कीर्त्यते[4] तस्मात्तस्मिन्नेव परमेश्वरे भगवति भवत भावितचेतसो मा भूत विभूतिषु निःसारासु रागिणो गुणेषु वा नयविनयपराक्रमादिष्वमीषु केवलेषु केषुचित्सर्वात्मना प्रतिनिविष्टधियः । तथा चाग्रे पश्यत निःसारतां संसारस्येत्यमुमेवार्थं[5] द्योतयत्स्फुटमेवावभासते । व्यञ्जकशक्त्यानु-[6]

१. 'रसादीनां' क-ख.　२. 'पारमार्थिकान्ततस्तत्त्वानपेक्षया शरीरस्यैव' ग.
३. 'अनेन ह्ययं' ग. ४. 'संकीर्त्यते' ग. ५. 'सर्वस्यास्य संसारव्यवहारस्य' क-ख.
६. 'व्यञ्जकत्वानुगृहीतः' क-ख.

गृहीतश्च शब्दः । एवंविधमेव चार्थं गर्भीकृतं संदर्शयन्तोऽनन्तरश्लोका लक्ष्यन्ते 'सहि सत्यं—' इत्यादयः । अयं च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता तेनैव कविवेधसा कृष्णद्वैपायनेन सम्यक्स्फुटीकृतः । अनेन चार्थेन संसारातीते तत्त्वान्तरे भक्त्यतिशयं प्रवर्तयता सकल एव सांसारिको व्यवहारः पूर्वपक्षीकृतो-ऽ[1]ध्यक्ष्येण प्रकाशते । देवतातीर्थतपःप्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन तत्तद्विभूतित्वेनैव वा देवताविशेषाणा-मन्येषां पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्याद्वैराग्यस्य च मोक्षमूलत्वान्मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीतादिषु प्रदर्शितत्वात्परब्रह्मप्राप्त्युपायत्वमेव । परम्परया वासुदेवादिसंज्ञाभिधेयत्वेन चापरिमितशक्त्यास्पदं परं ब्रह्म गीतादिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धि माथुरप्रादुर्भावानुकृतसकलस्वरूपशंसिरूपं विवक्षितं न तु माथुरप्रादुर्भावांश एव सनातनशब्दविशेषित[3]त्वात् । रामायणादिषु चानया संज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात् । निर्णीतश्चायमंशः शब्दतत्त्वविद्भिरेव । तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यति-रेकिणः सर्वस्यान्यस्यानित्यतां प्रकाशयतो मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित इति सुप्रतिपादितम् । अत्यन्त-सारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन । [4]सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन

---

१. 'स्वक्षेण प्रकाश्यते' ग. २. [illegible] ग. ३. 'विशेषकत्वात्' ग. ४. 'साररूपो' ग.

प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेनैव । तस्मात्स्थितमेतत्—अङ्गिभूतरसाद्याश्रयेण काव्ये क्रियमाणे नवनवार्थलाभो भवति बन्धच्छाया च महती संपद्यत इति । अत एव च रसानुगुणार्थविशेषोपनिबन्धमलंकारान्तरविरहेऽपि च्छायातिशययोगि लक्ष्ये दृश्यते । यथा—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलके दृष्टौ तौ दिव्यौ मत्स्यकच्छपौ ॥'

इत्यादौ । अत्र ह्यद्भुतरसानुगुणमेकचुलके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति । तत्र ह्येकचुलके जलधिसंनिधानादपि दिव्यमत्स्यकच्छपदर्शनमक्षुण्णत्वादद्भुतरसानुगुणतरम् । क्षुण्णं हि वस्तु लोकप्रसिद्ध्याद्भुतमपि नाश्चर्यकारि भवति । न चाक्षुण्णं वस्तूपनिबध्यमानमद्भुतरसस्यैवानुगुणं यावद्रसान्तरस्यापि । तद्यथा—

'सिज्जइ रोमञ्चिज्जइ वेवइ रच्छाकुलङ्गपडिलग्गो ।
सोपासो अज्ज वि सह अतीइ जेणासि वोलीणो ॥'

एतद्गाथार्थाद्भाव्यमानाया रसप्रतीतिर्भवति सा त्वां दृष्ट्वा स्विद्यति रोमाञ्चते वेपते इत्येवंविधादर्थात्प्रतीयमानात्मना मनागपि नो जायते । तदेवं ध्वनिप्रभेदसमाश्रयेण यथा काव्यार्थानां नवनवत्वं जायते तथा प्रतिपादितम् । गुणीभूतव्यङ्ग्यस्यापि प्रभेदापेक्षया ये प्रकारास्तत्समाश्रयेणापि काव्यवस्तूनां नवत्वं भवत्येव । तत्त्वतिविस्तारकारीति नोदाहृतं सहृदयैः स्वयमुत्प्रेक्षणीयम् ।

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।**
**न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः ॥ ६ ॥**

१. 'प्रबन्ध' क-ख. २. अस्फुट[illegible] गाथा. ३. '[illegible]पेक्षया' क-ख.

सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात्प्रतिभागुणः । तस्मिंस्त्वसति न किंचिदेव कवेर्वस्त्वस्ति । बन्धच्छायाप्यर्थद्वयानुरूपशब्दसंनिवेशार्थप्रतिभानाभावे कथमुपपद्यते। अनपेक्षितार्थविशेषाक्षररचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम् । एवं हि सत्यर्थानपेक्षचतुरमधुरवचनरचनायामपि काव्यव्यपदेशः प्रवर्तेत । शब्दार्थयोः साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत्, परोपनिबद्धार्थविरचने यथा तत्काव्यत्वस्य[2] व्यवहारस्तथा तथाविधानां काव्यसंदर्भाणाम्।

न चार्थानन्त्यं व्यङ्ग्यार्थापेक्षयैव यावद्वाच्यार्थापेक्षयापीति प्रतिपादयितुमुच्यते—

**अवस्थादेशकालादिविशेषैरपि जायते ।**
**आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः ॥ ७ ॥**

शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते स्वभावतः । स्वभावो ह्ययं वाच्यानां चेतनाचेतनानां[3] यदवस्थाभेदाद्देशभेदात्कालभेदात्स्वालक्षण्यलक्षणभेदाच्चानन्तता भवति । तैश्च तथाव्यवस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्यापि तावदुपनिबध्यमानैर्निरवधिः काव्यार्थः संपद्यते । तथा ह्यवस्थाभेदान्नवत्वं यथा—भगवती पार्वती कुमारसंभवे 'सर्वोपमाद्रव्यसमुच्चयेन—' इत्यादिभिरुक्तिभिः प्रथममेव परिसमापितरूपवर्णनापि पुनर्भगवतः शंभोर्लोचनगोचरमायान्ती 'वसन्तपुष्पाभरणं वहन्ती' (इत्यादि) मन्मथोपकरणभूतेन भङ्ग्यन्तरेणोपवर्णिता । सैव च पुनर्नवोद्वाहसमये प्रसाध्यमाना 'तां प्राङ्मुखीं तत्र निवेश्य तन्वीं' इत्याद्युक्तिभिर्नवेनैव प्रकारेण निरूपितसौष्ठवा । न च

१. 'नैततोदीयः सह' क. 'नैतन्नेदीयः सह' ख. २. 'काव्यतद्व्यवहारः' ग.
३. 'चेतनानामचेतनानां च' ग.

ते तस्य कवेरेकस्यैवासकृत्कृता वर्णनप्रकारा अपुनरुक्तत्वेन वा नवनवार्थनिर्भरत्वेन वा प्रतिभासन्ते । दर्शितमेव चैतद्विषमबाणलीलायाम्—

'ण[1] अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुनरुत्ता ।
जे विब्भमा पिआणं अत्था वा सुकइवाणीणम् ॥'

अयमपरश्चावस्थाभेदप्रकारो यदचेतनानां सर्वेषां चेतनं द्वितीयं रूपमभिमानित्वप्रसिद्धं हिमवद्गङ्गादीनां तच्चोचितचेतनविषयस्वरूपयोजनयोपनिबध्यमानमन्यदेव संपद्यते । यथा कुमारसंभव एव पर्वतस्वरूपस्य हिमवतो वर्णनं पुनः सप्तर्षिप्रियोक्तिषु(ष्व)चेतनतत्स्वरूपापेक्षया प्रदर्शितं तदपूर्वमेव प्रतिभाति । प्रसिद्धश्चायं सत्कवीनां मार्गः । इदं च प्रस्थानं कविव्युत्पत्तये विषमबाणलीलायां सप्रपञ्चं दर्शितम् । चेतनानां च बाल्याद्यवस्थाभिरन्यत्वं सत्कवीनां प्रसिद्धमेव[2] । चेतनानामवस्थाभेदेऽप्यवान्तरावस्थाभेदान्नानात्वम् । यथा कुमारीणां कुसुमशरभिन्नहृदयानामन्यासां च । तत्रापि विनीतानामविनीतानां चाचेतनानां चेतनानां च भावानामारम्भाद्यवस्थाभेदभिन्नानामेकैकशः स्वरूपमुपनिबध्यमानमानन्त्यमेवोपयाति । यथा—

'हंसानां सरसीषु[3] यैः कवलितैरासज्यते कूजता-
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः ।
ते संप्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ॥'

एवमन्यत्रापि दिशानयानुसर्तव्यम् । देशभेदान्नानात्वमचेतनानां

---

१. 'न च तेषां घटतेऽवधिर्न च ते दृश्यन्ते कदापि पुनरुक्ताः । ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम् ॥' इति च्छाया. २. 'सुप्रसिद्धम्' ग. ३. 'निनदेषु' क-ख.

तावत्। यथा वायूनां नानादिग्देशचारिणामन्येषामपि सलिलकुसुमादीनां प्रसिद्धमेव। चेतनानामपि मानुषपशुपक्षिप्रभृतीनां ग्रामारण्यसलिलादिसमेधितानां परस्परं महान्विशेषः समुपलक्ष्यत एव। स च विविच्य यथायथमुपनिबध्यमानस्तथैवानन्त्यमायाति। तथा हि मानुषाणामेव तावद्दिग्देशादिभिन्नानां ये व्यवहारव्यापारादिषु विचित्रा विशेषास्तेषां केनान्तः शक्यते गन्तुम्। विशेषतो योषिताम्। उपनिबध्यते च तत्सर्वमेव सुकविभिर्यथाप्रतिभम्। कालभेदाच्च नानात्वं यथर्तुभेदाद्दिग्व्योमसलिलादीनामचेतनानाम्। चेतनानां चौत्सुक्यादयः कालविशेषाश्रयिणः प्रसिद्धा एव। स्वालक्षण्याभेदाच्च सकलजगद्गतानां वस्तूनां विनिबन्धनमविगीतमेव। तच्च यथावस्थितमपि तावदुपनिबध्यमानमनन्ततामेव काव्यार्थस्या[1]पादयति। अत्र केचिदाचक्षीरन्—यथा सामान्यात्मना वस्तूनि वाच्यतां प्रतिपद्यन्ते न विशेषात्मना। तानि हि स्वयम[2]नुभूतानां सुखादीनां तन्निमित्तानां च स्वरूपमन्यत्रारोपयद्भिः स्व[3]रूपानुरूपसामान्यमात्राश्रयेणोपनिबध्यन्ते कविभिः। नहि तैरतीतमनागतं वर्तमानं च प[4]रचित्तादिस्वलक्षणं योगिभिरिव प्रत्यक्षीक्रियते। तच्चानुभाव्यानुभावकसामान्यं सर्वप्र[5]तिपत्तृसाधारणं परिमितत्वात्पुरातनानामेव गोचरीभूतम्। त[6]स्य विषयत्वानुपपत्तेः। अतएव स प्रकारविशेषो यैरद्यतनैरभिनवत्वेन प्रतीयते तेषां भ्रममात्रमेव। भणितीकृतं वैचि[7]त्र्यमात्रमत्रास्तीति। तत्रोच्यते—यदि सामान्याश्रयेण काव्यप्रवृत्तिस्तत्प्रदर्शितप्रकारं काव्यवैचित्र्यमवस्थादिविशेषात्किं पुनरुक्तमेवास्तु। न चेत्त-

---

१. 'उपपादयति' ग. २. 'भूतात्मनां' ग. ३. 'स्वपरानुभूतसामान्य' क-ख. ४. 'परिचितादिस्वलक्षणं' ग. ५. 'प्रतिपत्ति' ग. ६. 'तथास्य विषयस्यानुपपत्तेः' क-ख. ७. 'अभिधानवैचित्र्यं' ग.

तथा तत्कथं न काव्यानन्त्यम् । यत्तूक्तम्—सामान्यमात्राश्रयेण काव्यप्रवृत्तिस्तस्य च परिमितत्वेन प्रागेव गोचरीकृतत्वान्नास्ति नवत्वं काव्यवस्तूनामिति तदयुक्तम् । यतो यदि सामान्यमात्रमाश्रित्य काव्यं प्रवर्तते किंकृतस्तर्हि महाकविनिबध्यमानानां काव्यानामतिशयः । वाल्मीकिव्यतिरिक्तस्यान्यस्य कवि.................. । एवं वा सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात् । सामान्यस्य चादिकविनैव प्रदर्शितत्वात् । उक्तिवैचित्र्यान्नैष दोष इति चेत्, किमिदमुक्तिवैचित्र्यम् । उक्तिर्हि वाच्यविशेषप्रतिपादनवचनम्, तद्वैचित्र्येण कथं न वाच्यवैचित्र्यम् । वाच्यवाचकयोरविनाभावेन प्रवृत्तेः । वाच्यानां च काव्ये प्रतिभासमानानां यद्रूपं तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते । तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताप्यवश्यमेवाभ्युपगन्तव्यम् । तदयमत्र संक्षेपः—

'वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित् ।
इष्यते प्रतिभानन्त्यं तत्तदानन्त्यम[1]क्षयम् ॥'

किं च, उक्तिवैचित्र्यं यत्[2]काव्यनवत्वेन निबन्धनमुच्यते तदस्मत्पक्षानुगुणमेव । यतो यावानयं काव्यानन्त्यभेदहेतुः प्रकारः प्राग्दर्शितः स सर्व एव पुनरुक्तिवैचित्र्याद्द्विगुणतामापद्यते । यश्चायमुपमाश्लेषादिरलंकारमार्गः प्रसिद्धः स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्धत्ते पुनः शतशाखताम् । [3]भणितिश्च कथाभेदेन व्यवस्थिता सती प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति । यथा ममैव—



१. 'अक्षतम्' क-ख. २. 'काव्यबन्धेन' ग. ३. 'भणितिः स्वभाषाभेदेन' ग.

'[1]बहुमह इन्ति भणिन्तउ वं ओई कलिजणस्स ते इणदे ।
ओ जाणद्दणुओगो अरिमो तिमिणं...सा इत्थम् ॥'

यथा यथा निरूप्यते तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम् । इदं तूच्यते—

**अवस्थादिविभिन्नानां [2]वाच्यानां विनिबन्धनम् ।**

यत्प्रदर्शितं प्राक्

**भूम्नैव दृश्यते लक्ष्ये न तच्छक्यमपोहितुम् ॥ ८ ॥**

तत्तु भाति रसाश्रयात् । तदिदमत्र संक्षेपेणाभिधीयते तत्कवीनामुपदेशाय

**रसभावादिसंबद्धा यद्यौचित्यानुसारिणी ।**
**अन्वीयते वस्तुगतिर्देशकालादिभेदिनी ॥ ९ ॥**

का गणना कवीनामन्येषां परिमितशक्तीनाम् ।

**वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।**
**निबद्धापि क्षयं नैति प्रकृतिर्जगतामिव ॥ १० ॥**

यथाहि जगत्प्रकृतिरतीतकल्पपरम्पराविर्भूतविचित्रवस्तुप्रपञ्चा सती पुनरिदानीं परिक्षीणा पदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम् । तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्तापि नेदानीं परिहीयते प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते । इत्थं स्थितेऽपि

**संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।**

स्थितं ह्येतत् संवादिन्यो मेधाविनां बुद्धयः । किं तु

**नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ११ ॥**



१. 'इयं गाथा सर्वपुस्तकेष्वस्फुटैव. २. 'वाच्यार्थानां निबन्धनम्' ग.

कथमिति चेत्,

**संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत् ।**
**आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम् ॥ १२ ॥**

संवादो हि काव्यार्थस्योच्यते यदन्येन काव्यवस्तुना सादृश्यम् । तत्पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत्तुल्यदेहिवच्च त्रिधा व्यवस्थितम् । किंचिद्धि काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बः प्रतिबिम्बकल्पम् । अन्यदालेख्यप्रख्यम् । अन्यत्तुल्येन शरीरिणा सदृशम् ।

**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।**
**तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत्कविः ॥ १३ ॥**

तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना । यतस्तदनन्यात्म तात्त्विकशरीरशून्यम् । तदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तुच्छात्मत्वेन त्यक्तव्यम् । तृतीयं तु कमनीयं शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना । नहि शरीरी शरीरिणान्येन सदृशोऽप्येक एवेति शक्यते वक्तुम् । एतदेवोपपादयितुमुच्यते—

**तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।**
**वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥१४॥**

तत्त्वस्य सारभूतस्यात्मनः सद्भावेऽन्यस्य पूर्वस्थित्यनुयाय्यपि वस्तु भातितराम् । पुराणरमणीयच्छायानुगृहीतं हि वस्तु शरीरवत्परां शोभां पुष्यति । न तु पुनरुक्तत्वेनावभासते । तन्व्याः शशिच्छायमिवाननम् । एवं तावत्संवादानां वाक्यवेदितानां काव्यार्थानां विभक्ताः सीमानः ।

१. 'अप्यन्य' ग. २. 'देहवच्च' ग. ३. 'देहवच्च' ग. ४. 'अपि ससंवादं काव्य' क-ख. ५. 'समुदायरूपाणां वाक्यार्थानां' ग.

पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोष इति प्रतिपादयितुमुच्यते—

अक्षरादिरचनेव योज्यते[1] यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति का[2]व्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति १५

नहि वाचस्पतिनाप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं शक्यन्ते । तानि तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति। तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्त्वानि । तस्मात्

यदपि तदपि रम्यं यत्र लोकस्य किंचि-
त्स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते ।
अनुगतमपि पूर्वच्छायया वस्तु तादृ-
क्सुकविरुपनिबध्नन्निन्द्यतां नोपयाति ॥ १६ ॥

यदपि तदपि रम्यं काव्यशरीरं यल्लोकस्य किंचित्स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते स्फुरणेयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते तदनुगतमपि पूर्वच्छायया वस्तु तादृक् सुकविर्विवक्षितव्यङ्ग्यवाच्यार्थसमर्पणसमर्थशब्दरचनारूपया बन्धच्छाययोपनिबध्नन्निन्द्यतां नैव याति। तदित्थं स्थिते—

प्रतायन्तां वाचो निमितविविधार्थामृतरसा
न वादः[3] कर्तव्यः कविभिरनवद्ये स्वविषये[4] ।
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः
सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥ १७ ॥

सन्ति नवाः काव्यार्थाः परोपनिबद्धार्थविरचने न कश्चित्कवेर्गुण



१. 'योक्ष्यते' ग. २. 'काव्यं' ग. ३. 'साद' ग. ४. 'सविषये' ग.

इति भावयित्वा परस्वादानेच्छाविरतमनसः सुकवेः सरस्वत्येषा भगवती यथेष्टं घटयति वस्तु । येषां सुकृतिनां कवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिस्तेषां परोपरचितार्थपरिग्रहनिःस्पृहाणां स्वव्यापारो न क्वचिदुपयुज्यते । सैव भगवती सरस्वती स्वयमभिमतमर्थमाविर्भावयति । एतदेव[1] हि महाकवित्वं महाकवीनामित्योम्[2] ।

नित्याक्लिष्टरसाश्रयोचितगुणालंकारशोभाहृतो
　यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते ।
काव्याख्येऽखिलसौख्यधाम्नि[3] विबुधोद्याने ध्वनिर्दर्शितः
　सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम् ॥

सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्त-
　कल्पं मनःसु परिपक्वधियां यदासीत् ।
तद्व्याकरोत्सहृदयोदयलाभहेतो-
　रानन्दवर्धन इति प्रथिताभिधानः ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके[4] चतुर्थ उद्द्योतः ।

समाप्तोऽयं ग्रन्थः ।

---

१. 'एवमिह' क-ख. २. क-ख-पुस्तकयोरोमित्यस्मादनन्तरं 'इत्यानन्दवर्धनाचार्यविरचिते सहृदयालोके काव्यालंकारे ध्वनिप्रतिपादने चतुर्थ उद्द्योतः समाप्तः' इत्यस्ति तदनन्तरं नित्येत्यादिश्लोकद्वयम्. ३. 'सौख्यदायिनि बुधोद्याने' ग. ४. 'सहृदयालोकनाम्नि काव्यालंकारे' ग.

# ध्वन्यालोकस्य श्लोकानुक्रमणी ।

---

# विक्रेयाणि संस्कृतपुस्तकानि।

| | मू. रू. | डा. |
|---|---|---|
| अद्भुतदर्पणनाटकम्—श्रीमहादेवकविविरचितम्. ... | ॥॥ | ८० |
| अभिज्ञानशाकुन्तलनाटकम्—कालिदासकृतं—राघवभट्टकृत-अर्थद्योतनिकाटीकासहितम्. ... ... ... ... ... | १॥ | ।० |
| अनर्घराघवनाटकम्—श्रीमुरारिकृतं, रुचिपत्युपाध्यायकृत-टीकासहितम्.... ... ... ... ... ... ... | २ | ।० |
| उत्तररामचरितम्—महाकविश्रीभवभूतिप्रणीतं, वीरराघवकृतया व्याख्या समेतम्. ... ... ... ... ... ... | १ | ८० |
| उन्मत्तराघवप्रेक्षाणकम्—भास्करकविविरचितम्. ... | ८≡ | ८० |
| कर्पूरमञ्जरीसट्टकम्-श्रीराजशेखरकृतं, वासुदेवकृतटीकासहितं बालभारतनाटकं च ... ... ... ... ... | १ | |
| जीवानंदम्—आनंदरायमखिप्रणीतम्. ... ... ... | ॥॥ | |
| कर्णसुन्दरी नाटिका—महाकविश्रीबिह्लणकृता. ... ... | ॥ | ८० |
| चैतन्यचन्द्रोदयं नाटकम्—श्रीकविकर्णपूरविरचितम्. ... | १। | |
| प्रसन्नराघवं नाटकम्—श्रीजयदेवकविविरचितम्. ... | ॥॥≡ | ८० |
| मृच्छकटिकं नाटकम्—पृथ्वीधरकृतया व्याख्यया समेतम्. | १। | |
| मालतीमाधवं नाटकम्—भवभूतिकृतं, त्रिपुरारिकृतटीकया, जगद्धरकृतटीकया च सहितम्. ... ... ... ... | २। | |
| मालविकाग्निमित्रं नाटकम्—कालिदासकृतं, काटयवेमकृत-टीकासहितम्. ... ... ... ... ... ... | ॥॥ | ८० |
| रत्नावली नाटिका—श्रीहर्षदेवकृता, गोविन्दकृतटीकासहिता. | १। | |
| रुक्मिणीपरिणयं नाटकम्-श्रीरामवर्मवञ्चियुवराजकृतं.... | ।≡ | ८० |
| लटकमेलकप्रहसनम्—शंखधरविरचितम्. ... ... | ।‑ | ८० |
| विद्यापरिणयः—आनन्दरायमखिविरचितः. ... ... | ॥‑ | ८० |
| विदग्धमाधवम्—(नाटकं) श्रीरूपगोस्वामिप्रणीतम्. ... | १। | ।० |
| पार्वतीपरिणयनाटकम्—महाकविबाणभट्टप्रणीतम्. ... | ।‑ | ८० |

पाण्डुरङ्ग जावजी—निर्णयसागराध्यक्षः,



पो०—कालबादेवी, मुंबई.